तर्पणं वैश्वदेवादिपञ्चयज्ञविधिस्ततः[1] ॥
भोजनं पल्लवोपेतं कृत्यं यद्भोजनोत्तरम्[2] ।
सपल्लवं रात्रिकृत्यं पर्वकृत्यमनन्तरम् ॥
तिथिकृत्यं च कान्तारदीपदानविधिस्तथा[3] ।
गोशुश्रूषा वृषोत्सर्गः पुराणश्रवणे विधिः ॥
इति लक्ष्मीधराख्येन वर्ण्यते शुद्धबुद्धिना ।
चतुर्दश[4] च पर्वाणि काण्डे [5]नैयतकालिके ॥

1 स्तथा—ना.
2 रम् । तिथिकृत्यं—ना.
3 ततः for तथा—ज.
4 शार्यत्रपर्वाणि—ना ; चतुर्दशात्र पर्वाणि for चतुर्दश च पर्वाणि—ज.
5 नियतका—ना ; नैयति for नैयत—ज.

# अथ[1] नियतकालकृत्यानि

तत्र दक्षः[2]

उक्तं कर्म क्रमो नोक्तो न कालस्त्वत[3] एव हि ।
द्विजानां तु हितार्थाय दक्षस्तु[4] स्वयमब्रवीत् ॥
प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिने दिने ।
तत्सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम्[5] ॥
उदयास्तमनं[6] यावन्न विप्रः क्षणिको भवेत् ।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः ॥
स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः ।
अज्ञानादथवा [7]लोभात्स्यक्तेन पतितो भवेत् ॥
दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते ।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥
षष्ठे च सप्तमे चैव त्वष्टमे च पृथक् पृथक् ।
विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषतः[8] ॥

1 त्र—ना.
2 वी. मि. आ., p. २.
3 स्त्वत एव हि इति—ब, ना, द; स्त्वत एव च इति—ज.
4 दक्षो वै धर्ममब्रवीत्—ना.
5 द्विजानां परमं हितम्—वी. मि. आ., ९.
6 ज, द and वी. मि. आ., ९ ;—स्तमयं for स्तमनं.
7 लोभात्स तेन—ज, द, वी. मि. आ., ९.
8 षतः । उत्थायावश्यकं कृत्वा कृतशौचस्समाहितः ।
पूर्वां सन्ध्यां जपंस्तिष्ठेत्स्वकाले चापरां चिरम् ॥
क्षणिकोत्र शास्त्रार्थगतव्यापाररहितः—द.

'उक्तं कर्म' मन्वादिभिः। क्रमकालौ तु नोक्तौ। '[1]अत एव' [2]एतस्मात् कारणात्, द्विजानां हितार्थाय[3] दक्षस्तदुभयमुक्तवान्[4]। '[5]क्षणिको'ऽत्र [6]शास्त्रानुमतव्यापाररहितः[7]। 'अन्यैरगर्हितैः' अनिषिद्धैः दृष्टार्थैः। 'स्वकं कर्म' स्ववर्णाश्रमविहितम्। 'परित्यज्य' चिरकालं [8]त्यक्त्वेत्यर्थः। '[9]दिवस'शब्दोऽत्र उषःकालादिप्रदोषपर्यन्त[10]-कालपरः, अजहत्स्वार्थलक्षणया। दक्षेणैव '[11]दिवसस्ये'त्यभिधाय[12] उषःकालोपक्रमं प्रदोषपर्यन्तं कृत्याभिधानात्[13]॥

[14]मनुः—[४, ९३]

> [15]उत्थायाऽऽवश्यकं [16]कृत्वा कृतशौचः समाहितः।
> पूर्वां संध्यां जपंस्तिष्ठेत् स्वकाले चापरां चिरम्॥

1 एत एव एतस्मादेव कारणात्—ना.

2 तस्मादेव कारणात् for एतस्मात् कारणात्—ज.

3 हिताय for हितार्थाय—ज.

4 स्तत्स्वयमुक्तवान्—ना; 'उक्तं कर्म' इत्यारभ्यैतत्पर्यन्तो भागः मिकोशे नास्ति, परं तत्स्थाने 'उत्थायावश्यक' मित्यग्रिमपृष्ठस्थो मानवश्लोको लिखितः। एवं 'ब' कोशेऽपि.

5 क्षणिकः शास्त्रानुमतव्यापारशून्य इति कल्पतरुणा व्याख्यातम्। अन्ये तु क्षणिकोऽत्र लोकशास्त्रगर्हितव्यापारवान्। शास्त्रगर्हितः परस्वहरणादिः। लोकगर्हितः जलताडनादिः—वी. मि. आ., १०.

6 शास्त्रार्थगत इति—मि, ब and द; शास्त्रानुगत इति—ज.

7 शून्यः—ना.

8 परित्यज्येत्यर्थः for त्यक्त्वेत्यर्थः—ज, द.

9 Reproduced by वी. मि. आ., ११.

10 प्रदोषान्त—मि, ब, द; प्रदोषान्तं—ना.

11 सेत्यभिधाय—ना.

12 उक्त्वा उषःकालोपक्रमप्रदोषान्तकृत्याभिधानात् इति—मि, ब, द.

13 नात्। आवश्यकमिह मूत्रपरीषत्यागः—द.

14 मिकोशे श्लोकोऽयमत्र न दृश्यते.

15 उत्थायव—ना.

16 गत्वा for कृत्वा—ज.

[1]'आवश्यकं' [2]मूत्रपुरीषोत्सर्गः । '[3]समाहितः' नियतचित्तः[4] । 'अपरां' पश्चिमां संध्याम् । 'चिरं' नक्षत्रोदयादूर्ध्वमपि । एतच्च निरग्निविषयम् । साग्नेर्नक्षत्रोदयादर्वागेव होमविधिनात्[5] संध्याकर्मसमाप्तेः ॥

1 Reproduced by वी. मि. आ., ११.

2 आवश्यकमिह मूत्रपुरीषत्यागः—मि, ब.

3 समाहित: समाहितचित्तः—ना.

4 संयतचित्तः for नियतचित्तः—ज.

5 नासंध्या—ना.

॥ १ ॥

# दन्तधावनम्[1]

याज्ञवल्क्यः—[१, ९८]

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातःसंध्यामुपासीत दन्तधावनपूर्विकाम्[2] ॥

[3]दक्षः

उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् ।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥

'उषःकाल'श्च लोहितदिगुपलक्षितकालात्[4] [5]प्रागीषद्दिक्प्रकाशवान् कालः । 'यथार्थवत्' [6]यथाविहितपादशौचकं मृज्जलादिसंख्यावदित्यर्थः[7] ॥

वृद्धशातातपः

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात्सर्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥

1 वी. मि. आ., १२०-१३३.

2 पूर्वकमिति—बि ; पूर्वकाम्—ना.

3 दक्ष इति नास्ति—मि, ब, ज, द.

4 उपलक्षणं for उपलक्षित—ज.

5 षत् प्रकाश—ना.

6 यथाविहितशौचोत्पादकमिति—मि, ब, द ; यथाविहितशौचा याद्दक्मृज्जलादि संख्या वा तदित्यर्थः—इति ज ; यथाविहितशौचापादकमृज्जलादि—ना.

7 अतः परं 'दन्तधावनं' दन्तमलापकर्षणमित्यधिकं—मि, ब, द.

'[1]अप्रयतः' अशुचिः। 'भक्षयेदि'ति दन्तसंबन्धाद्गौणमभिधानं[2] पूर्वोत्तरकालाचमनरूप[3]भक्षणधर्मप्राप्त्यर्थम् ॥

[4]अत्र **यमः**[5]

> आम्र[6]पौना[ला]शबिल्वानामपामार्गशिरीषयोः।
> भक्षयेत्प्रातरुत्थाय वाग्यतो दन्तधावनम् ॥
>
> '[7]पौना[ला]शः' आम्रातकवृक्षः[8] ॥

[9]**हारीतः**

काले [10]पलाशकोविदारश्लेष्मातक[11]तिल्वकशाकवृक्षनिर्गुण्डीशिखण्डीवेणुवर्जम्। प्लक्षमाषकबदरीकरञ्जशमी-[12]शाकानित्येके। दधित्थ[13]हरीतक्यश्च [14]कर्णशालामलकानित्यपरे। बिल्वखादिराम्रपौना[ला]श[15]शिरीषापामार्गाणामेकतम[16]मनार्द्रं नातिशुष्कं [17]नातिस्थूलमापोथिताग्र[18]मनौष्ठग्रन्थ्युदङ्मुखो वाग्यत आसीनो दन्तधावनं भक्षयेत् ॥

1 Reproduced by वी. मि. आ., १२१.
2 पूर्वोत्तराचमनरूपभक्षणधर्मप्राप्त्यर्थम्—इति ज, द.
3 भक्षण—ना; लक्षण—उ.
4 अथ यमः—ना; अत्र यम इति—दकोशे नास्ति.
5 नारदीशिक्षा इति—वी. मि. आ., १२३.
6 पौलाल इति—ब, द.
7 Reproduced by वी. मि. आ., १२३.
8 तन्नक्षः—ना.
9 वी. मि. आ, १२३; पौलालः—मि, ब, द.
10 'काले' इति नास्ति—ना.
11 बिल्वकः—वी. मि. आ., चिल्वक इति—मि, ब, द; बिल्वशाक इति—ज, ना.
12 शिंशपा इत्येक इति—मि, ब, ज, द, वी. मि. आ; शिंशिप इत्येके—ना.
13 हरीतिक्यश्च कर्णशालामलकानीत्य—ना.
14 कर्णपालाशानिति—मि, ब; कर्णपलाशामलकानित्यपरे—द.
15 पौलाल इति—मि, ब, द; पौलास—ना.
16 अन्यतममिति—मि, ब, द, वी. मि. आ.
17 नातिस्थूलं नातिशुष्कमिति—मि ब, द.
18 मनोष्ठग्रन्थ्युद—ना.

'[1]काले' उषःकाले। 'कोविदारः' श्वेतपुष्पः[2] काञ्चनाल[र]सदृशः। 'श्लेष्मातकः' बहुवारः। 'तिल्वकः[3]' चिल्लकः। 'शाकवृक्षः' [4]शाकवनः इति लोके प्रसिद्धः। 'निर्गुण्डी[5]' मयूरशिखा सिन्दुवारः। 'शिखण्डी' शिखण्डिसंज्ञः। कण्टकिगुल्म इत्यपरे[6]। 'दधित्थः' कपित्थः। 'शालः' शङ्कुवृक्षः। 'एके' 'अपरे' [7]इत्युभयत्र वर्जयित्वेति शेषः। आर्द्रमत्र सद्यश्छिन्नम्, ततोऽन्यदनार्द्रम्। नातिशुष्कमित्यभिधानात् प्रक्षालनस्य विहितत्वाच्च[8] आर्द्रत्वमात्रस्यावश्यंभावात्। 'आपोथिताग्रं' [9]ईषच्चूर्णिताग्रम्। 'अनौष्ठग्रन्थि' [10]ओष्ठसमीपे ग्रन्थिर्यस्मिन् नास्ति तदनोष्ठग्रन्थि॥

<u>विष्णुः</u>—[६१, १-१६]

न [11]पालाशं दन्तधावनं स्यात्। न श्लेष्मातकारिष्टकबिभीतकधवधन्वनजम्[12]। न च कोविदारशमीपीलुपिप्पलेङ्गुद-

1 Reproduced by वी. मि. आ., १२३-१२४.

2 कोयिदार इति प्रसिद्धः इति—मि, द.

3 तिल्वकः चिल्लकः—मि, ब, द; बिल्वकः तिलकः—ना.

4 सगवन इति लोके प्रसिद्धः—मि, ब, द; सागवन इति—ज, ना.

5 निर्गुण्डी' 'सिन्दुवारः'। 'शिखण्डी' मयूरशिखा शिखण्डिसंज्ञः—मि, ब, ज, द; निर्गुण्डी सिन्दुवारकः। शिखण्डी मयूरशिखा शिखण्डसंज्ञः—ना.

6 वेणुनिषेधस्तदितरपर इति—मि, ब, द.

7 इत्युभयत्रापि त्यक्त्वेति शेषः इति—मि, ब, द.

8 आर्द्रत्वमात्रावश्यंभावादिति—मि, ब; आर्द्रमात्रावश्यंभावात्—द.

9 ग्रं अचूर्णिताग्रं—ना.

10 यस्य ग्रन्थिर्नोष्ठं स्पृशति तदिति—मि, ब, द.

11 अपालाशं इति—मि, ब, द.

12 धवधन्वनं जनकोविदारशमीपिल्वपिप्पलीङ्गुदगुग्गुलु, न च बर्बरनिर्गुण्डीशिग्रुतिल्वकतिन्दुकजं न पारिभद्राम्लिकामोचक्याशाल्मलिजं इति—मि, ब.

गुग्गुलुजम् । न च बन्धूकनिर्गुण्डी[1]शिग्रु[2]तिल्वकतिन्दुकजम् । न पारिभद्रा[3]म्लिकामोचक्याशाल्मलीशणजम् । न मधुरम् । नाम्लम् । नोर्ध्वशुष्कम् । न ससुषिरम् । न पूतिगन्धि । [4]न पिच्छिलम् । न दक्षिणापराशाभिमुखः । अथादुदङ्मुखः प्राङ्मुखो वा । वटासनार्क[5]खदिरकरञ्जकरवीर[6]सर्जारिमेदापामार्ग[7]मालतीककुभबिल्वानामन्यतमम्[8] । काषायं[9] [10]कटुकं तिक्तं वा[11] ।

> [12]कनीन्यग्रसमस्थौल्यं[13]सकूर्चं द्वादशाङ्गुलम् ।
> प्रातर्भुक्त्वा[14] च यतवाग्भक्षयेद्दन्तधावनम् ॥

'[15]अरिष्टको'ऽत्र [16]रीठीवृक्षः[17] । 'धन्वनः[18]' धामिण इति प्रसिद्धः । 'पीलुः' गुडफलः[19], यश्च पीलुरिति पश्चिम-

1 शिक्ष—क.
2 चिलुक—क.
3 म्लीक—क.
4 नापिच्छिलं—उ.
5 र्ककरंजखदिरक—क, द.
6 सपर्यापामार्ग—ना.
7 र्गा—क.
8 मकषायारिक्तं कटुकं वा कनी—क.
9 कषायतिक्तं कटुकं वा—ना.
10 कटुतिक्तं वा—ब, द.
11 वा । तथा । कनी—ना.
12 कनिष्ठाग्रसमस्थौल्यं—ब, ज, द.
13 ल्यं द्वा—क.
14 भूत्वा—ब, द.
15 अरिष्टक: अरीटावृक्ष:—क.
16 रीणवृक्ष:—ना.
17 हरिठा इति प्रसिद्ध:—ब, द.
18 धन्विनः—क ; अन्विन: धामन इति प्र—ना.
19 पिल्व: गुडफल:—ब, द ; पीलुः गुलफल:—उ.

देशे प्रसिद्धः। 'इङ्गुदः' इङ्गुवाकः कण्टकिवृक्षः। 'पारिभद्रः' [1]फलहट्ट इति प्रसिद्धः। '[2]अम्लीका[3]' [4]तिन्तिली। 'ऊर्ध्वशुष्कं' [5]शुष्कमेव वृक्षे। 'ससुषिरं' छिद्रयुक्तम्[6]। '[7]असनः' आसन इति प्रसिद्धः[8]। '[9]अरिमेदः[10]' विट्खादिरः। 'मालती' जाती। 'काषायं' तिक्तं कटुकं वा। अविहिताप्रतिषिद्धमन्यदपि बोद्धव्यम्। '[11]सकूर्चं' चूर्णिताग्रम्। '[12]प्रातर्भुक्त्वा चे'त्यनेनोक्तस्य दन्तधावनस्य कालद्वये करणमित्युक्तम्[13]॥

[14]छन्दोगपरिशिष्टे कात्यायनः—[१, ७, १३८–१४०]

नारदाद्युक्तवार्क्षेयमष्टाङ्गुलमपाटितम्।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत्॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्[15]॥

1 फरहद—क; पालदह इति—ना.

2 'मोचकया' कदली—ब.

3 आम्ली—क; आम्लिका—ना; अम्लिका—द.

4 तिन्त्रिणी—क.

5 वृक्ष एव शुष्कम्—ब, ज, क, ना, द.

6 छिद्रवत्। 'अपराशा' अत एवापरा पश्चिमेति यावत्—द, ब; च्छिद्रमुक्तं—क.

7 असनरास एव प्र अरिमेदः रीमवृक्षः मालती—ना.

8 प्रसिद्धिः—क.

9 'सर्जः' सालः—द, ब; अरिमेदः विट्खादिरः—ज.

10 अरिमेदः खदिरः—द, उ.

11 सकूर्चं कूर्चिकाग्रं चूर्णिताग्रं—ना.

12 प्रातर्भूत्वा चेत्यनेनोक्तस्य दन्तधावनस्य कालद्वयकरणमिति यतिविषयम्। कात्यायनः—ब, द.

13 Reproduced by वी. मि. आ., १२५.

14 वी. मि. आ., १२१.

15 नम्। मन्त्रमाह—आयुर्बलं—ना,

आयुर्बलं यशो वर्चः प्रजाः पशु वसूनि च ।
ब्रह्म प्रज्ञां च मेधां च [1]त्वन्नो धेहि वनस्पते ॥

'नारदाद्युक्तवार्क्षेयं' [2]नारदादिशिक्षाभिहितवृक्षसंभवम् । तथा च [3]नारदशिक्षा ॥

आम्रपौनाश[4]बिल्वानामपामार्गशिरीषयोः ।
[5]वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥
खदिरश्च [6]करञ्जश्च करवीरकदम्बयोः ।
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥ इति ।

'परिजप्य मन्त्रेणे'ति, मन्त्रेणाऽभिमन्त्र्य दन्तधावनं भक्षयेदित्यर्थः ।

यमः[7]

आसनं शयनं यानं पादुके दन्तधावनम् ।
वर्जयेद्भूतिकामस्तु पालाशं नित्यमात्मवान् ॥

[8]न पालाशे 'पादुके' पादपीठे,[9] आसनं, शयनं,[10] यानं, दन्तधावनं,[11] वा कुर्यात् । 'यानं' शकटादि ॥

1 त्वन्नो—द, ब; त्वन्नो देहि वनस्पते—ज, क; तन्नो—उ.
2 नारदादिशिक्षाग्रन्था—द, ब, ना.
3 वी. मि. आ., १२३.
4 पौलाल—द, ब; पैनास—क.
5 धाग्यतः—क; प्रयतः—ज.
6 कदम्बश्च करवीरकरंजयोः—ना; कदम्बश्च करञ्जश्च वटस्तथा । तिन्तिली च वेणुपृष्ठश्चाम्रनिम्बो तथैव च । अपामार्गश्च बिल्वश्च अर्कश्चौदुम्बरस्तथा । एते प्रशस्ताः कथिताः दन्तधावनकर्मणि । परिजप्य च मन्त्रेणेति—ब, द.
7 वी. मि. आ., १२७.
8 न पलाशे—ज.
9 पीठं—क, ना.
10 नं दन्त—क.
11 नं कुर्या—ना; नं वा न कुर्यात्—द.

उशना

[1]नाङ्गुलिभिर्दन्तान् प्रक्षालयेत्[2] ॥

विष्णुः—[६१, १७]

प्रक्षाल्य [3]भङ्क्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ।
अमावास्यां च[4] नाश्नीयाद्दन्तकाष्ठं कथंचन ॥

नरसिंहपुराणे—[५८, ४६—५१]

मुखे पर्युषिते नित्यं [5]भवत्यप्रयतो नरः ।
तस्माच्छुष्क[6]मथार्द्रं वा भक्षयेद्दन्तधावनम् ॥
खदिरश्च कदम्बश्च करञ्जश्च वटस्तथा ।
[7]तिन्तिली[8] वेणुपृष्ठं च आम्रनिम्बौ[9] तथैव च ॥
अपामार्गश्च बिल्वश्च अर्कश्चोदुम्बरस्तथा ।
एते प्रशस्ताः कथिता दन्तधावनकर्मणि ॥
[10]दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम् ।
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥
[11]अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते ।
प्रादेशमात्रमथवा तेन दन्तान्विशोधयेत् ॥

1 लाङ्गुलीभिः—द, ब, ज, क, ना.
2 धावयेत्—क.
3 भुक्त्वा—द, ब, क.
4 तु—ना; अमावास्यां च—द; अमावास्यायां च—उ.
5 भवेदप्रयतो नरः—क; यतोऽपूतो भवेन्नरः—इति मुद्रितपाठः
6 क—क.
7 This line is omitted in the printed edition.
8 तिंन्त्रिणीवेत्रपृ—क.
9 बिल्वौ—ना.
10 दन्तधावनकाष्ठं च वक्ष्यामि तत्प्रशस्तताम्—इति मुद्रितपाठः
11 षष्ठाङ्गुलेन—ज.

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥
अलाभे [1]दन्तकाष्ठानां प्रतिषिद्धे [2]तथा दिने ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥

[3]'वेणुपृष्ठं' वंशस्य[4] त्वग्भागः। एतेन 'वेणुवर्जमि'ति[5] हारीतोक्तमितर[6]वंशावयवविषयं बोद्धव्यम् । 'तस्माच्छुष्क[7]मथार्द्रं [8]वे'त्यभिधानात् शुष्कप्रतिषेधः '[9]नोर्ध्वशुष्कमि'ति [10]विष्णुवचनादूर्ध्वशुष्कविषयो बोद्धव्यः ॥

महाभारते[11]

वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि च वर्जयेत्[12] ॥

'पर्वस्वि'ति । पर्वाण्यत्र—

चतुर्दश्यष्टमी चैव [13]त्वमावास्याथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥

इति विष्णुपुराणे[14] [३, ११, ११८] प्रोक्तानि ॥

1 दन्तकाष्ठानां, द. ब—क; वी. मि. आ., दन्तकाष्ठस्य—ना.
2 च तद्दिने—इति मुद्रितपाठः
3 वेत्र—क.
4 शत्वग्भा—ना, द.
5 वेत्रवर्ज्यमिति—क.
6 वंशावयव—ब, ना, द; वंश्यावयव—उ.
7 क्त—क.
8 च—क, ना.
9 नोर्ध्वशुष्कविषयो बोद्धव्यः—क.
10 विष्णुस्मरणा—ना.
11 वी. मि. आ., १२६.
12 येत् । पर्वाण्यत्र—ना.
13 तथामा चाथ पूर्णिमा—इति मुद्रितपाठः
14 णोक्तानि—क, ना, द.

तथा[1]

प्रक्षाल्य हस्तौ पादौ च मुखं च सुसमाहितः ।
[2]दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः[3] ॥
तिक्तं कषायं [4]कटुकं सुगन्धि[5] कण्टकान्वितम् ।
[6]क्षीरिणो वृक्षगुल्माद्वा भक्षयेद्दन्तधावनम् ॥
त्याज्यं सपत्रमज्ञातमूर्ध्वशुष्कं च पाटितम्[7] ।
त्वग्विहीनं ग्रन्थिमुखं[8] तथा पालाशशांशपम्[9] ॥
[10]ऋजुं वितस्तिमात्रं तु[11] [12]कीटाग्निभिरदूषितम् ।
प्राङ्मुखश्चोपविष्टस्तु भक्षयेद्वाग्यतो नरः ॥
प्रक्षाल्य च शुचौ देशे[13] दन्तधावनमुत्सृजेत् ।
पतितेऽभिमुखे सम्यक् [14]भोज्यमाप्नोत्यभीप्सितम्[15] ॥

'दक्षिणं बाहुमुद्धृत्ये'ति, उपवीतं कृत्वेत्यर्थः । 'गुल्माः' [16]अस्कन्धा मल्लिकादयः । '[17]शांशपं' शिंशपा-

1 वी० मि. आ., १२५.
2 दक्षिणस्वाङ्गसंस्कृत्य—क.
3 रात्ततः—क ; रन्ततः—ना ; राततः—द.
4 कटुकं इत्यारभ्य A.S.B. कोशे उपलभ्यते ; कषायकटुक—ना.
5 न्धि—उ.
6 क्षीरिणं वृक्षगुल्माद्यं—ब, द.
7 अर्धमिदं 'ब' कोशे नास्ति—द.
8 ग्रन्थियुतं—ब, ना, द.
9 शैशिपं—ना.
10 वनजं वितस्ति—क.
11 न—ब, ना, द.
12 कीटाग्निरभिदूषितम्—ना.
13 देशे, सुसमाहित एकचित्त: । दक्षिणं बाहुमुद्धृत्येति—द.
14 भोज्यप्रोत्यभीप्सि—क, ना ; भोज्यमाप्नोति भीप्सितम्—उ.
15 श्लोकोऽयं 'ब' कोशे नास्ति । एतदनन्तरं 'सुसमाहित: एकचित:' इति वर्तते ।
16 अक्षरा—क.
17 शैशिपं शिंशपावृक्षोद्भवम्—ना.

वृक्षोद्भवम् । अत्र च [1]शुचित्वापादके दन्तधावने [2]दन्तकाष्ठविशेष[3]नियमविधिनाऽर्थान्निरस्तेऽपि[4] [5]काष्ठान्तरे, [6]पुनर्निषेधो मुख्यालाभे प्रतिनिधित्वेनापि तदुपादाननिरासार्थम् । यत्तु विहितप्रतिषिद्धं तस्य निषेधसंबन्धेन केवल-[7] विहितापेक्षया[8] किंचिन्न्यूनत्वात्, केवलविहितालाभ उपादानम् । [9]एतस्याप्यसंभवे[10]ऽविहिताप्रतिषिद्धमुपादेयम् । केवलनिषिद्धं तु सर्वथा नोपादेयम् । द्वादशगण्डूषैरेव[11] तत्र मुखशुद्धि[12]रापादनीयेति[13] ॥

हारीतः

दन्तधावनं भक्षयेदविरक्तं[14] सोदकमेकान्तमुत्सृज्य स्नातो वाग्यतः शुचिरहत शुक्लवासा अग्निहोत्रादिदेवतार्थान् कुर्यात् ॥

1 शुद्धित्वापादके—ब, द.

2 धन्तधावनकाष्ठवि—ना.

3 नियमविधाना । अर्थान्निरस्तेपि काष्ठान्तरे यद्विशेषेण काष्ठान्तरनिषेधनं तस्मान्मौद्गचरुविधिना बाधितेषु माषादिषु अयज्ञिया वै माषा इति पुनर्निषेधवत् मुख्यालाभे प्रतिनिधित्वेनापि तदुपादाननिरासार्थम्—ना.

4 शींशप शिंशपो वृक्षोद्भ—क.

5 काष्ठान्तरे यद्विशेषेण काष्ठान्तरनिषेधकं तन्मौद्गचरुविधिना बाधितेषु माषादिषु अयज्ञिया वै माषा इति पुनर्निषेध . . . . . . . . . . . . . . . . . . न तदुपादाननियमार्थे—क.

6 यदेतद्विशेषकाष्ठान्तरे पुनर्निषेधः . . . . . . . . चरुविधिना बाधितेषु माषादिषु- "अयज्ञिया वै माषा" इति पुनर्निषात्—ब, द.

7 लवि—क ; लं वि—उ.

8 क्षाया—क.

9 एतस्याऽप्यलाभे—ब, द.

10 वे . . . . . . . . . . . मुपादेयं द्वादशगं—क.

11 व मुखशु—ना.

12 रुप्रोदनीयेति—क ; उत्पादनीयेति—ब ; द.

13 Reproduced by वी. मि. आ., १२६.

14 रिक्तं—क,

'अविरक्तं[1]' सरसम्[2]। 'सोदकं' प्रक्षालितम्। 'अग्निहोत्रादिदेवतार्थान्' अग्निहोत्रादीन्, देवतार्थांश्च देवपूजादीन्॥

[3]इति भट्टहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते[4] कृत्यकल्पतरौ दन्तधावनपर्व[5]

1 रिक्तं—क.

2 सबलं—ब, क, द.

3 इति नास्ति—क; इति श्रीभट्टश्रीहृदयधरात्मजमहासान्धिविग्रहभट्टश्रीलक्ष्मीधर-विरचिते—ना; इति भट्टश्रीहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कल्पतरौ कृत्यकाण्डे प्रातः-कृत्यादिप्रथमः—द; इति भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीमल्लक्ष्मीधरविरचितेकृत्य-कल्पतरौ दन्तधावनपर्व—A.S.B.

4 'विरचिते कल्पतरौ कृत्यकाण्डे प्रातःकृत्यादि प्रथमः'—ब.

5 र्वः—ना.

|| २ ||

# अथ प्रातःस्नानम्

तत्र छन्दोगपरिशिष्टे[1] कात्यायनः[2]—[१, ७, १३७]

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान्प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत्[3] ॥

[4]तथा

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः ।
प्रातर्न तनुयात्स्नानं होमलोपो विगर्हितः ॥

'[5]यथाहनी'ति[6], यथेतिकर्तव्यतया मृदालम्भादिकया मध्याह्ने स्नानं कुर्यात् तथैव प्रातरपीत्यर्थः । 'अनातुरः' इत्यभिधानाच्चाऽऽतुरः स्ाननिमित्ता[7]ऽप्रायत्यरहितः, संमार्जनादिना शौचमापाद्य[8] संध्यां कुर्यात् । [9]दन्तधावनमधिकं

1 ष्टम् , कात्या—क, ना.

2 'कात्यायनः' इत्यतः परं नोपलभ्यते—A.S.B ; वी. मि. आ., १३४.

3 वित् । अल्प—क, ना.

4 वी. मि. आ., १३५.

5 एतत्साग्निविषयम् । यथाहनीति यया कर्त्तव्यतया—ब, द.

6 Reproduced by वी. मि. आ., १३४.

7 त्तात्ययरहितः—ना.

8 मुत्पाद्य—द.

9 वाक्यमिदं 'ब', 'द' कोशयोर्नास्ति.

प्रातः। 'गेहे चेदि'ति, [1]तत्प्रातःस्नानं यदि गृहे[2] केनचिन्निमित्तेन करोति, [3]तदा स्नानाङ्गमन्त्ररहितं तनुयात्, संक्षेपेण कुर्यादित्यर्थः। संक्षेपश्च योगियाज्ञवल्क्योक्तः[4] "तीर्थपरिकल्पनजलाभिमन्त्रणाचमन[5]मार्जनान्तर्जलस्नानाद्यघमर्षणसूक्तेन त्रिरावृत्तेने[6]"त्येवं[7]रूपः[8] ॥

[9]दक्षः

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवा रात्रौ प्रातःस्नानं विशोधनम् ॥
क्लिद्यन्ति च सुषुप्तस्य[10] इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमानि च ॥

1 ततः स्नानं—ब, द.

2 गेहे—ब.

3 तदा स्नानाङ्गमन्त्रेण आचमनमार्जनान्तर्जलजपस्नानाद्यघमर्षणसूक्तेन—ज ; तद्स्नाना—ना.

4 Compare वी. मि. आ., १३६.

स च संक्षेपो योगियाज्ञवल्क्येनाभिहितः । यथा—

योऽसौ विस्तरशः प्रोक्तः स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तदायं विधिरुच्यते ॥
स्नानमन्तर्जपं चैव तीर्थस्य परिकल्पना ।
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ॥
स्नानाचरणमेतत्तु समादिष्टं महात्मभिः ।
अन्यांश्च वारुणान् मन्त्रान् कामतः संप्रयोजयेत् ॥
यथाकालं यथादेशं ज्ञात्वा ज्ञात्वा विचक्षणः । इति.

5 मार्जनान्तर्जलजपस्नानान्यघमर्षण—क, ना ; मार्जनस्नानादि अघमर्षणसूक्तेन—ब, द.

6 नेत्यर्थः—ना.

7 व—क.

8 रूपं पद्मपुराणीयादि वा—ब, द.

9 वी. मि. आ., १३७–१३८.

10 जप्तस्य—क.

तथा

अस्नात्वा[1] नाचरेत् कर्म जपहोमादि किंचन।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभम्[2]।
सर्वमर्हति शुद्धात्मा[3] प्रातःस्नायी जपादिकम्॥

'[4]समतां यान्ती'ति, उत्तमान्यप्यङ्गानि[5] चक्षुरादीनि क्लेदसंपर्कादधमाङ्गतुल्यानि[6] भवन्ति। 'अस्नात्वा[7] [8]नाचरेदि'त्यत्र[9] हेतुः—'लालास्वेदसमाकीर्ण' इति। [10]यत इति शेषः। 'दृष्टादृष्टकरं' [11]दृष्टं मलापनयनादङ्गशुद्धिः[12]। अदृष्टं नित्यत्वेन[13] पापक्षयः॥

[14]विष्णुः—[६४, ४०-४२]

[15]स्नातोऽधिकारी भवति दैवे पित्र्ये[16] च कर्मणि।

1 अस्नाता नाच—ना.
2 हि यत् for शुभम्—ज; हि तत्—ना.
3 पूतात्मा—ब, ज, क, द.
4 Reproduced by वी. मि. आ., १३८.
5 उत्तमाङ्गानि—क.
6 अधमाङ्गतुल्यतां यान्तीत्यर्थः—ब, द.
7 अस्नाता—ना.
8 नाचरेत् . . . . . लाला—क.
9 इत्यत्र लालास्वेदसङ्कीर्ण इति हेतुत्वेनोक्तः—ब, द.
10 यदिति—द.
11 दृष्टमला—क.
12 मलापनयनादिद्वारा शुद्धिः—ब, द; मलापनयनद्वारा शुद्धिः—क.
13 त्वात्—ना.
14 मनुः—ब, द; विष्णुः—वी. मि. आ., १४१.
15 स्नातो ह्यधिकारी स्यात् दैवे पित्रे च कर्मणि—ना.
16 पैत्रे च—उ.

पवित्राणां तथा [1]जप्ये दाने च [2]विधिचोदिते ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्[3] ।
अम्मात्रेणाभिषिक्तस्य नश्यन्त इति धारणा ॥
याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

'[4]कालकर्णी' [5]दुःसहस्य रक्षसो दुहिता। 'दुर्विचिन्तितम्' अशुभचिन्तितम्[6]। 'अम्मात्रेण' उद्धृतेनानुद्धृतेन [7]वेत्यर्थः। 'धारणा' निश्चयः। 'याम्यं' [8]यमलोकभवम् ॥

[9]दक्षः

[10]संध्यास्नानमृगन्तेन[11] मध्याह्ने च ततः पुनः ॥
उपास्ते [12]यस्तु नो संध्यां ब्राह्मणो[13] हि विशेषतः ।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते[14] ॥

1 जाप्ये—ना.
2 विधिनोदिते—ब, ज, द.
3 दुर्विचिन्तनम्—ब, द.
4 Reproduced by वी. मि. आ., १४१.
5 दुस्सहदुहिता—ज, क ; दुस्सहसुता—ना.
6 चिन्तनं—ब.
7 वेति—द, ब, ज, ना ; इत्यर्थः—क ; चेत्यर्थः—उ.
8 यमभवम्—द.
9 तथा दक्षः—ब, द.
10 संध्यास्नानमृगन्तेन मध्याह्ने च ततः पुनः। वी. मि. आ., १३७.
11 सन्ध्यास्नानं प्रातरेव—द, ब ; सन्ध्यास्नानं प्रभाते च—ना.
12 नस्तु—ना.
13 णस्तु वि—ना.
14 संध्याकाले तु संप्राप्ते मध्याह्ने च ततः पुनः ।
उपास्ते यस्तु नो संध्यां ब्राह्मणो हि विशेषतः ॥
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते । वी. मि. आ., १४६.

[1]विष्णुः—[९०, २९]

य इच्छेद्विपुलान्भोगांश्चन्द्रसूर्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं [2]मासौ द्वौ माघफाल्गुनौ ॥

[3]यमः

प्रातःस्नायी च सततं मासौ द्वौ माघफाल्गुनौ ।
देवान्पितॄन् समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥
देवपितृसमभ्यर्चनं[4] तर्पणादिना ॥

विष्णुः—[८९, १-४]

मासः[5] कार्तिकोऽग्निदैवत्यः । अग्निश्च[6] सर्वदेवानां मुखम् । तस्मात्कार्तिके[7] बहिःस्नायी गायत्रीजपनिरतः [8]सकृदेव हविष्याशी वत्सरकृतात्पापात्पूतो भवति[9] ॥

कार्तिकं सकलं मासं [10]नित्यस्नायी जितेन्द्रियः[11] ।
जपन्हविष्यभुक् शान्तः[12] सर्वपापैः प्रमुच्यते ॥

[13]'जपन्' [14]आवश्यककृत्यान्तरवर्जिते काले । 'हविष्यं' "हविष्येषु यवा मुख्या" इत्यादिवचनबोधितम् ।

1 यमः—द, ब ; विष्णुः—वी. मि. आ., १४१.
2 द्वौ मासौ मा—क, ना, द.
3 वी. मि. आ., १४१–१४२.
4 समर्चनं—ब, ज, क, द.
5 मासका—क.
6 र्हि—ना ; ग्निस्सर्व—द.
7 कार्त्तिके मासि—ब, द.
8 सकृद्देवहविष्याशी—उ.
9 वत्सरकृतात्पूतो भवति पापात्—द.
10 प्रातस्नायी—ना.
11 यः । हवि—क.
12 हविष्यभुक् जपन्शान्तः—द ; दान्तः for शान्तः—वी. मि. आ.
13 Reproduced by वी. मी. आ., १४२.
14 अवश्यकृत्यान्तर्गतसावित्रीम् । प्रातःशब्दश्चात्र—द, ब ; जपन्नावश्यकं कृत्या—ना.

विष्णुस्मृतौ स्नानप्रकरणात्[1] प्रकरणान्तराधिकरणन्यायेन काम्यस्नानान्तरमिदम्। प्रातःशब्दश्चात्रोदयपूर्वकालवचनः। "[2]प्रातस्नाय्यरुणकरग्रस्तां प्राचीमवलोक्य स्नायात्" इति [3]विष्णु[६४, ९]वचनेन सर्वत्र प्रातःस्नाने तस्यैव कालस्य प्रापितत्वात्। यत्तु[4] "प्रातःकालो [5]मुहूर्तांस्त्रीन्" इति मत्स्यपुराणाद्युक्तं, तच्छ्राद्धविषयम्। एवं कार्तिके बहिःस्नानमपि काम्यम्। एतेन स्त्रीशूद्राणामप्यधिकारोऽस्तीति। एवं कार्तिके[6] बहिःस्नानं प्रातःकालेतरकालेऽपि तेनैव [7]न्यायेन काम्यं स्नानान्तरम्॥

[8]आपस्तम्बः [१, ३०, ६–९]

अथ स्नातकव्रतानि। पूर्वेण ग्रामान्निष्क्रमणप्रवेशानानि शीलयेदुत्तरेण वा। [9]सन्ध्ययोर्बहिर्ग्रामादासनं[10] वाग्यतश्च[11]। विप्रतिषेधे श्रुतिलक्षणं बलीयः॥

'[12]शीलयेत्' यथा [13]तच्छीलता [14]निष्पद्यते तथा

1 णात् प्रकरणान्तरस्नानात् प्रकरणान्तराधिकरण—ना.
2 प्रातःस्नानशीलोऽरुणताम्रां प्राचीमालोक्य स्नायात्—इति मुद्रितविष्णुस्मृतिपाठः
3 विष्णुवाक्यात्। यच्च प्रातःकालो—ब, द.
4 स्तु प्रा—क.
5 मुहूर्तमिति मत्स्यपुराणोक्तितः श्राद्धविषयं—क.
6 कबहिः—क.
7 'न्यायेन काम्यं स्नानान्तरम्' इत्ययं भागो नास्ति—ब, द.
8 वी. मि. आ., १४७.
9 सन्ध्ययोश्च बहिर्ग्रामात् आसनं—ब, ज, क, द.
10 दुपासनं—ना.
11 स्य—क, ना, उ.
12 Reproduced by वी. मि. आ., १४७–१४८.
13 तच्छीलं—ना.
14 निर्वपेत्—क.

कुर्यात्। 'विप्रतिषेधे'[1] श्रौतेन होमादिना सह विरोधे। श्रुतिलक्षणं श्रौतमेवानुष्ठेयत्वेन[2] बलीयः, न स्मार्तम् ॥

**दक्षः**[3]

सन्ध्याकर्मावसाने[4] तु स्वयंहोमो विधीयते।
स्वयंहोमे फलं यत्तु तदन्येन न जायते ॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ[5] विट्पतिः।
[6]एतैरेव [7]हुतं यत्तु तद्धुतं[8] स्वयमेव तु[9] ॥
'गुरुः' पित्रादिः। 'विट्पतिः' जामाता ॥

[10]**याज्ञवल्क्यः**—[१, ९९]

हुत्वाऽग्नीन् [11]सूर्यदैवत्यान् [12]जपेन्मन्त्रान्समाहितः।

[13]**नरसिंह्मपुराणे**—[५८, ५८-५९]

[14]पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य[15] यथाविधि।
गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम्[16] ॥

1 धेन—ना.
2 नुष्ठेयश्वेन—क.
3 वी. मि. आ., १४६.
4 संध्याकर्मवि . . . . . . स्व—क.
5 यश्च वि—क.
6 एतैरेव तु यद्धूतं तद्धुतं स्वयमेव हि—ना ; एभिरेव हुतं—वी. मि. आ.
7 कृतं यच्च तत्कृतं—ब, द.
8 तच्छुद्धं स्व—क.
9 हि—द, वी. मि. आ.
10 वी. मि. आ., १४८.
11 सूर्यमदित्यान्—ज ; देवत्यान्—उ.
12 जप्थेन्म—क.
13 वी. मि. आ., १४५ and १४७.
14 पूर्वां सन्ध्यामुपक्रम्य सनक्षत्रां यथाविधि—द.
15 मुपासीत य—क.
16 यावदृक्षाणि पश्यति—इति मुद्रितपुस्तके ; नम्। देवकार्य—ना.

ततश्चाऽऽवसथं प्राप्य होमं कुर्याद्विचक्षणः ।
[1]देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् ॥
देवकार्यस्य सर्वस्य [2]पूर्वाह्णस्तु विधीयते ।
देवकार्याणि पूर्वाह्णे मनुष्याणां तु मध्यमे ॥
पितॄणामपराह्णे तु[3] कार्याण्येतानि यत्नतः ।
[4]दिवसस्याद्यभागे तु सर्वमेतत्समाचरेत्[5] ॥

[6]'मङ्गलं' ब्राह्मणादि[7] वक्ष्यमाणं नारदोक्तम् । [8]यदेतद्देवकार्याद्युक्तं तत्सर्वं [9]दिवसस्याद्यभागेषु पूर्वाह्णस्य [10]प्रथमभागे [11]समाचरेदित्यर्थः ॥

[12]वराहपुराणे—[२११, १४-१५]

[13]उदयान्निःसृतं सूर्यं यस्तु भक्त्या नरो द्विज[14] ।

1 'देवकार्य' इत्यारभ्य 'समाचरेत्' इत्यन्तो भागः मुद्रितपुस्तके नोपलभ्यते.
2 पूर्वाह्नस्तु—ब ; पूर्वार्धस्तु—क.
3 च—द.
4 दिवसस्याद्यमे भागे—ना.
5 रेत् । गुरुः पित्रादिमंगलं—ना.
6 गुरुः पित्रादिः—ब, क, द.
7 दिवीक्षणं नार—ना.
8 यदेतत्तद्देव—क, ना.
9 दिवसस्याद्यमे भागे पूर्वा—ना ; दिवसस्याद्यभागे पूर्वा—ब, क, द.
10 पञ्चमभागे—क, ज.
11 समापयेदित्यर्थः—क.
12 वारा—ना.
13 The printed reads as follows :
उदयान्निःसृतं सूर्यं भक्त्या परमया युतः ।
नमस्येत् प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥
दध्यक्षताञ्जलीभिस्तु त्रिभिः पूजयते शुचिः ।
तस्य भानुः प्रसन्नश्च अशुभं यत्समर्जितम् ॥
तस्य भानुः स सन्दह्य दूरीकुर्यात् सदा द्विज ।
14 द्विज—क, ना ; द्विजः—उ.

दध्यक्षताञ्जलिभिस्तु तिसृभिः पूजयेच्छुचिः ॥
तस्य भावप्रपन्नस्य[1] चाशुभं यत्समर्जितम् ।
तत्क्षणादेव निर्दग्धं[2] भस्मीभवति [3]काष्ठवत् ॥

'भावप्रपन्नस्य' भक्त्या शरणं गतस्य[4] ॥

[5]मनुः—[४, १५२]

मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम् ।
[6]पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥

'[7]मैत्रं' पुरीषोत्सर्गम्, मित्रदेवताकत्वात् पायो-[8]स्तत्संबन्धात्सोऽपि तथोक्तः । 'प्रसाधनं' [9]केशरचनानुलेपनादि ॥

विष्णुपुराणे—[३, ११, २२]

[10]स्वाचान्तश्च ततः कुर्यात्पुमान् केशप्रसाधनम् ।
आदर्शाञ्जन[11]माङ्गल्य[12]दूर्वाद्यालम्भनानि च ॥

[13]'अञ्जनं' [14]सौवीराञ्जनादि । आदिशब्देन दध्यादीनामुपादानम् ॥

1 प्रपन्नस्य—ना ; प्रसन्नस्य—उ.
2 निर्दग्धः—ब.
3 तत्स्वयम्—ना.
4 प्रपन्नस्य—ब, क, ना, द ; Reproduced by वी. मि. आ., १४८.
5 वी. मि. आ., १४८.
6 पूर्वाज्ञ एव—ब.
7 मूत्रं—क ; मैत्रं मूत्रपुरीषोत्सर्गः—ना.
8 तत्समर्थात् सोपि—क.
9 केशवचरणादि—क ; केशाचरणानुलेपनादि—ना ; क्षुशरचनादि—ज.
10 आचान्तस्य—द, ब ; आचान्तश्च—ना, क.
11 मंगल्य—क ; मङ्गस्य—ना.
12 पूर्वाणि लभनानि च—क ; पूर्वाद्यालम्भनानि च—ना.
13 Reproduced by वी. मि. आ., १४८.
14 चाक्षुष्यं, दूर्वादीत्यादिशब्देन—ब, द.

[1]ब्रह्मपुराणे

स्वमात्मानं घृते पश्येद्यदीच्छेच्चिरजीवितम्[2] ।

[3]अथ दक्षः[4]

द्वितीये च तथा भागे [5]वेदाभ्यासो विधीयते ।
वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।
समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥
उपादानस्येति शेषः ॥

आपस्तम्बः—[१, १३, १९–२२; १, १४, १]

[6]निवेशे निर्वृत्ते संवत्सरेसंवत्सरे द्वौद्वौ मासौ समाहित [7]आचार्यकुले वसेद्भूयः [8]श्रुतमिच्छन्निति श्वेतकेतुः । [9]एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालाच्छ्रुतमकुर्वीति[10] । तच्छास्त्रैर्विप्रतिषिद्धम् । निवेशे[11] निर्वृत्ते [12]नैयमिकानि श्रूयन्ते । अग्निहोत्रमतिथयो[13] [14]यच्चान्यदेवं युक्तम् ॥

1 वी. मि. आ., १४९.
2 चिरजीविताम्—ब, द.
3 अथ इति नास्ति—ब, द.
4 वी. मि. आ., १५४.
5 वेदाभ्यासो हि पञ्चधा—ज.
6 निरंशे वृत्ते—क; निवेशे वृत्ते—द.
7 आचारस्य कुले वंशेद्भूयः—क; आचार्यस्य—द.
8 श्रुति—द.
9 एतेनयं योगेन—क; एतेन ह्यहं—ना; एतेन क्ष्यहं—उ; एतेन ह्वेययोगेन—ज.
10 श्रुतमकुर्वेति—ब, द; श्रुतमकुर्वीत—क.
11 निवेशे हि निवृत्ते—ना.
12 नैयामकानि—द; नैय्यामिकानि—क; नैगमिकानि—वी. मि. आ.
13 त्रमतिथेयो—क.
14 यच्चाऽन्यदेव—द, ब, ना; यच्चान्ययुक्तं—ज; यच्चान्यदेवैर्युक्तम्—क; यच्चान्यदेवमुक्तम्—वी. मि. आ.

'[1]निवेशो' विवाहः। 'समाहितो'ऽनन्यमनाः। 'एतेन' अनन्तरोक्तेन 'द्वौद्वौ [2]मासा'वित्यादिना। 'योगेन' मासद्वयपर्यन्तोपाध्यायसंबन्धेन। 'पूर्वस्मात्कालात्' विवाहप्राग्भाविनः कालात्। 'भूयो' बहुकालम्[3]। 'श्रुतं' मीमांसाभ्यसनम्। 'अकुर्वि' कृतवानस्मि। 'विप्रतिषिद्धं शास्त्रै'रग्निहोत्रादीनां यावज्जीवमावश्यकत्वप्रतिपादकैर्विरुद्धम्॥

[4]आपस्तम्बः[5]—[२, ५, १४]

यया विद्यया न विरोचेत[6] पुनराचार्यमुपेत्य साधयेत्॥

'[7]न विरोचेत[8]' नोज्ज्वलज्ञानो[9] भवेत्[10]॥

[11]याज्ञवल्क्यः—[१, ९९]

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च।

[12]मनुः—[४, १९–२०]

बुद्धिवृद्धिकराण्याशु [13]धन्यानि च हितानि च।

1 Reproduced by वी. मि. आ., १५४.
2 समावि—क.
3 बहुकालं प्रतिपादकैर्विरुद्धः—ना.
4 पुनरापस्तम्बः—ना.
5 वी. मि. आ., १५४.
6 विरोचयेत्—ब, ज, द; विरोचयेत—क.
7 Reproduced by वी. मि. आ., १५४.
8 विरोचयेत्—क, द.
9 ज्ञानं—ना.
10 भवेत्—ब, क, द; भवति—उ.
11 वी. मि. आ., १५५.
12 वी. मि. आ., १५५.
13 धन्यानि विहितानि च—उ.

नित्यं शास्त्राण्यवेक्षेत [1]निगमांश्चैव वैदिकान् ॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथा विजानाति विज्ञानं चास्य रोचते ॥

'[2]बुद्धिवृद्धिकराणि' [3]तर्कमीमांसादीनि । 'धन्यानि' धनाय हितान्यर्थशास्त्राणि[4] । 'हितानि' आयुर्वेदादीनि । 'निगमाः' [5]पदार्थनिर्णयहेतवो[6] निघण्टुप्रभृतयः । 'रोचते' उज्ज्वलं भवति ॥

[7]यमः

शास्त्रार्थमार्गमाश्रित्य ये गता ये च संस्थिताः ।
ये बुध्यन्ति[8] महात्मानस्ते यान्ति परमां गतिम्[9] ॥
दानेन तपसा यज्ञैरुपवासव्रतैस्तथा ।
न तां गतिमवाप्नोति विद्यया [10]यामवाप्नुयात् ॥

'[11]गताः' शास्त्रार्थमार्गेण [12]प्रवृत्ताः । 'संस्थिताः' [13]संप्राप्ताः, लोकान्तरं गता इति यावत्[14] । 'बुध्यन्ति' [15]अनुतिष्ठन्त [16]आसते ॥

1 नियमा—क.
2 Reproduced by वी. मि. आ., १५५.
3 मीमांसतर्कादीनि—ना.
4 शास्त्रसहितान्यायुर्वेदादीनि—द.
5 पदार्थनिर्णायकनिघण्ट्वादयः—ब, द.
6 हेतवे—ना.
7 वी. मि. आ., १५५.
8 बुध्यन्ते—ब, ज, द.
9 गतिं । तथा ; दानेन—ना.
10 किमवाप्नुयात्—क.
11 Reproduced by वी. मि. आ., १५५.
12 संवृताः—ना.
13 समाप्ताः—ब.
14 यावत् । बुध्यन्ति अनुतिष्ठन्ति । दक्षः—ना.
15 'अनुतिष्ठन्ति आसते' इति नास्ति—ब, ज, द.
16 आसत—क.

दक्षः[1]

तृतीये च तथा भागे [2]पोष्यवर्गार्थसाधनम् ।

[3]पोष्यवर्गश्च—

माता पिता गुरुर्भार्या प्रजा दीनः[4] [5]समाश्रितः ।
अभ्यागतोऽतिथिश्चाऽग्निः पोष्यवर्ग उदाहृतः[6] ॥

[7]गौतमः—[९, ६३–६४]

योगक्षेमार्थ[8]मीश्वरमधिगच्छेत्[9] । नान्यमन्यत्र देवगुरुधार्मिकेभ्यः ॥

[10]अलब्धलाभो 'योगः' । लब्धरक्षणं 'क्षेमः' । 'अन्यम्' अनीश्वरम्[11] ॥

मनुः[12]—[४, १५३–१५४]

दैवतान्यभिगच्छेत्तु[13] धार्मिकांश्च द्विजोत्तमान् ।
ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु ॥

1 वी. मि. आ., १५५–१५६.

2 पोष्यवर्गानुशासनम् । कुर्यादिति शेषः—ब, द ; पोष्यवर्गार्थसाधनम् । कुर्यादिति शेषः—ज, क, ना.

3 पोष्यवर्गाश्च—ना ; 'पोष्यवर्गश्च' इति नास्ति—ब, द.

4 प्रजादीना—ज.

5 समाहितः—क.

6 'अर्थसाधनं' धनार्जनं कुर्यादिति शेषः। 'अभ्यागतः' संबन्धी ग्रामान्तरादागतः । एकरात्रिको ग्रामान्तरादागतोऽसंबन्धी 'अतिथिः'—वी. मि. आ., १५६.

7 वी. मि. आ., १५६.

8 र्थमधिग—क.

9 धिगच्छेतु—ना ; भिगच्छेत्तु—उ.

10 Reproduced by वी. मि. आ., १५६

11 अनीश्वरात्—ब, ज, क, द.

12 Reproduced by वी. मि. आ., १४९

13 देवतामभिगच्छेत्—ब, द.

अभिवादयेत्ततो[1] वृद्धान् दद्याच्चैवासनं स्वकम् ।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥

'अभिगच्छेत्[2]' [3]आभिमुख्येन पूजाद्यर्थं गच्छेत् । 'गुरूनेवे' त्येवकारो[4] भिन्नक्रमो 'गच्छेदि' त्यनन्तरं बोद्धव्यः ॥

[5]छागलेयो [6]यमश्च द्वितीये

यतीनां दर्शनं चैव[7] स्पर्शनं भाषणं तथा ।
कुर्वाणः पूयते नित्यं तस्मात्पश्येत्तु[8] नित्यशः ॥
अग्निचित्कपिला सत्री [9]राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः[10] पुनन्त्येते तस्मात्पश्येत्तु नित्यशः ॥

[11]'पश्येदि' त्यनेन स्पर्शनभाषणे[12] अप्युपादीयेतेऽजहत्स्वार्थलक्षणया । 'अग्निचित्' कृताग्निचयनः । 'कपिला' कपिलवर्णा गौः । '[13]सत्री' कृतसत्रयागः । 'भिक्षुः' यतिः ।

1 तु तान् विप्रान्—ब ; तु तान् वृद्धान्—ज, द, क.
2 गच्छेत—ना.
3 अभिमुखेन पूजार्थं—क ; अभिमुखं पूजाद्यर्थं—ब, ज.
4 A. S. B. begins again here after the gap : रोभिश्च etc.
5 वी. मि. आ., १४९–१५०.
6 यमश्चापि—ब.
7 चैव भाषणं स्पर्शनं—द.
8 त—ना.
9 राजभिक्षुः—ब.
10 दृष्टिमात्रः—ना.
11 Reproduced by वी. मि. आ., १४९–१५०.
12 भाषणेऽपि—ब.
13 सत्री अश्वादिसत्रशील इति केचित्—वी. मि. आ., १५०.

[1]वराहपुराणे[2] [२९०, ६४–६५]

वामनं ब्राह्मणं दृष्ट्वा वराहं च जलोत्थितम् ।
[3]नमस्येच्चैव यो भक्त्या स पापेभ्यः प्रमुच्यते ॥
यज्वा मिष्टान्नदः सत्री शतायुर्धार्मिकः शुचिः ।
[4]ज्ञाननिष्ठांस्तपःसिद्धान्दृष्ट्वा पापात्प्रमुच्यते ॥

'शुचि'स्तीर्थादिपूतः । 'ज्ञाननिष्ठो'ऽध्यात्मरतिः[5] ।

[6]नारदः—[१७, ५४–५५]

लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥
[7]एतानि सततं पश्येन्नमस्येदर्चयेच्च यः ।
प्रदक्षिणं [8]च कुर्वीत तथाऽस्यायुर्न हीयते ॥

[9]एतानि च ब्राह्मणादीनामष्टानां[10] मङ्गलानां दर्शन-नमस्कारार्चनप्रदक्षिणीकरणानि समुदितान्यायुःकामस्य तृतीयभाग एव[11] कर्तव्यत्वेन विहितानि । दिवसस्याद्यभागे तु[12] मङ्गलाद्यालम्भनं केवलम् ॥

1 वाराह—ना.
2 Reproduced by वी. मि. आ., १५०.
3 नमस्यैवं च—ना.
4 जह्यनिष्टह्येयःसिद्धान्—ना.
5 अध्यात्मवतः—द, ब ; अध्यात्मरतः—ज.
6 वी. मि. आ., १४७.
7 एतान् यः—ब, द.
8 प्रकुर्वीत—ना.
9 वी. मि. आ., १४७.
10 नां च दर्शन—ना.
11 एवं—ना.
12 'तु' नास्ति—द.

[1]वामनपुराणे

कृत्वा शिरःस्नानमथाह्निकं[2] च
संपूज्य तोयेन पितॄन् सदेवान् ।
होमं च कृत्वाऽऽलभनं शुभानां
ततो बहिर्निर्गमनं प्रशस्तम् ॥
[3]दूर्वां दधि सर्पिरथोदकुम्भं
धेनुं सवत्सां वृषभं सुवर्णम् ।
मृद्गोमयं स्वस्तिकमक्षतानि
लाजा मधु[4] ब्राह्मणकन्यकाश्च ॥
श्वेतानि पुष्पाणि तथा [5]शमीं च
हुताशनं चन्दनमर्कबिम्बम् ।
अश्वत्थवृक्षं च समालभेत
ततश्च[6] कुर्यान्निजजातिधर्मम्[7] ॥
देशानुशिष्टं कुलधर्ममग्र्यं[8]
[9]सगोत्रधर्मं न हि संत्यजेत[10] ।

'[11]संपूज्य तोयेन पितॄनि'ति, अनेन प्रातःस्नाने[12]

1 Reproduced by वी० मि० आ., १५१.
2 अथाऽङ्गिकानि—ब, क; मथाह्निकं च—ज; मथाह्निकानि—द.
3 पूर्वान्दधिसर्पिरथोदकुम्भं—क; दूर्वा दधि—उ.
4 लाजामथ—ना.
5 शमीश्च—द, ब, क; शमी च—ज; शर्मी च—ना; समीचं—उ.
6 स्तु—ना.
7 धर्मान्—ब, द, ज, ना.
8 मुख्यं—क.
9 स्वजातिधर्मं—ब, द; स्वजातिधर्मान्—क; स्वगोत्रधर्मं—ना.
10 संत्यजेच्च—ना.
11 संपूज्य तोयेनेत्यनेन प्रातःस्नानेपि तर्पणं कर्तव्यमित्युक्तं—द.
12 स्नानेऽपि तर्पणं—ब; स्नानेन तर्पणं—ना.

पितृतर्पणं कर्तव्यमित्युक्तम्। [1]अत्र च शिरःस्नानादि सर्वं यथाकालप्राप्तमनूद्य 'ततस्तु कुर्यान्निजजातिधर्ममि'त्यादि[2] तृतीयभागे विधीयते। [3]निजजातिधर्मश्च[4] स्वस्वजाति-[5]विहितोऽर्थार्जनादिरूपः। तत्रापि यस्मिन्देशे यस्यां जातौ यस्मिन्कुले योऽर्जनोपायो विहितो न निन्दितः[6], स एवाऽनुष्ठेय इत्यर्थः॥

अथ दक्षः[7]

> चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत्।
> तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले॥

'आदि'शब्देन गोमयदूर्वाद्युपादानम्[8]। 'स्नानं' कुर्यादिति शेषः। 'अकृत्रिमे' नद्यादौ॥

[9]शातातपः

> [10]वल्मीकाखूत्करात्लेपाज्जलाच्च [11]पथिवृक्षयोः।
> कृतशौचावशिष्टाच्च[12] न ग्राह्याः सप्तमृत्तिकाः॥

'आखूत्करो' मूषिकोत्करः। 'लेपात्' कुड्यादीनामिति

1 अत्र शि—ना.

2 धर्मानित्यादि—द, ब, क; धर्माननिति—ना.

3 निजजातिस्वस्व—क.

4 धर्मः, जातिविहितार्जनादिरूपः—ब, द; धर्मः स्व—ना.

5 विहितार्जनादिरूपः—क; विहिताजनादिरूपः—ज.

6 अनिन्दितः—ब, द.

7 Reproduced by वी. मि. आ., १५७.

8 दानम्, कुर्यादिति शेषः—ना; 'द्युपादानम्'—इत्येतदनन्तरं सप्तदशाङ्कितपत्र-पर्यन्तं कानिचन पत्राणि त्रुटितानि—A. S. B.

9 Reproduced by वी. मि. आ., १५७.

10 वल्मीकादूत्करा—क.

11 पार्थ—क.

12 शिष्टा च—ना.

शेषः। 'जलात्' अन्तर्जलात्[1]। 'पथिवृक्षयोः' संबन्धिनीति शेषः[2]॥

शुचौ देशे तु संग्राह्या शर्कराश्मादिवर्जिता।
रक्ता गौरी तथा श्वेता मृत्तिका त्रिविधा स्मृता॥

'शुचौ देशे' [3]स्थितेति शेषः। आदिशब्देन [4]केशकीटाद्युपादानम्। [5]रक्तत्वादिनियमात् [6]कृष्णवर्णा मृत्तिका स्नानानङ्गमित्युक्तम्[7]॥

न मृदं नोदकं वापि न निशायां तु गोमयम्।
न गोमूत्रं[8] प्रदोषे तु गृह्णीयाद्बुद्धिमान्नरः॥

'निशायामि'ति [9]मृदुदकगोमयैः[10] प्रत्येकं संबध्यते। [11]एतच्च [12]मृदाद्यदृष्टकर्मार्थत्वेन निशायां न ग्राह्यम्॥

[13]मनुः—[४, १२९]

न स्नानमाचरेद्भुक्त्वा नाऽऽतुरो न महानिशि।

1 जलमध्यात्—ब, द.

2 संबन्धिनामिति शेषः—ना.

3 स्थितिविशेषः—क.

4 कण्टकाद्युपादानम्—उ.

5 रक्तेति यमात्—द; रक्तेत्यादिनियमात् कृष्णा मृत्तिका स्नानाङ्गमित्युक्तम्—ब.

6 कृष्णा मृ—क, द.

7 तदसंभवे तु कृष्णादिकापि ग्राह्या। यस्मिन् देशे तु यत्तोयं या च यत्रैव मृत्तिका। सैव तत्र प्रशस्ता स्यात्" इत्युक्तत्वात्—वी. मि. आ., १५७.

8 गोमयं—ना.

9 मृदूकगोमयैः—ब, द.

10 यैः सम्बध्यते—ना.

11 एतेन—ब, द.

12 मृदादि अदृष्टाङ्कलपने नि—क; मृदादि अदृष्टकर्मार्थत्वेन—ना; मृदादि अदृष्टार्थकर्मणे—ब, द.

13 Reproduced by वी. मि. आ., १५९–१६०.

न वासोभिर्न चाजस्रं[1] नाविज्ञाते जलाशये ॥

'न स्नानमाचरेद्भुक्त्वे'ति, कृतभोजनस्य [2]यदृच्छा-स्नाननिषेधो [3]नित्यस्य स्नानस्य [4]भोजनोत्तरप्राप्त्यभावात्। चाण्डालादिस्पर्शनिमित्तस्य[5] तु "नाशुचिः क्षणमपि [6]तिष्ठे"दिति विरोधेन[7] प्रतिषेद्धुमशक्यत्वादिति मेधातिथिः[8]। 'आतुरस्य[9]' व्याधितस्य तु सर्वथा[10] वारुणस्नान-निषेधः। 'महानिशा' रात्रेर्मध्यमं प्रहरद्वयम्। 'अजस्रं' अनवरतं श्रद्धाजाड्यादिना[11]। 'अविज्ञाते[12]' गाधागाध-तयाऽनिन्दितकर्तृकत्वादिना[13] वा ॥

[14]जाबालिः[15]

न पारक्ये सदा स्नायान्न भुक्त्वा न महानिशि ।

1 न चाऽजस्रं—ब, क, द ; सहाजस्रं—उ.
2 वागप्राप्तस्नाननिषेधः—ब, द.
3 नित्यस्ना—ना.
4 भोजनानन्तरप्रा—क, ना, द.
5 स्पर्शननिमित्तस्य—क.
6 तिष्ठेदिति तन्निषेद्धुमशक्यत्वादिति—द, ब ; तिष्ठेदिति बोद्धव्यम्—द.
7 न निषेधः प्रति—ना.
8 एवं भोजने सत्यप्युपरागादिनैमित्तिकं स्नानं कार्यमेव ।
नैमित्तिकानि कार्याणि निपतन्ति यदा यदा ।
तदा तदैव कार्याणि न कालस्तु विधीयते ॥
इति दक्षवचनात् ॥ वी. मि. आ., १५९.
9 रस्य व्याधितस्य स—क, द ; आतुरस्य तु व्याधितस्य स—उ.
10 सर्वदा—ना.
11 श्रद्धाजाड्यादिना—ब, ज, द ; श्राद्धजाड्यादिना—ना ; श्रद्धाजात्यादिना—उ.
12 ते जलाशये गाधा—ना.
13 कर्तृकतया च—ब, द, ज ; कर्तृतया च—क.
14 Reproduced by वी. मि. आ., १६०.
15 जाबालः—द, ब, ज, क, मी.

नार्द्रमेकं च वसनं परिदध्यात्कदाचन[1] ॥

'पारक्ये' परकीये[2] कूपादौ [3]सदा न स्नायात्। [4]अकृत्रिमासंभवे तु तत्रापि स्नायात्, 'परकीयेऽपि कदाचने'ति वचनात्। [5]सर्वदा पुरुषस्यैकमार्द्रं च वासो[6] निषिद्धम्। एवं च[7] पुरुषस्य सर्वदा वस्त्रद्वयधारणनियमात् स्नानकालेऽपि [8]तत्परित्यागे प्रमाणं नास्तीति[9] ॥

[10]तथा

त्रयोदश्यां तृतीयायां दशम्यां तु विशेषतः।
शूद्रविट्क्षत्रियाः स्नानं नाऽऽचरेयुः कथंचन[11] ॥

"[12]अम्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम्।" इति यत् [13]सामान्येन प्रसक्तं[14] स्नानं तदनेन त्रयोदश्यादिषु[15] शूद्रादीनां यथाक्रमं निषिध्यते[16] ॥

1 कदाचन—ना; कथंचन—उ.
2 परकीयकूपादौ—ब, क, द.
3 न सदा स्ना—क, द.
4 अकृत्रिमाभावे—ब, क, द.
5 सदा—ब, द.
6 पुरुषस्य आर्द्रमेकं वासो—ना.
7 च सर्वदा—क, द.
8 तत्परित्यागो निष्प्रामाणिकः—ब, द.
9 एकवस्त्रेण यत्स्नानं सूच्या विद्धेन चैव हि।
स्नानं च न भवेच्छुद्धिः श्रिया च परिहीयते ॥ वी. मि. आ., १६१.
10 Reproduced by वी. मि. आ., १६२.
11 कदाचन—ना.
12 बोधायन: [२, ७, ३.] Reproduced by वी. मि. आ., १६३.
13 साम्येन—ब; साध्येन—द.
14 क्तं तद्—क, द; क्तस्नानं—ना.
15 षु यथाक्रमं शूद्रादीनां प्रतिषिध्यते—क, द,
16 प्रतिषिध्यते—ब.

[1]बौधायनः—[२, ६, २४–२५]

न नग्नः स्नायात् । न नक्तं स्नायात् ॥

[2]आपस्तम्बः[3]—[१, ३२, ७–८]

[4]सशिरोऽवमज्जनमप्सु वर्जयेत् । अस्तमिते च स्नानम् ॥

उदकं प्रविश्य सशिरस्कं रागतो निमज्जनं न कुर्यात् । 'अस्तमिते च स्नानं' वर्जयेदित्यनुषङ्गः । एतदपि [5]रागप्राप्तस्नानमात्रविषयम् ॥

[6]पराशरः[7]—[१२, २२]

[8]दिवाकरकरैः पूतं[9] दिवा स्नानं [10]प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥
[11]यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं[12] विधीयते ॥

[13]योगियाज्ञवल्क्यः

उभे संध्ये तु[14] स्नातव्यं ब्राह्मणैश्च[15] गृहाश्रितैः ।

1 वी. मि. आ., १६३.
2 Reproduced by वी. मि. आ., १६३.
3 बौधायनः—ब, द.
4 सशिरोवर्जनमत्र वर्जयेत्—क.
5 रागपरिप्राप्त—ब, द ; वागपरिप्रा—क ; रागप्राप्तिस्ना—ना.
6 पराशरः—ब, ना, द ; पाराशरः—ज.
7 वी. मि. आ., १६६.
8 भास्करस्य करैः—इति मुद्रितपाठः
9 युक्तं—द, ब, क ; स्पृष्टं—ज.
10 विशिष्यते—ना ; समाचरेत्—द.
11 'यथास्नानं . . . . विधीयते' इत्ययं श्लोको मुद्रितपुस्तके नोपलभ्यते.
12 स्नानदानं—ना.
13 वी. मि. आ., १५८.
14 च for तु—ज.
15 ब्राह्मणैर्गृहमाश्रितैः—ना ; ब्राह्मणैः स्वगृहाश्रितैः—ज.

तिसृष्वपि च संध्यासु स्नातव्यं [1]तु तपस्विभिः ॥

'तपस्वी' वानप्रस्थादिः ॥

[2]शङ्खलिखितौ

अनश्नन्ननग्नः[3] स्नायात्। नाप्सु मेहेत[4]। नोद्धर्षणं कुर्यात्। न पादेन[5] पाणिना वा[6] जलमभिहन्यात्। यस्मादापो वै सर्वा देवताः। [7]न स्रवन्तीं वृथातिक्रामेदनवसिच्य। अमेध्योदकं परिहरेत्। नाल्पोदके स्नायात्। न समुद्रोदकमवगाहेत्[8] ॥

'अनश्नन्' ताम्बूलादिभक्षणमकुर्वाणः[9]। 'मेहनं' मूत्रोत्सर्गः। 'उद्धर्षणं' अङ्गमलापकर्षणम्। 'अप्सु[10] न कुर्यादि'त्यन्वयः[11]। 'अतिक्रामेत्' लङ्घयेत्। 'वृथा' निष्प्रयोजनम्। 'अनवसिच्य' तर्पणमकृत्वा। 'अमेध्यं' अशुचि[12]। 'परिहरेत्' [13]न किंचित्तत्र कुर्यात्। 'अल्पोदके न स्नायादि'ति, प्रभूतसुमनोहरोदकसंभवे। 'प्रभूते विद्य-

1 च तपस्विना—क; हि तपस्विना—ना, द.

2 Reproduced by वी. मि. आ., १६७.

3 अनमन्ननग्नः—ब; अनग्नं न नग्नः स्नायात्—द.

4 मेहेत्—क.

5 पादेन न पाणिना वा—ना.

6 च—ब, क, द.

7 निस्रवन्तीं—क; नास्रवन्तीं—ना.

8 त—क, ना.

9 र्वन्—क, द.

10 अप्सु कुर्यादित्यर्थः—ब, द.

11 दित्यर्थः—क.

12 अशुचिं—ब, ज, द.

13 न तत्र किंचित् कुर्यात्—ना.

माने[1]' इत्यादि वचनात्[2]। 'नावगाहेत्[3]' [4]अन्तः प्रविश्य न स्नायात् ॥

देवलः[5]

न नदीषु नदीं ब्रूयात् पर्वतेषु [6]च पर्वतम् ।
नान्यत्प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥

[7]हारीतः

न चत्वरोपद्वारयोः स्नायात् ॥

'[8]चत्वरं' [9]यक्षादिबलिदानस्थानम्। 'उपद्वारं' द्वारसमीपम् ॥

[10]पुनर्हारीतः

न स्नानवर्णकयोरग्रं[11] प्रयच्छेत्। अन्यत्र देवगुरुब्राह्मणेभ्यः ॥

[12]स्नात्यनेनेति 'स्नानं' कुशादि। '[13]वर्णकं' [14]सुगन्धिद्रव्यम्, उद्वर्तनादिवर्णकरत्वात्[15] ॥

1 मानता इति—क.
2 प्रभूते विद्यमाने तु उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायान्नदीं चोत्सृज्य कृत्रिमे ॥
इति योगियाज्ञवल्क्यनिषेधात् ॥ वी. मि. आ., १६७.
3 हेत् . . विश्य न स्नायात्—ना.
4 अन्तः प्रविश्य स्नायात्—क.
5 वी. मि. आ., १६८.
6 न—ना.
7 वी. मि. आ., १६८.
8 Reproduced by वी. मि. आ., १६८.
9 यक्षादिबलिस्थानम्—क ; यक्ष्मादिबलिदानस्थानम्—उ.
10 Reproduced by वी. मि. आ., १६८.
11 करयोरग्रं—क.
12 स्नायतेनेनेति—ना.
13 'वर्णकं' अनुलेपनं इति श्रीदत्तः—वी. मि. आ., १६९.
14 सुगन्धद्र—ना.
15 वर्णकत्वात्—ब, द.

[1]विष्णुः—[६४, १-९]

परनिपानेषु [2]न स्नानमाचरेत्। आचरेद्वा [3]पञ्चपिण्डानुद्धृत्यापदि। [4]नाजीर्णी। न चातुरः। न नग्नः। न[5] राहुदर्शनवर्जं रात्रौ[6]। न [7]संध्यायाम्[8]। [9]प्रातःस्नाय्यरुणकरग्रस्तां प्राचीमवलोक्य स्नायात्॥

'आपदि' अकृत्रिमे जले स्नानासंभवे। 'संध्यायां' सायंसंध्यायाम्॥

[10]पैठीनसिः

अथ स्नानविधिः[11]। परकृतान् सेतून् [12]कूपांश्च वर्जयेत्। [13]अंशभाक् तत्र [14]सेतुकृत्त्रीन्पिण्डानुद्धृत्य स्नायात्॥

[15]मनुः—[४, २०९]

परकीयनिपानेषु स्नायान्नैव कदाचन[16]।

1 Reproduced by वी. मि. आ., १६०.

2 न स्नायात् आचरेत्—ना.

3 पञ्चपिण्डानुद्धृत्यापस्तदापदि—इति मुद्रितविष्णुस्मृतिपाठः.

4 नाजीर्णे—ना, द; न जीर्णे—उ; न जीर्णी—ब, ज.

5 न राहुदर्शनवर्जं रात्रौ सन्ध्यायां—ब, द; न रात्रौ। राहुदर्शनवर्जम्—इति मु. विष्णु. पाठः; राहुदर्शनवर्जं न रात्रौ—ना.

6 रात्रौ संध्या—क.

7 न संध्ययोः—इति मु. विष्णु. पाठः.

8 यां। पैठीनसिः—ना.

9 प्रातःस्नानशीलोऽरुणताम्रां प्राचीमालोक्य—इति मु. विष्णु. पाठः.

10 वी. मि. आ., १६९.

11 अथ स्नानविधिरिति नास्ति—द, ब.

12 कूपान् वर्ज—ना.

13 'अंशभाक्' इत्यारभ्य 'स्नायात्' इत्यन्तं नास्ति—ज, क.

14 सेतुकृतीस्त्रीन् पिण्डा—ना.

15 Reproduced by वी. मि. आ., १६९.

16 कथंचन—क.

निपानकर्तुः [1]स्नाता हि दुष्कृतांशेन लिप्यते[2] ॥

'परकीयं' परकृतमात्रम्[3]। [4]तत्तु प्रतिष्ठितमप्रतिष्ठितं वा[5], अविशेषेण '[6]परकृतानि'ति पैठीनसिबौधायनवचनानुसारात्। स्वकारिते तु न विरोधः। 'निपानं' जलाधारः॥

[7]बौधायनः—[२, ५, १–५]

तपस्यमपामवगाहनम्। देवतास्तर्पयित्वा[8] पितृतर्पणम्। अनुतीर्थमप[9] उत्सिञ्चेदू [10]"ऊर्जं वहन्ती"रिति। अथाप्युदाहरन्ति—

स्रवन्तीष्वनिरुद्धासु[11] त्रयो वर्णा द्विजातयः।
प्रातरुत्थाय [12]कुर्वीरन् देवर्षिपितृतर्पणम्॥
निरुद्धासु न कुर्वीरन्नंशभाक् तत्र सेतुकृत्।
तस्मात्परकृतान् सेतून् कूपांश्च परिवर्जयेत्॥
[13]उद्धृत्य वापि त्रीन् पिण्डान् कुर्यादापत्सु नो सदा।

1 स्नात्वा हि.—द, ब, ना ; स्नानाद्धि—क.

2 ति—द.

3 कृतमत्र प्रतिष्ठितमप्रतिष्ठितं चाविशेषेण परकृतानिति पैठीनसिवचनानुसारेण—द, ब.

4 तच्च प्रतिष्ठितं च अविशेषेण परकृतमिति पैठीनसि—क.

5 च—ना.

6 परकृतमिति पैठी—ना.

7 Reproduced by वी. मि. आ., १६९-१७०.

8 त्वा देवर्षिपितृतर्पणम्। निरुद्धासु—क.

9 मप सिञ्च्यत्यूर्जं—ना.

10 "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन्" (वाजसनेयसंहिता, २. ३४.) इति समग्रो मन्त्रः.

11 स्रवन्तीषु निरुद्धासु—द, ब ; स्रवन्तीष्वनिरुद्धासु—ना.

12 कुर्वन्ति—ना.

13 अथाप्युदाहरन्ति—उद्धृत्य etc., इति मुद्रितपाठः.

[1]निरुद्धासु तु मृत्पिण्डान्कूपात्त्रीन्[2] त्रीन् घटांस्तथा ॥

तपसे हितं 'तपस्यम्' अवगाहनम्। तपश्चाऽत्र [3]नित्यनैमित्तिकादिकर्मानुष्ठानमभिमतम्[4]। स्नातस्य तत्राधिकारात्। '[5]अनुतीर्थं' तीर्थं लक्ष्यीकृत्य, देवपित्रादितीर्थेनेत्यर्थः। "ऊर्जं वहन्ती"रिति तर्पणान्तिमपदार्थोपादानमेतावानेकः [6]प्रयोग इति ज्ञापनार्थम्। 'निरुद्धासु' निरुद्धप्रवाहासु[7] ॥

शङ्खलिखितौ[8]

नेष्टकाचिते पितॄंस्तर्पयेत्। [9]वापीतडागोदपानेषु[10] सप्त पञ्च त्रीन्[11] वा पिण्डानुद्धृत्य देवपितॄंस्तर्पयेत् ॥

[12]याज्ञवल्क्यः—[१, १५९]

पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु[13]।
स्नायान्नदीदेवखातह्रदेषु च सरःसु च[14] ॥

पैठीनसिबौधायनवचनात्[15] स्नानकर्तुर्मृत्पिण्डाम्बुघट-

1 निरुद्धासु त्रीन् पिण्डान् कूपान्त्रीन् घटांस्तथा—क.
2 त्रीन्स्तु घटांस्तथा—ना ; त्रीनब्घटांस्तथा—मुद्रितपाठः.
3 नित्यनैमित्तिककर्मानुष्ठानमभिप्रेतं—क.
4 अभिप्रेतम्—ब, ज, ना, द.
5 अथ तीर्थे—क.
6 प्रयोगः बोद्धव्यः—ब, द.
7 सु। याज्ञवल्क्यः—ना.
8 वी. मि. आ., १७२
9 न वापी—ब, द.
10 गोपदानेषु—क.
11 त्रीन् वा पि—ब, द; त्रीन् पिण्डा—उ.
12 वी. मि. आ., १७०.
13 वारिणि—ब, ज, क, द, वी. मि. आ.
14 गर्तप्रस्रवणेषु च—क ; ह्रदप्रस्रवणेषु च—इति मुद्रितपाठः.
15 नानुसारात्—क, ना, द.

त्रयोद्धरणं[1] [2]सेतुकूपविषयम्। पञ्चपिण्डोद्धरणं तु विष्णूक्तमेतदतिरिक्तकृत्रिमजलविषयम्। यत्तु शङ्खलिखितोक्तं सप्तपञ्च[3]त्रयमृत्पिण्डोद्धरणं[4] तत्तर्पणार्थं[5] यथासंख्यं [6]वापीकूपतडागविषयम्[7] ॥

[8]मनुः—[४, २०३]

नदीषु देवखातेषु तडागेषु सरःसु च।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥

'देवखातेषु तडागेषु' [9]देवसंबन्धित्वेन प्रसिद्धेषु [10]सरःसु। 'गर्तः'—

"[11]धनुःसहस्राण्यष्टौ[12] तु गतिर्यासां न विद्यते"

इति वक्ष्यमाणः। 'प्रस्रवणं' निर्झरः ॥

[13]विष्णुपुराणे—[३, ११, २६]

कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि[14]।
स्नायीतोद्धृततोयेन यदि वा भुव्यसंभवे ॥

1 मृत्पिण्डाद्युद्धरणं—द, ब.
2 कूपसेतुविषयं—ना.
3 त्रयपिण्डोद्धरणं—ब, द.
4 णं तर्पणार्थं—क.
5 र्थे—ना.
6 वापीतडागोदपान—ब, क, द.
7 Reproduced by वी. मि. आ., १७२
8 Reproduced by वी. मि. आ., १८१–१८२.
9 देवसंबन्धेन प्र—क, द.
10 सर इति अल्पगर्त्तः—ब; सरभल्लः गर्त्तः—क; सरः तल्लः गर्तः—ना.
11 गोभिलस्मृतिः (छन्दोगपरिशिष्टे कात्यायनः) १, ७, १४२.
12 सहस्राष्टौ च—ना.
13 Reproduced by वी. मि. आ., १८२.
14 अर्धमिदं—'ब' 'द'कोशयोर्नास्ति.

'कूपेषु' यत्तोयं तेनोद्धृतेन भुवि स्थितः स्नायात्। 'असंभवे' अन्यत्रापि तडागादाववगाह्य स्नानासंभव इत्यर्थः ॥

[1]विष्णुः—[६४, १६–१७]

स्नायात्प्रस्रवणदेवखातसरोवरेषु । उद्धृताद्भूमिष्ठमुदकं[2] पुण्यं स्थावरात्प्रस्रवणं[3] [4]तस्मान्नादेयं तस्मादपि [5]साधुपरिगृहीतं [6]सर्वत एव गाङ्गम् ॥

'[7]साधुपरिगृहीतं' [8]यथा रामपरिगृहीतं चित्रकूटादौ मन्दाकिन्यादि ॥

[9]शङ्खः[10]

सर्वतीर्थानि पुण्यानि पापघ्नानि सदा नृणाम् ।
परस्परानपेक्षाणि[11] कथितानि मनीषिभिः ॥
सर्वे प्रस्रवणाः पुण्याः सर्वे पुण्याः शिलोच्चयाः[12] ।
नद्यः पुण्याः सदा सर्वा जाह्नवी च[13] विशेषतः ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।

1 वी. मि. आ., १८२.
2 भूमिष्ठमुदकं—ब, ना, द, वी. मि. आ ; भूमिस्थमुदकं—उ.
3 प्रस्रवणवत् त—क.
4 तस्मादपि नादेयं तस्मा—ना.
5 साधुसंगृहीतं—ना.
6 सर्वत्र एव गाङ्गेयम्—ब, क, द.
7 Reproduced by वी. मि. आ., १८२.
8 यथा रामपरिगृहीतमिति नास्ति—ब.
9 शंखलिखितौ—ना.
10 Reproduced by वी. मि. आ., १८२.
11 अनपेक्ष्याणि—ब, ज, द.
12 शिलोच्चये—उ.
13 तु—क.

विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥
नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ।
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां[1] नृणाम् ॥

'हस्तसंयमः' निन्दितप्रतिग्रहादिनिवृत्तिः[2] । 'पादसंयमः' [3]अगम्यदेशगमननिवृत्तिः । 'मनःसंयमः' [4]कामक्रोधादिनिवृत्तिः । 'विद्या' [5]सच्छास्त्रवेदरूपा[6] । 'तपः' चान्द्रायणादिः । 'कीर्तिः' धार्मिकत्वादिना प्रसिद्धिः[7] । [8]न नरस्य पापकृतः सर्वथा तीर्थं निष्फलमित्युक्तम्—'नृणामि'ति ॥

[9]**योगियाज्ञवल्क्यः**

प्रभूते विद्यमाने तु [10]उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायान्नदीं चोत्सृज्य कृत्रिमे ॥
[11]त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥
वृथा तूष्णोदकस्नानं[12] वृथा जप्यमवैदिकम् ।

1 शुद्धात्मनां—ब, ना, द.
2 ग्रहमारणादिनिवृत्तिः—ना.
3 तीर्थकामोऽगम्य—ब, द ; अगम्यगमननिवृत्तिः—द.
4 कामक्रोधनिवृत्तिः—क.
5 सर्वाखवेदाद्यागमरूपा—क, वी. मि. आ.
6 वेदाद्यधिगमः—ब, ज, द.
7 प्रसिद्धिः—ब, द ; प्रसिद्धः—उ.
8 न नरस्य—क ; न इति नास्ति—उ.
9 Reproduced by वी. मि. आ., १६७ and १८३.
10 सलिले सुमनोरमे—ब, द ; विमले—ना.
11 कात्यायनः—त्रिरात्रफलदा—ब, द.
12 उष्णोदकैः स्नानं—ब, द ; उष्णोदके—उ.

वृथा त्वश्रोत्रिये दानं वृथा [1]भुक्तमसाक्षिकम्[2] ॥

'त्रिरात्रफलदाः' नदीव्यतिरिक्ते[3] जले यत्त्रिरात्रस्नाने फलं तत्फलदाः[4]। एवं 'पक्षस्य मासस्ये'त्यपि[5] बोद्धव्यम्। 'वृथा' शरीरशुद्धिव्यतिरिक्तस्नानफलशून्यम् ॥

[6]भविष्यपुराणे

शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम्।
शिवगङ्गेति[7] तज्ज्ञेयं[8] तत्र स्नात्वा दिवं व्रजेत् ॥

छन्दोगपरिशिष्टे[9] कात्यायनः[10]—[१, ७, १४०-१५१]

[11]यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥
नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम् ॥
धनुःसहस्राण्यष्टौ तु गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः ॥
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च।

1 ह्यभयसाक्षिकं—ना.
2 मवैदिकं—ब, द.
3 क्ते यत्त्रि—द.
4 वी. मि. आ., १८३, adds स्नानप्रकरणात् after this.
5 मासस्यापि—ब, द.
6 वी. मि. आ., १८५.
7 लिंगेति तत्प्रोक्तं—क.
8 विख्यातं—ब, द; विज्ञेयं—ना, वी. मि. आ.
9 शिष्टे का—क, ना, उ.
10 वी. मि. आ. १८५, १७१ and १८८.
11 पव्यद्वयं श्रावणादि—द, ब, ज; यव्यद्वयं श्रावणादि—क, ना; मासद्वयं श्रावणादि सर्वा—इति मुद्रितगोभिलस्मृतिपाठः.

चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥
वेदाश्छन्दांसि [1]सर्वाणि ब्रह्माद्याश्च दिवौकसः ।
जलार्थिनो हि पितरो [2]मरीच्याद्यास्तथर्षयः ॥
उपाकर्मणि चोत्सर्गे[3] स्नानार्थं ब्रह्मवादिनः ।
यियासूननुगच्छन्ति[4] [5]संहृष्टा ह्यशरीरिणः ॥
समागमश्च यत्रैषां तत्रान्ये बहवो मलाः ।
नूनं सर्वे क्षयं यान्ति [6]किमुतैकं नदीरजः ॥
[7]ऋषीणां सिच्यमानानामन्तरालं समाश्रितः[8] ।
संपिबेद्यः शरीरेण [9]पर्षन्मुक्तजलच्छटाः ॥
विद्यादीन् ब्राह्मणः कामान्पुत्रादीन्नार्यपि ध्रुवान्[10] ।
[11]आमुष्मिकान्यपि सुखान्याप्नुयान्नात्र संशयः ॥
अशुच्यशुचिना दत्तमाममृच्छकलादिना[12] ।
अनिर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते ॥
स्वर्धुन्यम्भःसमानि स्युः सर्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥

1 सर्वाणि—ब, ज, क, ना, द ; सर्वांशे—उ.

2 मरीच्याद्यास्त्वथर्षयः—ब, ज, द ; मरीचाद्यास्तथर्षयः—उ.

3 उपाकर्मणि चोत्सर्गे—ना ; उपाकर्मण्युत्सर्गे च—उ, वी. मि. आ.

4 यियासूनन्वगच्छन्ति संहृष्टा—ब, ज, क, द ; पिपासयान्वगच्छन्ति—ब ; पिपासूननुगच्छन्ति—उ, वी. मि. आ.

5 संद्रष्टा—उ.

6 किमु चैकं—ब, द ; किम्भुतैकं—क.

7 राशीनां सिद्धमानानां—क.

8 समाश्रिताः । सम्पिबेयुः शरीरेण पर्यन्मुक्तजलच्छटाः—ब, द.

9 पार्श्वोन्मुक्तजलच्छटाः—उ.

10 ध्रुवम्—द, ब, ज, क, ना.

11 आमुष्मिकान्यपि सुखाण्याप्नुयान्नात्र—ब, ज, क, द ; आयुष्यकान्यपि मुख्यान्—उ.

12 मृष्टफलादिना—क.

'[1]यव्यो' मासः, "यव्या मासाः [2]सुमेकः संवत्सर" इति [3]शतपथश्रुतेः। '[4]रजस्वलाः' अविशुद्धाः[5]। 'समुद्रगाः' साक्षात्प्रत्यभिज्ञायमानसमुद्रगमनाः। '[6]धनुः' हस्तचतुष्टयपरिमाणम्[7]। [8]ऋषीणां तर्पणे क्रियमाणेऽन्तरालसंबन्धी यो जलबिन्दुसमूहस्तं 'पिबेत्' शरीरेण [9]संप्रतीच्छेदित्यर्थः। 'अशुचि' द्रव्यम्। 'अशुचिना' पुरुषेण[10]। '[11]आममृच्छकलादिना' [12]अपक्वमृत्कपालादिना[13]। '[14]अनिर्गतदशाहाः' जन्मप्रभृति दशाहाभ्यन्तरे ये मृतास्ते प्रेताः। 'रक्षांसि भुञ्जते' तद्दत्तं [15]तद्गामि भवति। 'समागमश्च यत्रैषा'मित्यादिना यो रजःप्रभृति [16]सर्वप्रकारोदकदोषाभाव उक्तस्तदनुवादोऽयं[17] 'अशुच्यशुचिने'त्यादि। 'स्वर्धुनी' [18]गङ्गा॥

1 Reproduced by वी. मि. आ., १८५.
2 स्वमेकः—ब, ज, क, ना, द; सुमेकां—उ.
3 शतपथब्राह्मणम्, १. ७. २. २६.
4 वाक्यमिदं—'ब' 'द' कोशयोर्नास्ति.
5 अशुद्धाः—क.
6 Reproduced by वी. मि. आ., १७१.
7 हस्तचतुष्टयम्—ब, ज, द.
8 Reproduced with additions by वी. मि. आ., १८८–१८९.
9 परीक्षेदित्यर्थः—क.
10 पुरुषेण दत्तं—ब, द; पुरुषेण दत्तं च—द.
11 आममुक्तजलादिना—क.
12 नूतनमृत्—द, ब; अपक्वमृत्कलापादिना—ना.
13 दिना जन्म—क.
14 Quoted by वी. मि. आ., १८९.
15 तदासां—ब, द.
16 सर्वदोषाभावः—ब, द; सर्वोदकदोषाभाव—ना; सर्वप्रकारदोषाभाव—क.
17 तदर्थवादोयं—क, ना.
18 पूर्ववाहिनी गङ्गा—ब, द.

[1]ब्रह्मपुराणे[2]

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमाचरेत् ।
तर्पणं तु भवेत्तस्य चाङ्गत्वेन प्रकीर्त्तितम् ॥

दक्षः [२, ४८–४९]

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तेषां मध्ये [3]तु यन्नित्यं तत्पुनर्भिद्यते[4] त्रिधा ॥
मलापकर्षणं पार्श्वे मन्त्रवत्तु जले[5] स्मृतम् ।
सन्ध्यास्नानमुभाभ्यां तु [6]स्नानभेदाः प्रकीर्तिताः ॥

'पार्श्वे' न जलमध्य इति तात्पर्यम् । 'संध्यास्नानं' प्रातःस्नानम्[7] । 'उभाभ्यामि'ति, जले [8]स्थले च ॥

[9]शङ्खः [८, १–११]

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा [10]स्नानं प्रकीर्तितम् ॥
अस्नातस्तु पुमान्नार्हो [11]जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थं तु नित्यस्नानं [12]प्रकीर्तितम् ॥

1 वी. मि. आ., १९१ and २००.
2 ब्रह्माण्डपुराणे—उ.
3 पुनर्नित्यं तत्तु संभिद्यते—ब.
4 विंद्यते—क.
5 तज्जले—ब, द.
6 स्नानदेशाः—ब, ज, क, द.
7 स्नानं जलमध्ये—क.
8 स्थण्डिले—ब.
9 वी. मि. आ., १८९—१९०.
10 स्नानमिहोच्यते—ज.
11 जप्यादिहवनादिषु—उ ; जप्याग्निहरणादिषु—क.
12 उदाहृतम्—ना.

चाण्डालशवपूयादि[1] स्पृष्ट्वाऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु [2]यतः स्नाति स्नानं नैमित्तिकं [3]हि तत् ॥
पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम्[4] ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्प्रयोजयेत् ॥
जप्तुकामः पवित्राणि[5] चार्चिष्यन् देवताः पितॄन् ।
स्नानं समाचरेद्यस्तु क्रियाङ्गं तत् प्रकीर्तितम् ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्थं तु प्रवृत्तिस्तस्य[6] नान्यथा ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया ॥
तत्र [7]काम्यं च[8] कर्तव्यं यथावद्विधिचोदितम्[9] ।
नित्यं नैमित्तिकं [10]चैव क्रियाङ्गं मलकर्षणम् ॥
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ।
स्नातस्य[11] वह्नितप्तेन तथैव परवारिणा ॥
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत् ।
अद्भिर्गात्राणि शुध्यन्ति [12]तीर्थस्नानाद्भवेत्फलम् ॥

1 यूपादीन्—द, ब ; यूपादि—ना.
2 यदा—द, ब, ना, वी. मि. आ. ; स्नानानर्हस्तु यत्स्नाति—ज.
3 स्मृतम्—ना.
4 विधिनोदितम्—ज, ना.
5 दि—क.
6 स्तत्र—ना.
7 कालस्तु—क.
8 तु—ब, ज, ना, द.
9 विधिनोदितम्—ना.
10 कर्म—ब, द.
11 स्नातस्य—द, ब, ज, क, ना ; स्नातव्यं—उ.
12 तीर्थस्नानादित्यादि सप्तदशाङ्कितपत्रारम्भे A.S.B. कोशे दृश्यते.

सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानमेव क्रिया यस्मात् स्नानात्पुण्यफलं [1]मतम् ॥

'[2]अभ्यङ्गपूर्वकमि'ति मलापकर्षणस्नानोपलक्षणम्[3] । 'तीर्थ'शब्दोऽत्र तीर्थभूतवापीकूपतडागादिपरः[4] । 'मता' अभिमता[5] । 'यथावत्' पुण्यस्नानाद्युक्तेतिकर्तव्यतया । 'नित्यं नैमित्तकमि'त्येतेनाऽर्थादिदमुक्तम्[6]—काम्यस्नानक्रियास्नाने उष्णोदकपरोदकाभ्यां न कर्तव्ये इति । 'परवारि' [7]परकृत्रिमजलम्, [8]अकृत्रिमं च परेणोपार्जितम् । 'स्नानफलं' स्वर्गादि ॥

[9]<u>हारीतः</u>[10]

पञ्च स्नानानि विप्राणां कीर्तितानि मनीषिभिः ।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥
आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते ।
आपो हि ष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥
[11]अद्भिरातपवर्षाभिर्दिव्यं स्नानमिहोच्यते ।
एतैस्तु मन्त्रतः स्नात्वा तीर्थानां फलमाप्नुयात्[12] ॥

1 स्मृतम्—ब, ज, क, ना, द.
2 Reproduced by वी. मि. आ., १९०.
3 णसाधनोपलक्षणार्थं—ना, A.S.B; लक्षणपरं—ब; साधनोपलक्षणपरम्—द.
4 कूपादिपरः—ना; वापीतडागादिपरः—द.
5 अभिमतेति यावत् । पुण्यस्नानादि—द, ब, ज.
6 मित्यादिनार्थादिदमुक्तम्—ब, द.
7 परकृत—द, ब; कृत्रिमं जलं—ना; परवारि कृत्रिमजलं—A.S.B.
8 अकृतं च परेणो—ना; कृत्रिमं न परेणो—A.S.B.
9 तत्र हारीतः—A.S.B.
10 वी. मि. आ., १९२–१९३.
11 अद्भिः सातपवर्षाभिः—ब, ना, द, वी. मि. आ.
12 फलमश्नुते—ना.

'[1]आग्नेयं' अग्निशब्दोऽत्राग्निकार्ये[2] भस्मनि वर्तते[3] लक्षणया। "सर्वत्राग्निकलिभ्यां ढग्वक्तव्य[4]" इति ढक्। 'आपो हि ष्ठे'ति मन्त्रचतुष्टयोपलक्षणम्। '[5]एतैः' आग्नेयादिभिः। 'मन्त्रतो' [6]मृदालम्भादिसाधनमन्त्रोच्चारणेन ॥

योगियाज्ञवल्क्यः[7]

कालदोषादसामर्थ्यान्न शक्नोति [8]यदा ह्यसौ।
तदा ज्ञात्वा [9]ऋषिभ्यस्तु मन्त्रैर्दृष्टं तु मार्जनम् ॥
शन्न आपस्तु द्रुपदा आपो हि ष्ठाघमर्षणम्।
एतैश्चतुर्भिर्ऋङ्मन्त्रै[10]र्मन्त्रस्नानमुदाहृतम् ॥
स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।
अघमर्षणसूक्तेन अश्वमेधावभृत्समम् ॥
अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत्।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं भवेत् ॥

'कालदोषः' अतिवृष्ट्यादिः[11] 'असामर्थ्यं' शरीरापाटवहेतुः। कालस्याल्पत्वेन संपूर्णवारुणस्नानविधि[12]करणा-

1 Reproduced by वी. मि. आ., १९३.
2 त्रतत्कार्ये—द, ब, क; त्रतत्कार्ये वर्तते भस्मनि लक्षणया—ज.
3 ते सर्वत्राग्नि—ना.
4 'कलेर्ढक्' ४-२-८ इति सूत्रस्थवार्तिकम् (२६८९).
5 तथैवाग्नेयादिभिः—क.
6 मृदालम्भनादि—क, द.
7 Text and commentary reproduced by वी. मि. आ., १९४.
8 यदा त्वसौ—क.
9 तु ऋषिभिः—ब, द.
10 मान्त्रैः—ब, द.
11 दिः शरीरापाटव—उ.
12 कालयोग्यत्वं—ब, द, ज; करणयोग्यत्वं च—ना.

योग्यत्वं वा। '[1]स्नानमब्दैवतैर्मन्त्रैरि'ति, '[2]अब्दैवतैर्मार्जनं,' 'अघमर्षणसूक्तेन प्राणसंयम' इत्यन्वयः[3]। ईदृशमन्त्रस्नानं पूर्वोक्तमन्त्रस्नानादुत्कृष्टम्। 'अप्रायत्यं[4]' [5]अशुद्धिः। 'स्नान'-मत्राप्लवनम्[6]। 'अन्यथा' [7]अशुध्यभावे॥

[8]पुनर्योगियाज्ञवल्क्यः[9]

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया[10]।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः॥
मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च।
वारुणं मानसं चैव सप्तस्नानं प्रकीर्तितम्[11]॥
अपो हि ष्ठेति वै मान्त्रं[12] [13]मृदालम्भस्तु पार्थिवम्।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्॥
यत्तु सातपवर्षेण स्नानं [14]तद्दिव्यमुच्यते।
वारुणं चावगाहात्तु[15] मानसं विष्णुचिन्तनम्॥
[16]शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु।

1 स्नानमब्दैवतमिति कारयेत्—द, ब; स्नानमब्दैवतैरिति—ना.
2 अब्दैवतं—ब, द; अब्दैवतेन—ना.
3 इत्यनुवृत्तिः—ब, द.
4 त्यं अशुद्धिः। स्नानमत्र आप्लवनम्—A.S.B.
5 अशुद्धिः स्नानमात्रपरः—द, ब; अशुद्धिः स्नानमत्राप्लवः—ज.
6 त्राप्लवः—क.
7 अशुध्यभावे—ज, द; अशुद्धभावे—ना; अविशुद्धाभावे—उ.
8 तथा, असाम—ना.
9 Reproduced by वी. मि. आ., १९४–१९५.
10 ह्यपेक्षया—ना.
11 स्नानाः प्रकीर्तिताः—ना; स्नानान्यनुक्रमात्—वी. मि. आ.
12 मन्त्रं—द.
13 मृदालम्भस्तु—द; मृदालम्भं तु—उ.
14 दिव्यमिहोच्यते—ना.
15 गाह्यं च—क, ब, द; गाहात्तु—ज; गाहं तु—वी. मि. आ; गाह्यं तु—उ.
16 अथ स्नानं—ना; सप्तस्नानं—A. S. B.

कालादेशादसामर्थ्यात्सर्वं तुल्यफलं स्मृतम् ॥
मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं[1] यतः ॥

मन्त्रस्नानक्रमेण यथोद्दिष्टं सर्वमेव स्नानं प्रशस्तम् । अत्रैव हेतुः—'कालादेशादि'ति । [2]यत इति शेषः । वारुणं मुख्यं स्नानम् । [3]कालदोषादौ त्वन्यदपि [4]मान्त्रादि तत्तुल्यफलम् ॥

[5]स्कन्दपुराणे

पुण्यं कनखले यच्च प्रयागे यच्च सुन्दरि ।
तत्फलं सकलं देवि भूतिस्नाने [6]दिनेदिने ॥

'भूति'र्भस्म ॥

तथा

उच्छिष्टं वा प्रमत्तं वा नरवाहननन्दिते[7] ।
भूतिस्पृष्टं हि न नरं[8] [9]धर्षयन्ति विनायकाः ॥

'प्रमत्तो'ऽनवहितः[10] । 'धर्षयन्ति' अभिभवन्ति[11] ॥

1 पठितं—द, ब, क, ना ; पठितो—उ, वी. मि. आ.
2 यदिति—ब, द.
3 कालदोषादिति कालदोषयोस्तुल्यं फलम्—ब, द.
4 मात्रादि—ना ; मन्त्रादि—उ.
5 ब्रह्मपुराणे—वी. मि. आ., Reproduced by वी. मि. आ., १९५.
6 विधीयते—A.S.B. ब, ज, क, ना, द, वी. मि. आ.
7 नन्दिते:—ज ; नन्दिनि—ना.
8 न हि नरं—ब, द, ज, क ; भूतस्पृष्टं हि न नरं—उ.
9 वर्षयन्ति—क.
10 प्रमत्तो वा उन्मत्तः—ब, द.
11 भर्त्सयन्ति—द, ब, क ; वी. मि. आ., त्रासयन्ति—ज.

[1]विष्णुपुराणे—[२, ९, १२–१३ ; १५–१६]

आकाशगङ्गासलिलं समादाय गभस्तिमान् ।
अनभ्रगतमेवोर्व्यां सद्यः क्षिपति रश्मिभिः ॥
तस्य [2]संस्पर्शनिर्धूतपापपङ्को द्विजोत्तमः ।
न याति नरकं मर्त्यो दिव्यं स्नानं हि तत्स्मृतम् ॥
कृत्तिकादिषु ऋक्षेषु [3]विषमेष्वम्बु यद्दिवः ।
दृष्टार्के[4] पतति ज्ञेयं तद्गाङ्गं दिग्गजोज्झितम्[5] ॥
युग्मर्क्षेषु च यत्तोयं पतत्यर्कोज्झितं दिवः[6] ।
तत्सूर्यरश्मिभिः सद्यः समादाय निरस्यते ॥

'विषमेषु' प्रथमतृतीयपञ्चमसप्तमनवमादिषु [7]कृत्तिकामृगशिरःपुनर्वसुप्रभृतिषु[8] । 'युग्मर्क्षेषु' समेषु [9]रोहिण्यार्द्राप्रभृतिषु ॥

तथा [२, ९, १७]

उभयं पुण्यमत्यर्थं नृणां पापहरं द्विज ।
आकाशगङ्गासलिलं दिव्यं स्नानं महामुने ॥

1 Reproduced by वी. मि. आ., १९५–१९६.

2 स्पर्शविनिर्धूत—द, ब ; तस्मिन्संस्थश्च निर्धूतपापको हि द्विजोत्तमः—ना.

3 विषमेषु स्वयं दिवः—द, ब ; विषमेषु वियद्दिवः—क ; विषमेषु च यद्दिवः—ज, वी. मि. आ.

4 दृष्टार्के—ब, ना, द ; दृष्टार्के—उ.

5 गजोज्झितम्—ब, ज, क, द, वी. मि. आ. ; दिग्गजेरितम्—उ.

6 दिवः—द, ब, क, ना, A.S.B ; त्यर्ककरोज्झितम्—ज ; दिवम्—उ.

7 अश्विनी—ब, द.

8 षु समेषु—ना.

9 रोहिण्यार्द्रादिषु—ब, द.

[1]वाराहपुराणे[2]

दक्षिणावर्तशङ्खेन तिलमिश्रोदकेन तु[3] ।
उदके नाभिमात्रे तु[4] यः कुर्यादभिषेचनम् ॥
प्राक्स्रोतसि[5] तु वै नद्यां नरस्त्वेकाग्रमानसः ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
'प्राक्स्रोतसि' पूर्वदिक्प्रवाहायाम्[6] ॥
अच्छिन्नपद्मपत्रेण[7] सर्वरत्नोदकेन[8] च[9] ।
स्रोतसो वै नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥
दक्षिणावर्तशङ्खेन [10]पात्र औदुम्बरे स्थितम् ।
उदकं यः प्रतीच्छेत शिरसा हृष्टमानसः[11] ॥
[12]तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ।

1 वराहपुराणे—A.S.B.

2 वी. मि. आ., २०१; मुद्रितवराहपुराणे त्वेवं पाठः—
दक्षिणावर्तसव्येन कृत्वा प्राक्स्रोतसं नदीम् ।
कृत्वाभिषेकं विधिवत् ततः पापात्प्रमुच्यते ॥
दक्षिणावर्तशङ्खेन कृत्वा चैव करे जलम् ।
शिरसा तद्गृहीत्वा तु विप्रो हृष्टमनाश्शुचिः ॥
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ।
प्राक्स्रोतसं नदीं गत्वा नाभिमात्रजले स्थितः ॥
स्नात्वा कृष्णतिलैर्मिश्राः दद्यात्सप्ताञ्जलीर्नरः ॥

3 च—ब, ज, क, द.

4 मात्रेण यः—क.

5 सि वै नद्यां—ना.

6 नद्याम्—ब, द.

7 पत्रपद्मेन—ब, द, वी. मि. आ.

8 वर्णोदकेन—क.

9 तु—ना.

10 पात्रे औदु—ना, द.

11 शिरसाकृष्टमानसः—द, ब; शिरसानन्यमानसः—ना.

12 शतजन्मकृतं—ना.

'[1]औदुम्बरे' ताम्रे । 'शिरसे'ति सप्तम्यर्थे तृतीया ॥

जाबालिः

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम्[2] ।
आर्द्रेण वाससा वापि मार्जनं [3]दैहिकं विदुः ॥

'[4]शिर' इत्यनुवृत्तौ—

मनुः—[४, ८२]

[5]न च स्नायाद्विना ततः ॥

अनेन स्नानशक्तौ[6] सत्यां विहितं स्नानं सशिरस्कमेव कर्तव्यमित्युक्तम् ॥

मार्कण्डेयपुराणे[7]—[३४, ३५]

शिरःस्नातस्तु[8] कुर्वीत दैवं पित्र्यमथापि वा ।

## अथ स्नानविधिः

तत्र शङ्खः[9]—[९, १-१५]

क्रियास्नानं तु वक्ष्यामि यथावदनुपूर्वशः ॥
मृद्भिरद्भिश्च कर्तव्यं शौचमादौ यथाविधि ।

1 औदुम्बरपात्रे । जाबालिः—क.
2 कर्मिणां—द, ब, ज ; कर्मणां—ना ; कर्मणि—उ.
3 देहिनं विदुः—ना.
4 अशिर इति—ब, द ; अशिरस्कमित्यनुवृत्तौ—ज.
5 नैव—ब, ज, द.
6 शक्तौ विहितं—क.
7 वी. मि. आ., १९७.
8 शिरःस्नातस्तु कुर्वीत—ना ; शिरःस्नानं तु—उ.
9 Reproduced by वी. मि. आ., २३५-२३६.

[1]जलेऽभिमग्नस्तून्मज्य उपस्पृश्य यथाविधि ॥
तीर्थस्यावाहनं कुर्यात्तत्प्रवक्ष्याम्यतः परम् ।
"प्रपद्ये [2]वरुणं देवमम्भसां पतिमूर्जितम् ॥
याचितं देहि मे तीर्थं सर्वपापापनुत्तये ।
तीर्थमावाहयिष्यामि सर्वाघविनिषूदनम् ॥
सान्निध्यमस्मिन्स्वे तोये[3] भजतां मदनुग्रहात् ।
रुद्रान् प्रपद्ये वरदान् [4]सर्वानप्सुषदः स्वयम् ॥
सर्वानप्सुषदश्चैव प्रपद्ये प्रणतः स्थितः ।
देवमप्सुषदं वह्निं प्रपद्येऽघनिषूदनम् ॥
आपः पुण्याः पवित्राश्च प्रपद्ये शरणं[5] तथा ।
रुद्राश्चाग्निश्च [6]सर्पाश्च वरुणस्त्वाप एव च ॥
शमयन्त्वाशु मे पापं पुनन्तु च सदा मम" ।
इत्येवमुक्त्वा कर्तव्यं तत्र संमार्जनं जले[7] ॥
[8]आपो हि ष्ठेति तिसृभिर्यथावदनुपूर्वशः ।
[9]हिरण्यवर्णेति च वै [10]ऋग्भिश्चतसृभिस्तथा ॥
[11]शन्नो देवीरिति तथा [12]शन्न आपस्तथैव च ।

1 जले निमग्न—द, ब, ज, ना, वी. मि. आ.
2 वारुणं—ना, वी. मि. आ.
3 सांनिध्यमस्मिंश्च तोये—द.
4 सर्वानप्सुषदस्त्वहम्—द, ब, वी. मि. आ ; सर्वानप्सुखदस्स्वयं—ना.
5 वरुणं—ब, ज, द.
6 सूर्याश्च—ज, ना.
7 जलैः—ब, द.
8 ऋ. सं., १. ९. १ ; तै. सं., ४. १. ५. १ ; ५. ६. १. ४ ; ७. ४. १९. ४.
9 तै. सं., ५. ६. १. १ ; मैत्रा. सं., १. २. १.
10 ऋग्भिश्चतसृभिस्तथा—क ; ऋग्भिश्च तिसृभिस्तथा—उ.
11 ऋ. सं., १०. ९. ४ ; ऋग्वेदखिल., १०. १२७. १३ ; तै. ब्रा., १. २. १. १ ; २. ५. ८. ५.
12 कठ. सं., २. १ ; अ. वे., १. ६. ४.

इदमापः प्रवहत[1] तथा मन्त्रमुदीरयेत् ॥
एवं संमार्जनं कृत्वा छन्द आर्षं च दैवतम्[2] ।
अघमर्षणसूक्तस्य[3] संस्मरेत्प्रयतः सदा ॥
छन्द आनुष्टुभं तस्य ऋषिश्चैवाघमर्षणः ।
देवता भाववृत्तश्च पापघ्नस्य प्रकीर्तितः ॥
ततोऽम्भसि निमज्जेत्तु त्रिः पठेदघमर्षणम् ।
यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ॥
तथाघमर्षणं सूक्तं सर्वपापापनोदनम्[4] ।
अनेन विधिना स्नात्वा अब्मध्ये स्नानवाससा ॥
परिवर्तितवासाश्चेत्[5] तीर्थतीर उपस्पृशेत् ।
उदकस्याप्रदानाद्धि स्नानशाटीं न पीडयेत् ॥
अनेन विधिना स्नातः पुण्यं फलमुपाश्नुते ।

'भजतामि'त्यस्य[6] 'वरुण' इति विपरिणतेनान्वयः । 'हिरण्यवर्णे'ति, "हिरण्यवर्णा शुचयः पावकाः" इत्याद्याश्चतस्रस्तैत्तिरीयमैत्रायणीययोः[7] । 'शन्न आप' इति, "शन्न आपो धन्वन्या" इति कठशाखायाम्[8] । 'पापघ्नस्य' अघमर्षणसूक्तस्येत्यन्वयः ॥

योगियाज्ञवल्क्यः[9]

एतच्छ्रुत्वाथ वचनं याज्ञवल्क्यस्य वै तदा ।

1 ऋ. सं., १. २३. २२.
2 सदैवतम्—ब, ज, क, द.
3 सूक्तस्य—ज, द; सूक्तश्च—उ.
4 इतःपरं 'ब' 'द' कोशयोः—'दध्यान्मूर्धवि तथा महाव्याहृतिभिर्जलम्' इति वर्तते.
5 साश्च तीर्थ—द.
6 स्य विपरिण—द.
7 तैत्तिरीयसंहिता, ५. ६. १. १; मैत्रायणीयसंहिता, १. २. १.
8 कठसंहिता, २. १.
9 वी. मि. आ., २२१–२२४.

ऋषयः [1]संशितात्मानः पृच्छन्ति स्नाननिश्चयम् ॥
स्नानमन्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुरानघ ।
तदाचक्ष्व विशेषेण स्नानस्य [2]तु विधिं प्रभो ॥
[3]तान्प्रत्युवाच प्रीतात्मा याज्ञवल्क्योऽमितद्युतिः ।
शृणुध्वं वक्ष्यते स्नानं सर्वपापप्रणाशनम् ॥
मृत्तिलान्[4] गोमयं[5] दर्भान् पुष्पाणि सुरभीणि च ।
आहरेत्स्नानकाले तु स्नानार्थं प्रयतः शुचिः ॥
गत्वोदकान्तं विविक्तमास्थाप्यैतत्पृथक् क्षितौ ।
त्रिधा कृत्वा मृदं तां तु गोमयं तु[6] विचक्षणः[7] ॥
[8]अधमोत्तममध्यानामङ्गानां क्षालनं तु वै[9] ।
भागैः पृथक् पृथक् कुर्यात् क्षालने मृदसंकरः[10] ॥

तथा

अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याचम्य वै शुचिः ।
[11]उरुं हीति ऋचा तोयमुपस्थाय प्रदक्षिणम् ॥
आवर्तयेत्तदुदकं [12]ये ते शतमिति ऋचा ।

1 संयतात्मान:—ज.
2 च विधिं मम—ब, द.
3 श्लोकार्धमिदं 'ब' 'द' कोशयोर्नास्ति.
4 मृत्तिकाम्—ना.
5 गोमयं—ब, ज, ना, द; गोमयान् —उ.
6 च—क.
7 अर्धमिदं 'ब' 'द' कोशयोर्नास्ति.
8 प्रथमोत्तममध्यानां—द.
9 तैः—ना.
10 संकर: ॥ अद्भिः—ना.
11 ऋ. सं., १. २४. ८; उरुं हीति तृचा तोयम्—ज; उरुं हि इत्यृचा तोयं—ब.
12 कात्यायनश्रौतसूत्रम्, २५. १. ११; आपस्तम्बश्रौतसूत्रम्, ३. १३. १; २४. १२. ६; कौशिकसूत्रम्, ९७. ८; ये ते शतमिति त्र्यृचा—ज, ना; ये ते शतमिति त्रिभा—A.S.B.; ये ते शतमितीति च—ब.

[1]सुमित्रिया इत्यञ्जलिमुद्धरेद्दैवतं [2]स्मरन् ॥
[3]दुर्मित्रिया इति द्वेष्यं ध्यायंश्चापः प्रसेचयेत् ॥
अद्भिर्मृद्भिश्च गात्राणि क्रमशस्त्ववनेजयेत् ।
एकया तु शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि ॥
कटिवस्त्यूरु जङ्घे च चरणौ च [4]त्रिभिस्त्रिभिः ।
प्रक्षाल्य [5]हस्तौ चाचम्य नमस्कृत्य जलं तु[6] तत् ॥
[7]यत्किं चेति च मन्त्रेण [8]नमस्येत्प्रयताञ्जलिः ।
यत्र स्थाने तु यत्तीर्थं नदी पुण्यतमा च या ॥
तां ध्यायेन्मनसाऽऽवाह्य चान्यत्रेष्टं विचिन्तयेत् ।
गङ्गादिपुण्यतीर्थानि कृत्रिमादिषु संस्मरेत् ॥
[9]उदुत्तममिति विशेत्तज्जलं प्राङ्मुखः शुचिः ।
[10]येन देवाः पवित्रेति कुर्यादालम्भनं त्रिभिः ॥
महाव्याहृतिभिः पश्चादाचामेत्प्रयतोऽपि सन् ।
[11]आलभेत मृदाङ्गानि [12]इदं विष्णुरिति ऋचा ॥
भास्कराभिमुखो मज्जेदापो अस्मानिति[13] ऋचा ।

1 वाज. सं., ६. २२; तै. सं., (सुमित्रा न आप) १. ४. ४५. २; सुमित्रिया न इत्यपोऽञ्जलिमुद्धरेद्दैवतं स्मृतम्—ब, द.

2 स्मरेत्—ना.

3 वाज. सं., ६. २२; तै. सं., (दुर्मित्रास्तस्मै) १. ४. ४५. २.

4 त्रिभेदतः—ब, द.

5 हस्तावाचम्य—ना.

6 च—ना.

7 ऋ. सं., ७. ८९. ५; तै. सं., ३. ४. ११. ६.

8 नमस्येत कृताञ्जलिः—ब, द.

9 ऋ. सं., १. २४. १५; तै. सं., १. ५. ११. ३.

10 ऋग्वेदखिल., ९. ६७. ४; तै. ब्रा., १. ४. ८. ६.

11 आलभेत्तु—ब, क, द.

12 ऋ. सं., १. २२. १७; तै. सं., १. २. १३. १.

13 ऋ. सं., १०. १७. १०; तै. सं., १. २. १. १.

ततोऽवमृष्य गात्राणि निमज्योन्मज्य वै पुनः ॥
आचम्य गोमयेनापि [1]मानस्तोक्या समालभेत् ।
ततोऽभिषिच्य [2]मन्त्रैस्तु वारुणैश्च[3] यथाक्रमम् ॥
[4]इमं मे वरुणेत्यृग्भ्यां [5]त्वन्नः [6]स त्वन्न इत्यपि ।
[7]माप [8]उदुत्तममिति [9]मुञ्चत्ववभृथेति[10] च ॥
अभिषिच्य तदात्मानं निमज्याचम्य वै पुनः ।
दर्भैस्तु पावयेन्मन्त्रैरब्लिङ्गैः पावनैः शुभैः ॥
[11]आपो हि ष्ठेति तिसृभिरिदमापो[12] हविष्मतीः[13] ।
[14]देवीराप इति द्वाभ्यामपो देवा[15] इति ऋचा ॥
[16]द्रुपदादिव इत्यृचा [17]शन्नो देवीरपां रसम्[18] ।

1 ऋ सं., १. ११४. ८; तै सं., ३. ४. ११. २; ४. ५. १०. ३.
2 'मन्त्रैस्तु' इत्यारभ्य 'मुञ्चत्ववभृथेति च' इत्येतत्पर्यन्तं नास्ति—ना.
3 वारुणैस्तु—क, द.
4 ऋ. सं., १. २५. १९; तै. सं., २. १. ११. ६.
5 ऋ. सं., ४. १. ४; तै. सं., २. ५. १२. ३.
6 ऋ. सं., ४. १. ४; तै सं., २. ५. १२. ३.
7 वाज. सं., ६. २२; शत. ब्रा., ३. ८. ५. १०.
8 ऋ. सं., १. २४. १५; तै सं., १. ५. ११. ३.
9 ऋ. सं., १०. ९७. १६.
10 वाज. सं., ३. ४८; ८. २७; २०. १८; तै. सं., (अवभृथ निचङ्कुणा) १. ४. ४५. २; ६. ६. ३. ४.
11 ऋ. सं., १०. ९. १; तै. सं., ४. १. ५. १; ५. ६. १. ४; ७. ४. १९. ४.
12 ऋ. सं., १. २३. २२.
13 तै. सं., १. ३. १२. १; ६. ४. २, ४.
14 तै. सं., १. २. ३. ३.
15 वाज. सं., १०. १; शत. ब्रा., ५. ३. ४. ३.
16 अ. वे., ६. ११५. ३; तै. ब्रा., (द्रुपदादिवेन्) २. ४. ४. ९.
17 ऋ. सं., १०. ९. ४; ऋग्वेदखिल., १०. १२७. १३; तै. ब्रा., १. २. १. १; २. ५. ८. ५.
18 तै. सं., १. ७. १२. २; तै. ब्रा., १. २२. ८.

[1]अपो देवीः पावमान्यः [2]पुनन्त्वाद्या ऋचो नव ॥
[3]चित्पतिर्मेति च शनैः [4]पाव्यात्मानं समाहितः ।
[5]हिरण्यवर्णा इति च [6]पावमान्यस्तथापराः ॥
[7]तरत्समाः [8]शुद्धवतीः [9]पवित्राण्यपि शक्तितः ।
वारुणीश्च ऋचः सूक्तं शक्तितः संप्रयोजयेत् ॥
जलमध्ये स्थितो विप्रः शुद्धभावो हरिं स्मरेत् ।
ॐकारेण व्याहृतिभिर्गायत्र्या तु[10] समाहितः ॥
आदावन्ते च कुर्वीत ह्यभिषेकं यथाक्रमम् ।
अपां मध्ये स्थितस्यैवं मार्जनं तु विधीयते ॥
अन्तर्जले [11]जपेन्मन्त्रं त्रिःकृत्वस्त्वघमर्षणम् ।
द्रुपदां वा त्रिरभ्यस्येदायं गौरिति[12] वा [13]त्र्यृषम् ॥
[14]हंसः शुचिषदित्यृचं[15] त्रिरावर्त्य जपेदथ ।
अन्यानि चैव सूक्तानि स्मार्तदृष्टान्यनुस्मरेत् ॥
सव्याहृतिं सप्रणवां गायत्रीं त्रिर्जपेदथ ।

1 तै सं., ४. १. २. ४.
2 वाज. सं., १९. ३७; तै. ब्रा., २. ६. ३. ३.
3 वाज. सं., ४. ४.
4 त्पाव्यात्मानं—A.S.B.
5 तै. सं., ५. ६. १. १.
6 ऋग्वेदखिल., ९. ६७. १; तै. ब्रा., १. ४. ८. ४, ५.
7 ऋ. सं., ९. ५८. १–४.
8 ऋ. सं., ८. ९५. ७.
9 ऋ. सं., १०. ९०. १; तै. आ., ३. १२. १.
10 च—ब, ज, द.
11 जपेन्मग्नः—ब, ना, द, A.S.B., वी. मि. भा.
12 ऋ. सं., १०. १८९. १; तै. सं., १. ५. ३. १.
13 त्र्यृचं—ब, ना, द; ऋचम्—उ.
14 ऋ. सं., ४. ४०. ५; तै. सं., १. ८. १५. २; ४. २. १. ५.
15 इत्युक्तं त्रिरावर्त्य—ब, द, वी. मि. भा.

आवर्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥
विष्णोरायतनं [1]ह्यापः स ह्यपां पतिरुच्यते ।
तस्यैव सूनवस्त्वेतास्तस्मात्तं ह्यप्सु संस्मरेत् ॥
नरादापः प्रसूता वै तेन नारा इति स्मृताः ।
ता एवास्यायनं ह्यापस्तस्मान्नारायणः स्मृतः ॥
यं हि व्रतानां वेदानां यमस्य नियमस्य च ।
भोक्तारं यज्ञतपसां ध्यायिनां ध्येयमेव च ॥
[2]ध्यायन्नारायणं नित्यं स्नानादिषु च कर्मसु ।
प्रायश्चित्तेषु सर्वेषु दुष्कृतान्मुच्यते पुमान् ॥
प्रमादात्कुर्वतां कर्म [3]प्रच्यवत्यध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति [4]स्मृतिः ॥
[5]तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनःपुनः ।
गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥
पादेन पाणिना वापि यष्ट्या वस्त्रेण चोदकम् ।
न हन्यान्नैव वादेच्च न च प्रक्षोभयेद्बुधः ॥
न कुर्यात्कस्यचित्पीडां कर्मणा मनसा गिरा ।
आचरन्नभिषेकं तु कर्माण्यन्यानि नाचरेत् ॥
योऽसौ विस्तरशः[6] प्रोक्तः स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥
स्नानमन्तर्जलं[7] चैव मार्जनाचमने तथा ।

1 ह्यापः तस्मान्नारायणः स्मृतः—क.
2 ध्यायेन्नारायणं—ना.
3 प्रच्यवेताध्वरेषु—ना, वी. मि. आ.
4 श्रुतिः—ब, ज, ना, द, वी. मि. आ.
5 ऋ. सं., १. २२. २० ; तै. सं., १. ३. ६. २ ; ४. २. ९. ३.
6 विस्तरतः—A. S. B.
7 स्नानमन्तर्जले—ब, ज.

जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतत्समुद्दिष्टं[1] महात्मभिः ॥
अन्यान्वा[2] वारुणान्मन्त्रान्कामतः संप्रयोजयेत् ।
यथाकालं [3]यथादेशं ज्ञात्वा कुर्याद्विचक्षणः ॥

'एतत्' [4]मृत्तिकादि । 'गोमयं च' 'त्रिधा कृत्वे'त्यनुषङ्गः[5] । 'अधममङ्गं' नाभेरधः । 'उत्तममङ्गं' शिरः । 'मध्यममङ्गं' नाभेरुपरि कण्ठपर्यन्तम्[6] । 'मृदसंकरः' पृथक्कृतमृद्भागामेलनम् । 'उरुं हीति' "[7]उरुं हि राजा वरुण" इत्यादिका । 'ये ते शतमिति' "[8]ये ते शतं वरुणम्" इत्यादिका[9] । 'सुमित्रिया' इति, "[10]सुमित्रिया न आप" इति यजुः । 'दुर्मित्रिया' इति, "[11]दुर्मित्रियास्तस्मै सन्तु" इति यजुः । 'यत्किं चे'ति, "[12]यत्किं चेदं वरुण" इत्यादिका ऋक् । '[13]अन्यत्र' उद्धृतजले । 'इष्टं 'तीर्थं' प्रयागादि । 'कृत्रिमं' पुष्करिण्यादि । कृत्रिमादि-

1 समादिष्टं—ना.
2 अन्यांस्तु—ब, ज, द.
3 यथादेशं ज्ञात्वा ज्ञात्वा—द, ब, ज ; यथादेशं—ना; यथोद्देशं—उ.
4 मृत्तिलादि—A. S. B.
5 त्रिधा कृत्वेत्यर्थः—ना.
6 स्कन्धपर्यन्तम्—ब, ज, क, द.
7 ऋ. सं., १. २४. ८.
8 कात्यायनश्रौतसूत्रम्, २५. १. ११ ; आपस्तम्बश्रौतसूत्रम्, ३. १३. १ ; २४. १२. ६ ; कौशिकसूत्रम्, ९७. ८.
9 इत्यादिका ऋक् । अन्यत्र उद्धृतजले—ना.
10 वाज. सं., ६. २२ ; तै. सं., (सुमित्रा न आप) १. ४. ४५. २
11 वाज. सं., ६. २२ ; तै. सं., (दुर्मित्रास्तस्मै) १. ४. ४५. २.
12 ऋ. सं., ७. ८९. ५ ; तै. सं., ३. ४. ११. ६.
13 'अन्यत्र उद्धृतजले । इष्टं' इति नास्ति—ब.

ष्वित्यादिशब्देनाकृत्रिमतीर्थभूतह्रदादिग्रहणम्। 'उदुत्तम'-मिति, "[1]उदुत्तमं वरुण पाशम्" इत्यादिका ऋक्। 'प्राङ्मुखः कुर्यादि'ति, 'आलम्भनमि'त्यन्वयः। 'आलम्भनं' हस्तेन नद्यादिजलस्पर्शनम्[2]। 'इदं विष्णु'रिति, "[3]इदं विष्णुर्विचक्रमे" इति ऋक्। मृदालम्भनं चार्थादङ्गप्रक्षालनार्थं त्रिधाकृतमृद्व्यतिरिक्तमृदा, त्रिधाकृताया अङ्गप्रक्षालने विनियुक्तत्वात्। 'आपो अस्मानि'ति, "[4]आपो अस्मान् मातर" इति ऋक्। 'भास्कराभिमुखो मज्जेदि'त्येतत्तडागादौ [5]बोद्धव्यम्॥

तदुक्तं नृसिंहपुराणे[6]

नद्यां स्रवत्सु च स्नायात्प्रतिस्रोतःस्थितो द्विजः।
तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत्॥ इति

'मानस्तोकया', "[7]मानस्तोके तनये मान" इत्यनया ऋचा। 'इमं म' इति, "[8]इमं मे वरुण श्रुधी हवम्" इति, "[9]तत्त्वा यामि" इति ऋचौ। "त्वन्न इति, "[10]त्वन्नो अग्ने वरुणस्य[11]" इत्यादिका ऋक्। 'स त्वन्न' इति, "[12]स त्वन्नो

1 ऋ. सं., १. २४. १५; तै. सं., १. ५. ११. ३; ४. २. १. ३; ५. २. १. ३.
2 स्पर्शः। आलम्भनञ्चार्थादङ्गप्रक्षालनार्थं—ब, द.
3 ऋ. सं., १. २२. १७; तै. सं., १. २. १३. १.
4 ऋ. सं., १०. १७. १०; तै. सं., १. २. १. १.
5 बोद्धव्यमिति तदुक्तमिति च नास्ति—ब, द, बोद्धव्यम्। नरसिंहपुराणे—ना.
6 वी. मि. आ., २१८; नरसिंहपुराणे—ब; अयं श्लोकः मुद्रितनरसिंहपुराणे न दृश्यते.
7 ऋ. सं., १. ११४. ८; तै. सं., ३. ४. ११. २; ४. ५. १०. ३.
8 ऋ. सं., १. २५. १९; तै. सं., २. १. ११. ६.
9 ऋ. सं., १. २४. ११; तै. सं., २. १. ११. ६.
10 ऋ. सं., ४. १. ४; तै. सं., २. ५. १२. ३.
11 स्य विद्वान् इत्यादिका ऋक्—क.
12 ऋ. सं., ४. १. ४; तै. सं., २. ५. १२. ३.

अग्नेऽवमो भवीति" इत्यादिका ऋक्। 'माप' इति, "[1]मापो मौषधीः" इत्यादिका ऋक्। '[2]उदुत्तम'मिति, 'उदुत्तमं वरुण पाशम्' इत्यादिका। 'मुञ्चत्वि'ति, "[3]मुञ्चन्तु मा शपथ्याद्" इत्यादिका। 'अवभृथे'ति, "[4]अवभृथ निचुम्पुण" इत्यादि यजुः। 'इदमाप' इति, "[5]इदमापः प्रवहत" इति। 'हविष्मती'रिति, "[6]हविष्मतीरिमा आप" इति। 'देवीराप इति द्वाभ्या'मिति, "[7]देवीरापो अपान्नपाद्" इति "[8]कार्षिरसि" "[9]समुद्रस्य त्वा" इति द्वे। 'अपो देवा' इति, "[10]अपो देवा मधुमतीः" इति। 'द्रुपदादिवे'ति, "[11]द्रुपदादिव मुमुचान" इति। 'शन्नो देवीरि'ति, "[12]शन्नो देवीरभिष्टये" इति। 'अपां रसम्' इति, "[13]अपाँ रसमुद्वयसम्" इति। 'अपो देवीरि'ति, "[14]अपो देवीरुपसृज" इति। 'पावमान्यः' "[15]पुनन्तु मा पितर" इत्याद्या नव

1 वाज. सं., ६, २२; शत. ब्रा., ३. ८. ५. १०.

2 ऋ. सं., १. २४. १५; तै. सं., १. ५. ११. ३; ४. २. १. ३; ५. २. १. ३.

3 ऋ. सं., १०. ९७. १३.

4 वाज. सं., ३. ४८; ८. २७; २०. १८; तै. सं., (अवभृथ निचङ्कुण) १. ४. ४५. २; ६. ६. ३. ४.

5 ऋ सं., १. २३. २२.

6 तै. सं., १. ३. १२. १; ६. ४. २. ४.

7 तै सं., १. २. ३. ३.

8 तै. सं., १. ३. १३. २.

9 तै. सं., ४. ६. १. १.

10 वाज. सं., १०. १; शत. ब्रा., ५. ३. ४. ३.

11 अ. वे. ६. ११५. ३; तै. ब्रा., (द्रुपदादिवेन्मुमुचान) २. ४. ४. ९.

12 ऋ. सं., १०. ९. ४, ऋग्वेदखिल., १०. १२७, १३; तै. ब्रा., १. २. १. १; २. ५. ८. ५.

13 तै. सं., १. ७. १२. २; तै. आ., १. २२. ८.

14 तै. सं., ४. १. २. ४.

15 वाज. सं., १९. ३७; तै. ब्रा., २. ६. ३. ३.

ऋचः। '[1]चित्पतिर्मे'ति, "चित्पतिर्मा पुनातु" इति, "[2]वाकपतिर्मा पुनातु" अन्ते च "[3]अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" इत्यनुषङ्गेण मन्त्रद्वयम्। "[4]देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" इति च तृतीयो मन्त्रः। एतैर्मन्त्रैः 'पाव्य' पावयित्वेत्यर्थः। "[5]हिरण्यवर्णा" उक्ताः। अपराः[6] 'पावमान्यः' "[7]पावमानीः स्वस्त्ययनीः" इत्यादिकाः। 'तरत्समाः' "[8]तरत्समन्दी धावति" इत्यादिकाः। 'शुद्धवतीः' "[9]एतोन्विन्द्र स्तवाम" इत्यादिकाः। 'पवित्राणि' [10]पुरुषसूक्तादीनि। 'वारुण ऋचः' अपरा अपि। 'सूक्तं' च वारुणमेव। 'आदावन्ते चे'ति, आदौ पावनस्य पावनस्यान्ते चेत्यर्थः। 'अभिषेकः' शिरसि हस्तेन जलक्षेपः। एवमभिषेकवत् प्रणवव्याहृतिगायत्रीभिर्मार्जनमपि [11]जलस्थेन कर्तव्यमित्यर्थः। 'आयं गौ'रिति, "[12]आयं गौः पृश्निरक्रमीत्" इति। 'हंसः शुचिषदि'ति, "[13]हंसः शुचिषद्वसु" इत्यादिका। 'स्मार्त-

1 वाज. सं., ४. ४.
2 वाज. सं., ४. ४; तै. सं., १. २. १. २; ६. १. १. ९.
3 वाज. सं., ४. ४; तै. सं., १. १. ५. १; १०. ३; २. १. २.
4 वाज. सं., ४. ४.
5 तै. सं., ५. ६. १. १.
6 इत आरभ्य २२—२९ अङ्कितपत्राणि A.S.B. कोशे नोपलभ्यन्ते.
7 ऋग्वेदखिल., ९. ६७. १, १६; तै. ब्रा., १. ४. ८. ४, ५.
8 ऋ. सं., ९. ५८. १–४.
9 ऋ. सं., ८. १५. ७.
10 ऋ. सं., १०. ९०. १; तै. आ., ३. १२. १.
11 जलस्थेनैव—ज.
12 ऋ. सं., १०. १८९. १; तै. सं., १. ५. ३. १.
13 ऋ. सं., ४. ४०. ५; तै. सं., १. ८. १५. २; ४. २. १. ५.

दृष्टानि' स्मार्तैर्मन्वादिभिर्दृष्टानि। यथा "[1]युञ्जते मन" इत्यनुवाकः। 'विष्णुमव्ययं' व्यापिनं [2]कारणपुरुषमित्यर्थः[3]। 'प्रायश्चित्तेषु' पापक्षयहेतुषु सर्वेषु कर्मसु नारायणं ध्यायन् दुष्कृतान्मुच्यते। [4]यदि तु प्रमादादङ्गवैकल्यमपि[5] स्यात्तदापि संपूर्णफलत्वमेवेत्यर्थः[6]। 'तद्विष्णो'रिति, "[7]तद्विष्णोः परमं पदं सदा पश्यन्ति" इति। 'अन्यानी'ति, आचरन्नभिषेकं [8]पादाभिघातपरपीडापर्यन्तानि नाचरेत्। एतेन स्नानमेवाङ्गहीनं भवतीति दर्शितम्। 'योऽसावि'ति[9], यदि तु [10]कालदेशासामर्थ्यादिवशाद्विस्तरेण स्नानविधिं कर्तुमसमर्थस्तदाघमर्षणसूक्तेन त्रिरावृत्तेन तीर्थपरिकल्पनजलाभिमन्त्रणाचमनमार्जनान्तर्जलजपस्नानानि कुर्यादित्यर्थः। पूर्वप्रतिपन्नक्रमवत्तीर्थपरिकल्पनादिपदार्थानुवादेन मन्त्रमात्रविपरीतक्रमाभिधानेऽपि स एव क्रमो बोद्धव्यः[11]। यदि तु कालदेशवशात् शक्नोति[12], तदापरानपि वारुणान्मन्त्रान् प्रयोजयेदित्यर्थः ॥

1 ऋ. सं., ५. ८१. १; तै. सं., १. २. १३. १; ४. १. १. १.
2 वरुणरूपमित्यर्थः—ना.
3 मित्यन्वयः—ज, क.
4 यदि प्रमा—क, उ.
5 वैफल्यमपि—क.
6 फलकत्वमेवेत्यर्थः—ब, ज, क, द.
7 ऋ. सं., १. २२. २०; तै. सं., १. ३. ६. २; ४. २. ९. ३.
8 पदाघात—ब, ज, द.
9 ति। कालदेशा—ना.
10 कालदोषादसामर्थ्यादि—ब, ज, द.
11 Comment reproduced by वी. मि. आ., २२४–२२७.
12 वशात् इदमपि न शक्नोति तदापरान् वारुण—ना.

[1]बौधायनः[2]—[२, ८, १–१२]

अथ हस्तौ प्रक्षाल्य[3] कमण्डलुं मृत्पिण्डं च [4]परिगृह्य तीर्थं गत्वा त्रिः पादौ प्रक्षालयते[5] त्रिरात्मानम्। अथ हैके ब्रुवते—श्मशानमापो देवगृहं गोष्ठं यत्र च ब्राह्मणा अप्रक्षाल्य तु पादौ [6]नान्तः प्रवेष्टव्यम्। अथाऽपोऽभिप्रपद्यते—"[7]हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः[8]। यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः॥ यन्मे [9]वाचा मनसा कर्मणा वा दुष्कृतं कृतम्। [10]तन्म इन्द्रो वरुणो बृहस्पतिः सविता[11] च पुनन्तु पुनःपुनः॥" इति। अथाञ्जलिनाप [12]उपहन्ति "[13]सुमित्रिया न आप ओषधयः सन्त्वि"ति[14]। तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति "[15]दुर्मित्रियास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म" इति। अथाप उपस्पृश्य त्रिः प्रदक्षिणमुदकमावर्तयति "[16]यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतादि"ति।

1 अत्र बौधायनः—ना.
2 वी. मि. आ., २३६–२३८.
3 ल्य वा कमण्डलुं—ना.
4 संगृह्य—वी. मि. आ., गृह्य—मु. बोधा. पाठः.
5 प्रक्षालयते—वी. मि. आ., मु. बोधा. पाठः; प्रक्षालयेत्—उ.
6 तन्न for नान्तः—मु. बोधा. पाठः.
7 तै. आ., १०. १. १२; महाना. उप., ४. ११–१२.
8 याचितः—मु. पाठः; याचतः—उ.
9 मनसा वाचा—मु. पाठः.
10 तन्न—वी. मि. आ.
11 ता च पुनःपुनः—क.
12 उपहरन्ति—ब, ना, द.
13 वाज. सं., ६. २२; तै. सं., (सुमित्रा न आप) १. ४. ४५. २.
14 सन्त्विति शिरसि, दुर्मित्रिया अस्मै . . .—ब. द.
15 वाज. सं., ६. २२; तै. सं., (दुर्मित्रास्तस्मै) १. ४. ४५. २.
16 तै. आ., १०. १. १३; महाना. उ., ५. १.

अप्सु निमज्योन्मज्य। नाप्सु सतः प्रयमणं विद्यते न वासः [1]पल्पूलनं नोपस्पर्शनम्। यद्युपरुद्धाः स्युरेतेनोपतिष्ठते[2] "[3]नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्य" इति। उत्तीर्याऽऽचम्याऽऽचान्तः पुनराचामेत्॥ "[4]आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः[5]। [6]आपः पुनन्तु पृथिवीं [7]पृथिवी पूता पुनातु माम्॥ पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्। यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम॥ सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा" इति॥ पवित्रे कृत्वाऽद्भिर्मार्जयति "आपो हि ष्ठा मयोभुवः[8]" इति तिसृभिः, "[9]हिरण्यवर्णाः शुचयः पावका" इति चतसृभिः "[10]पवमानः सुवर्जन" इत्येतेनाऽनुवाकेन मार्जयित्वाऽन्तर्जलगतोऽघमर्षणेन त्रीन्प्राणायामान्धारयित्वोत्तीर्य वासः पीडयित्वा प्रक्षालितोपवातान्यक्लिष्टानि वासांसि परिधायाऽप आचम्य दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेत्॥

1 पल्वननं—क; पल्लवनं—ना; पल्यूलनं—वी. मि. आ; पल्पूलनं—मु. पाठः.

2 ि.ष्ठेत—ना; तिष्ठते—वी. मि. आ; तिष्ठन्ते—उ.

3 तै. आ., १०. १. १२; महाना. उप., (नमोऽग्नये सुमते) ५. १.

4 तै. आ., १०. २२. १; महाना. उप., १४. १.

5 'आपो वा' इत्यारभ्य 'प्राणा वा आपः' इत्यन्तो भागः 'ब. द.' कोशयोः (काशी)मुद्रितबौधायनेऽपि नास्ति। पशव आपोऽन्नमापो ऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दांस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ओ३म्। आपः पुनन्तु etc.—वी. मि. आ.

6 तै. आ., १०. २३. १; महाना. उप., १४. २.

7 पृथ्वी—वी. मि. आ.

8 ऋ. सं., १. ९, १; तै. सं., ४. १. ५. १; ५. ६. १. ४; ७. ४. १९. ४.

9 तै. सं., ५. ६. १. १.

10 तै. ब्रा., १. ४. ८. १; २. ६. ३. ४.

'[1]तीर्थं गत्वा' तीर्थमत्र जलाशयमात्रं विवक्षितम्। 'आत्मानं' स्वशरीरम्। 'त्रिः प्रक्षालयत' इत्यन्वयः[2]। 'अपोऽभिप्रपद्यते' "[3]हिरण्यशृङ्ग" इत्यादिमन्त्रैः। 'अप उपह्नन्ती'ति, उपह्नन्तिरत्र ग्रहणे वर्तते। 'यस्यां दिशि' 'अस्य' स्नानकर्तुः 'द्वेष्यो भवती'त्यन्वयः [4]। 'निरुक्षति' सिञ्चति। 'प्रयमणं' इतस्ततो गमनं प्रतरणं वा। '[5]पल्पूलनं' मलनिर्णेजनम्। अयं च "[6]पल्पूल लवनपवनयो"रित्यस्य चौरादिकस्य ल्युटि प्रयोगः। 'उपस्पर्शन'मत्र गात्रमलोद्धर्षणम्। एतत्सर्वं 'अप्सु सतो न विद्यत' इत्यन्वयः। 'यद्युपरुद्धाः स्युः' आप इति शेषः। उपरोधोऽत्र प्रयमणादिरेव। स यदि प्रमादतः कृतस्तदा "[7]नमोऽग्नय" इत्यादिना मन्त्रेणाऽपामुपस्थानं कुर्यात्। 'पवित्रे' अविच्छिन्नाग्रे द्विदलमात्रे प्रादेशसंमिते। 'उपवातानि' शुष्काणि। 'अक्लिष्टानि' अजीर्णानि॥

[8]कात्यायनः—[स्नानसूत्रम्, १–२०]

अथाऽतो नित्यस्नानम्। नद्यादौ। मृद्गोमयकुशतिलसुमनस आहृत्य। उदकान्तं गत्वा शुचौ देशे स्थाप्य। प्रक्षाल्य पाणिपादम्। कुशोपग्रहो बद्धशिखी यज्ञोपवीती

1 Reproduced by वी. मि. आ., २३७–२३८.

2 इत्यनुषङ्गः—ब, द, ज, वी. मि. आ.

3 तै. आ., १०. १. १२; महाना. उप. ४. १२.

4 भवतीत्यर्थः—ब, ज, द.

5 'प्रयमणं' शौचं मूत्रपुरीषाद्यपनयनलक्षणम्। 'पल्पूलनं' मलापनयनाय पाणिभ्यामवस्फोटनम्॥ 'उपस्पर्शनं' आचमनम्॥ हरदत्तः

6 सिद्धान्तकौमुद्यां धातुसंख्या १८८२.

7 तै. आ., १०. १. १२; महाना. उप., (नमोऽग्नये सुमते) ५. १.

8 वी. मि. आ. २१४–२१५; चौखाम्बामुद्रितपारस्करगृह्यसूत्रे स्नानसूत्रम् ६९५–७०२.

चाचम्य। [1]उरुं हीति तोयमामन्त्र्याऽऽवर्तयेद्ये ते शतमिति[2]। '[3]सुमित्रिया न' इत्यपोञ्जलिनाऽऽदाय '[4]दुर्मित्रिया' इति द्वेष्यं प्रति निषिञ्चेत्। कटिं वस्त्यूरु जङ्घे चरणौ[5] मृदा त्रिस्त्रिः प्रक्षाल्य हस्तौ च। आचम्य नमस्योदकमाल- भेदङ्गानि मृदेदं विष्णुरिति[6]। सूर्याभिमुखो निमज्जेत्। [7]आपो अस्मानिति स्नात्वोदिदाभ्य[8] इत्युन्मज्य निम- ज्योन्मज्याचम्य। गोमयेन विलिम्पेन्मानस्तोक[9] इति। ततोभिषिञ्चेदिमं मे वरुणेति[10] चतसृभिर्मापि उदुत्तमं मुञ्च- न्त्ववभृथेति[11]। अन्ते चैतन्निमज्याचम्य दर्भैः पावयेदापो हि ष्ठेति[12] तिसृभिरिदमापो[13] [14]हविष्मतीर्देवीराप[15] इति द्वा- भ्यामापो देवा[16] द्रुपदादिव[17] [18]शन्नो देवीरपां रसम्[19]अपो

1 ऋ. सं., १. २४. ८.
2 कात्यायनश्रौतसूत्रम्, २५. १. ११; आप. श्रौ. सू., ३. १३. १; २४. १२. ६.
3 वाज. सं., ६. २२; तै. सं., १. ४. ४५. २.
4 वाज. सं., ६. २२; तै. सं., १. ४. ४५. २.
5 चरणौ करौ—वी. मि. आ.
6 ऋ. सं., १. २२. १७; तै. सं., १. २. १३. १.
7 ऋ. सं., १०. १७. १०; तै. सं., १. २. १. १.
8 ऋ. सं., १०. १७. १०; तै. सं., (उदाभ्यः) १. २. १. १.
9 ऋ. सं., १. ११४. ८; तै. सं., ३. ४. ११. २; ४. ५. १०. ३.
10 ऋ. सं., १. २५. १९; तै. सं., २. १. ११. ६.
11 माप—वाज. सं., ६. २२; शत. ब्रा., ३. ८. ५. १०; 'उदुत्तमं' ऋ. सं., १. २४. १५; तै. सं., १. ५. ११. ३. etc; 'मुञ्चतु' ऋ. सं., १०. ९७. १६; 'अवभृथ' वाज. सं., ३. ४८; तै. सं., १. ४. ४५. २; ६. ६. ३. ४.
12 ऋ. सं., १. ९. १; तै. सं., ४. १. ५. १; ५. ६. १. ४; ७. ४. १९. ४.
13 ऋ. सं., १. २३. २२.
14 तै. सं., १. ३. १२. १; ६. ४. २. ४.
15 तै. सं., १. २. ३. ३.
16 वाज. सं., १०. १; शत. ब्रा., ५. ३. ४. ३.
17 अ. वे., ६. ११५. ३; तै. ब्रा., (द्रुपदादिवेन्) २. ४. ४. ९.
18 ऋ. सं., १०. ९. ४; ऋग्वेदखिल., १०. १२७. १३.
19 तै. सं., १. ७. १२. २; तै. आ., १. २२. ८.

देवी:[1] [2]पुनन्तु मेति नवभिश्चित्पतिर्मेति[3]। ओंकारेण व्याहृतिभिर्गायत्र्या चादावन्ते च। अन्तर्जले चाघमर्षणं त्रिरावर्तयेत्। [4]द्रुपदादिवाऽऽयं गौरिति[5] वा तृचं प्राणायामं वा सशिरसमोमिति वा। विष्णोर्वा स्मरणम् ॥

[6]<u>वसिष्ठः</u>

अथ स्नानविधिं कृत्स्नं प्रवक्ष्याम्यनुपूर्वशः।
येन [7]स्नात्वा दिवं यान्ति श्रद्दधाना द्विजोत्तमाः ॥
[8]नदीषु देवखातेषु तडागेषु सरःसु च।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥
पारक्येषु निपानेषु न स्नायाद्धि कदाचन।
निपानकर्तुः स्नात्वा तु दुष्कृतांशेन लिप्यते ॥
अलाभे देवखातानां सरसां सरितां तथा।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥
अरुग्दिवाचरेत्स्नानं मध्याह्नात्प्राग्विशेषतः।
प्रयतो मृदमादाय दूर्वामार्द्रं च गोमयम् ॥
स्थापयित्वा तथाऽऽचम्य ततः स्नानं समाचरेत्।
[9]प्रक्षाल्य हस्तौ पादौ च शिखाबन्धं समाचरेत् ॥
मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि।
अधश्चतसृभिः कार्यं षड्भिः पादौ तथैव च ॥

1 तै. सं., ४. १. २. ४.
2 वाज. सं., १९. ३७ ; तै. ब्रा., २. ६. ३. ३.
3 वाज. सं., ४. ४.
4 वाज. सं., २०. २० ; अ. वे., ६. ११५. ३.
5 ऋ. सं., १०. १८९. १ ; तै. सं., १. ५. ३. १.
6 वी. मि. आ., २३३–२३४.
7 स्नाता—वी. मि. आ.
8 Three s'lokas omitted here in MSS. and are supplied by वी. मि. आ., २३३.
9 Supplied by वी. मि. आ., २३३.

प्रक्षाल्य सर्वकायं च[1] द्विराचम्य यथाविधि ।
ततः संमार्जनं कुर्यान्मृदा पूर्वं तु मन्त्रवत्[2] ॥
"[3]अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना[4] ॥
मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च ।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥
मृत्तिके जहि मे[5] सर्वं यन्मया दुष्कृतं कृतम् ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥"
पुनश्च गोमयेनैवमग्रमग्रमिति ब्रुवन् ।
"अग्रमग्रं चरन्तीनामोषधीनां रसं वने ॥
तासामृषभपत्नीनां पवित्रं कायशोधनम् ।
त्वं मे रोगांश्च शोकांश्च [6]पापं च नुद गोमय ॥"
काण्डात्काण्डादिति द्वाभ्यामङ्गमङ्गमुपस्पृशेत् ।
"[7]काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि[8] ॥
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ।
या शतेन प्रतनोषि सहस्रेण विरोहसि ॥
[9]तस्यास्ते देवीष्टके विधेम हविषा वयम् ।"
कृत्वैवं मार्जनं[10] मन्त्रैरश्वक्रान्तादिभिस्ततः ॥

1 तु—द, वी. मि. आ.
2 मन्त्रवित्—द, ब ; शास्त्रवित्—ज ; पूर्वं च मन्त्रवित्—ना.
3 तै. आ., १०. १. ८ ; महाना. उ., ४. ४.
4 नमस्ते सर्वलोकानां प्रभवारणि सुव्रते । मृत्तिके—ज, ना.
5 नः—ब, ज, क, ना, द.
6 नुद गोमय सर्वदा—वी. मि. आ.
7 वाज. सं., १३. २० ; तै. सं., ४. २. ९. २ ; तै. आ., १०. १. ७ ; महाना. उ., ४. ३.
8 परुषः परुषस्परि—वी. मि. आ ; पुरुषः पुरुषस्परि—उ.
9 तस्यैते देवि दूर्विके विधेम हविषा वयम्—द, ब, ना.
10 लेपनं पश्चात्—ब, द.

ईहेत देवीरमृतं पारावतस्य रातिषु ।
[1]ये ते शतमिति द्वाभ्यां तीर्थान्यावाहयेत्ततः[2] ॥
[3]कुरुक्षेत्रं गयां गङ्गां [4]प्रभासं पुष्कराणि च ।
ततो महाव्याहृतिभिर्गायत्र्या चाभिमन्त्रयेत् ॥
[5]आपो हि ष्ठेदमापश्च द्रुपदादिव इत्यपि ।
तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः ॥
[6]ततोऽर्कमीक्ष्य सोंकारं निमज्यान्तर्जले बुधः ।
प्राणायामांश्च कुर्वीत गायत्रीं चाघमर्षणम् ॥
[7]यथोक्तैः [8]क्षोभितस्तैस्तु [9]मज्जेत्त्रिर्दण्डवत्ततः ।

[10]<u>पद्मपुराणे</u>—[सृष्टिखण्डम्, २०, १४५–१५७]

[11]नैर्मल्यं भावशुद्धिश्च विना स्नानं न विद्यते[12] ।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥
अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् ।
तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण [13]मन्त्रवित् ॥

1 कात्यायनश्रौतसूत्रम्, २५. १. ११; आप. श्रौ. सू., ३. १३. १; २४, १२. ६; कौशिकसूत्रम्, ९७. ८.
2 बुधः—ब, ज, क, द.
3 कुरुक्षेत्रं च गंगां च—ज
4 प्रयागं—ना.
5 References already cited in pp. ६२–६३.
6 ततोऽर्कं वीक्ष्य सोङ्कारं—ब, ना, द, वी. मि. आ.
7 तथोक्तैः—ना.
8 क्षोभितैस्तैस्त्रिः—ब, द.
9 मज्जेयुर्दण्डवत्ततः—उ.
10 वी. मि. आ., २३०–२३१.
11 निर्मला—इति मुद्रितपाठः.
12 जायते—ब, ज, द, वी. मि. आ.
13 धर्मवित्—वी. मि. आ.

[1]ओं नमो नारायणायेति मूलमन्त्र उदाहृतः ।
दर्भपाणिस्तु विधिना ह्याचान्तः प्रयतः शुचिः ॥
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ।
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ॥
"ओं विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता ।
पाहि नस्त्वेनसस्त्वस्मादाजन्ममरणान्तिकात् ॥
तिस्रः कोट्योऽर्धकोटी च तीर्थानां [2]वायुरब्रवीत् ।
दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि ॥
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।
[3]नन्दा पृथ्वी च सुभगा [4]विश्वकाया शिवा सिता ॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी ।
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥"
एतानि पुण्यनामानि स्नानकाले प्रकीर्तयेत् ।
भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥
सप्तवाराभिजप्तेन करसंपुटयोजितम् ।
मूर्ध्नि कुर्याज्जलं भूयस्त्रिश्चतुः पञ्च सप्त वा ॥
स्नानं कुर्यान्मृदा तद्वदामन्त्र्य तु[5] विधानतः ।
"[6]अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥

1 ओमिति नास्ति—ब, क, ना, द.
2 मनुरब्रवीत—वी. मि. आ.
3 वृन्दा—ब, द.
4 विश्वकाया शिवा सिता—द, ब, वी. मि. आ., सिताशिवा—ना.
5 च—ना, द.
6 वी. मि. आ., २४०; तै. आ., १०. १. ८; महाना. उ., ४. ४.

नमस्ते [1]सर्वलोकानां [2]भव वारिणि सुव्रते ।
आरुह्य मम गात्राणि सर्वपापं प्रमोचय ॥"

नरसिंहपुराणे[3]—[५८, ६५–७०]

नद्यां [4]स्रवत्सु च स्नायात्प्रतिस्रोतः स्थितो द्विजः ।
तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत्[5] ॥
शुचौ देशे समभ्युक्ष्य स्थापयेत्कुशमृत्तिलान् ।
मृत्तोयेन स्वकं देहं बहिः [6]संशोध्य यत्नतः ॥
स्नानशाटीं च संशोध्य कुर्यादाचमनं [7]बुधः ।
शनैर्जलं प्रविश्याथ नमेद्वरुणमप्पतिम् ॥
[8]हरिं ह्येवं [9]स्मरन्बुध्या निमज्जेच्छरवज्जले[10] ।
ततस्तीरं समासाद्य अप आचम्य मन्त्रतः ॥
प्रोक्षयेद्वरुणं देवं मन्त्रैर्वा पावमानिभिः ।
कुशाग्रस्थेन तोयेन[11] प्रोक्ष्याऽऽत्मानं प्रयत्नतः ॥
आलभेन्मृत्तिकां गात्रे [12]इदं विष्णुरिति [13]द्विजः ।
ततो नारायणं देवं संस्मरन्प्रविशेज्जलम् ॥

1 सर्वभूतानां—क, ना, वी. मि. आ.
2 प्रभवारिणि—उ.
3 वी. मि. आ., २४०.
4 सरस्सु च—ब, द.
5 'नद्यां' इत्यारभ्य 'स्नानमाचरेत्' इत्यन्तः श्लोकः मुद्रितनरसिंहपुराणे नास्ति.
6 प्रक्षाल्य—वी. मि. आ.
7 ततः—क.
8 हरिमेव—द, ब, ज, क, वी. मि. आ.
9 स्मरेद्बुध्या—द, ब, ज.
10 शरवदित्यनेन शिरोनमनं विवक्षितम् । शरपतने प्रथममग्रभागस्यैव पतनात्—इति वी. मि. आ., २४०.
11 कुशस्थेन च तोयेन—ना.
12 ऋ. सं., १. २२. ७; तै. सं., १. २. १३. १.
13 स्मरन्—ज.

निमज्यान्तर्जले सम्यक् प्रपठेदघमर्षणम् ।

'प्रत्यर्के' आदित्याभिमुखो भूत्वा ॥

विष्णुः[1]—[६४, १८–२३]

मृत्तोयैः कृतमलापकर्षोऽप्सु [2]निमज्याप उपस्पृश्याऽऽपो हि ष्ठेति[3] तिसृभिर्हिरण्यवर्णेति[4] चतसृभिरिदमापः प्रवहत[5] इति च तीर्थमभिमन्त्रयेत् । ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत् । [6]तद्विष्णोः परमं पदमिति वा । द्रुपदां सावित्रीं वा । [7]युञ्जते मन इत्यनुवाकं वा । पुरुषसूक्तं वा ॥

'इदमापः प्रवहते'ति, "इदमापः प्रवहत यत्किंचिदुरितं मयि[8]" इत्यादिका[9] ॥

पैठीनसिः[10]

हिरण्यवर्णा[11] इति सूक्तेन स्नात्वा शौचं कृत्वापां मध्ये त्रीन्प्राणायामान्कुर्यात् ॥

बृहस्पतिः—[आचार., २२. पृ. ३१२.]

[12]द्रुपदादिवेति यो मन्त्रो वेदे वाजसनेयके ।

1 वी. मि. आ., २४१.
2 निमज्योपविश्य आपो हि ष्ठेति—मु. विष्णु. स्मृ.
3 ऋ. सं., १. ९. १; तै. सं., ४. १. ५. १; ५. ६. १. ४; ७. ४. १९. ४.
4 तै. सं. ५. ६. १. १.
5 ऋ. सं., १. २३. २२.
6 ऋ. सं., १. २२. २०; तै. सं., १. ३. ६. २.
7 ऋ. सं., ५. ८१. १; तै. सं., १. २. १३. १; तै. आ., ४. २. १.
8 ऋ. सं., १. २३. २२.
9 इत्यादि वा ऋक्—ब, द; इति ऋक्—वी. मि. आ.
10 वी. मि. आ., २४१.
11 तै. सं., ५. ६. १. १.
12 वाज. सं., २०. २०; अ. वे., ६. ११५. ३; तै. ब्रा., (द्रुपदादिवेन्) २. ४. ४. ९.

अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते ॥

दक्षः

मार्जनं जलमध्ये तु प्राणायामो यतस्ततः ।
उपस्थानं ततः पश्चात्सावित्रीजप उच्यते ॥

'यतस्ततः' जले स्थले च ॥

आपस्तम्बः[1]—[२, २२, १३]

शनैरपोऽभ्युपेयादभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेदिति सर्वत्रोदकस्पर्शनविधिः ॥

'अभिघ्नन्' पाणिनोदकं ताडयन्, जलचरप्राण्यपसारणाय[2] इति शेषः । 'सर्वत्र' स्रवत्स्वस्रवत्सु च । एतच्चापस्तम्बस्मृतौ [3]वानप्रस्थप्रकरणे समाम्नातत्वाद्वानप्रस्थस्यैवेदृशं स्नानम् ॥

शाङ्खायनगृह्यम्[4]

सवस्त्रोऽहरहराप्लुत्याध्यनुदको[5]ऽन्यद्वस्त्रमाच्छादयेत् ।

'सवस्त्र' इति द्वितीयवस्त्रप्राप्त्यर्थम्, एकवस्त्रस्य नग्नत्वप्रतिषेधेन प्राप्तत्वादिति ब्रह्मदत्तभाष्यम्[6]। 'अध्यनुदकः' शिरोव्यतिरिक्तगात्रेष्वनुद्धृतोदकः ॥

अङ्गिराः[7]

विना दर्भेण यत्स्नानं यच्च दानं विनोदकम् ।

1 Reproduced by वी. मि. आ., २३८.
2 अपसारणाय—ब, द, ज, क, वी. मि. आ., अपसरणार्थं—ना; अपहरणार्थं—उ.
3 'वानप्रस्थस्यैवेदृशं स्नानम्' इति २९ अङ्कितपत्रारम्भे दृश्यते—A.S.B.
4 Reproduced by वी. मि. आ., २३८.
5 त्याभ्युदको—ना ; त्याव्युदको—वी. मि. आ.
6 This reference to ब्रह्मदत्त is mentioned by रघुनन्दन on page 312 of शुद्धितत्त्व, as cited by कल्पतरु.
7 वी. मि. आ., २५८.

असंख्यातं च यज्जप्तं तत्सर्वं [1]निष्प्रयोजनम् ॥

योगियाज्ञवल्क्यः

तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।
आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेत् ॥
[2]स्पर्शनाद्भिर्दूषिताभिरुद्धृताभिस्तु मानवः ।
स्नानं समाचरेद्यस्तु न स शुध्यति कर्हिचित् ॥
[3]अग्राह्यास्त्वागता ह्यापो नद्याः प्रथमवेगिकाः ।
प्रक्षोभितास्तु केनापि याश्च तीर्थाद्विनिःसृताः ॥
उपस्थानादिर्यस्तासां[4] मन्त्रवान्कीर्तितो विधिः ।
निवेदनान्तस्तत्स्नानमित्याहुर्ब्रह्मवादिनः ॥
निषेकात्प्रभृतिर्यावच्छ्मशानं श्रुतिदर्शनात्[5] ।
[6]नामन्त्रवद्द्विजातीनां कर्म किंचित्प्रवर्तते ॥

तथा

मत्स्यकच्छपमण्डूकास्तोये मग्ना दिवानिशम् ।
वसन्तोऽपि च ते स्नाता फलं नार्हन्ति कर्हिचित् ॥
श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥
विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
[7]तद्धरन्त्यसुरास्तस्य मूढस्य त्वकृतात्मनः ॥
ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ।

1 निष्फलं भवेत्—ज, द.
2 वी. मि. आ., १७८.
3 वी. मि. आ., १७५.
4 उपस्थानं हि यः स्नानं—ब, द.
5 निषेकात्प्रभृतिर्यावत्स्नानं श्रुतिनिदर्शनात्—उ.
6 'नामन्त्रवित्' इत्यारभ्य 'कर्हिचित्' इत्यन्तो भागः नास्ति—उ.
7 उद्धरन्त्यसुरास्तस्य—ब, द.

तूष्णीमेव हि [1]शूद्रस्य सनमस्कारकं स्मृतम् ॥
अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात्पापान्मुच्यते स्नानमाचरन् ॥
प्रकर्तुमसमर्थश्चेज्जुहोतियजतिक्रियाः ।
स्नानध्यानजपैर्दानैरात्मानं शोधयेद्बुधः ॥
यदेव स्नानं कुरुते विशुद्धेनान्तरात्मना ।
तेनैव सर्वमाप्नोति विधियज्ञक्रियाफलम् ॥
गृहीत्वा यमधनुर्वै नियमज्याततं दृढम् ।
संदधीत दमशरं स्वर्गलक्ष्ये [2]प्रयत्नतः ॥
यस्येदमायुधं नास्ति स्वर्गसाधनमुत्तमम् ।
अपि जन्मसहस्रेषु न साधयति तत्परम् ॥

'अशुचिः' स्नाननिमित्तेन चाण्डालस्पर्शादिना[3]। 'नद्याम्' इति प्राक् शुष्कनदीविषयम्। 'प्रक्षोभिताः' महिषादिनात्यन्तकलुषीकृताः। 'तीर्थाद्विनिःसृताः' तीर्थं परित्यज्य गतास्तत्तीर्थत्वेनाप्रत्यभिज्ञायमानाः। 'उपस्थानं' "[4]उरुं हि राजा" इत्यादिमन्त्रेण। 'तासां' अपाम्। 'निवेदनान्तः' "[5]देवा गातुविद" इति जप्यनिवेदनान्तः। 'निषेकः' गर्भाधानम्। 'विधिहीनं[6]' यथोक्तविधिहीनम्। 'शूद्रस्य सनमस्कारकम्' इति, शूद्र आप्लवनमात्रमुदकनम-

1 शुद्धस्य—उ.

2 समन्ततः—ना.

3 चाण्डालस्पर्शनादिना—ब, द.

4 कात्या. श्रौ. सू., २५. १. ११; आप. श्रौ. सू., ३. १३. १; २४. १२. ६; कौशिकसूत्रम्, ९७. ८.

5 तै. सं., १. १. १३. ३.

6 'विधिहीनं' इत्यतः परं पत्रद्वयं परिभ्रष्टम्—ना.

स्कारमात्रेण कुर्यादित्यर्थः । 'तत्परं' 'तत्' स्वर्गादि 'परं' श्रेष्ठम् ॥

पुनर्योगियाज्ञवल्क्यः

एष वोऽभिहितः कृत्स्नः स्नानस्य परमो विधिः ।
गुणाश्च तस्याचरणे दोषाश्चैवानिषेवणे ॥

तथा[1]

स्नात्वैवं वाससी धौते त्वक्लिष्टे परिधाय च ।
प्रक्षाल्योरू मृदङ्घ्री च[2] हस्तौ प्रक्षाल्य वै तथा ॥
[3]अभावे धौतवस्त्रस्य [4]शाणक्षौमाजिनानि च ।
कुतपं योगपट्टं वा द्विवासा येन वै भवेत् ॥
यावद्देवान् ऋषींश्चैव पितॄंश्चैव न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं येन स्नातो न चोदके ॥
निष्पीडयति यः पूर्वं स्नानवस्त्रं तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवा महर्षिभिः ॥

'कुतपो' नेपालकम्बलः । 'द्विवासा येने'ति, अनन्तरोक्तैः कुतपादिभिरपि द्विवस्त्रत्वं विधातव्यम् । 'येन स्नातः' येन वस्त्रेण स्नातः । 'न चोदके' 'वस्त्रं पीडयेद्' इति संबन्धः ॥

नरसिंहपुराणे—[५८, ७२–७३]

न रक्तमुल्बणं वासो [5]न जीर्णं तु प्रशस्यते ।

1 वी. मि. आ., २४७.
2 मृदाङ्घ्रिश्च—वी. मि. आ.
3 वी. मि. आ., २४४.
4 शाणक्षौमाविकानि च—ब, ज, क, द.
5 न नीलं—ज, ब, द ; मुद्रितपुराणे च.

मलाक्तं च दशाहीनं वर्जयेदम्बरं बुधः ॥
ततः प्रक्षालयेत्पादौ मृत्तोयेन विचक्षणः ।

[1]पराशरः—[१२, १२–१३]

ब्राह्मणं स्नातुमायान्तमनुगच्छन्ति देवताः ।
पितरश्च महाभागा [2]वायुभूता जलार्थिनः ॥
स्नात्वा निरस्य वासोऽन्यज्जङ्घे प्रक्षाल्य चाम्भसि ।
अपवित्रीकृते ते तु कौपीनश्च्योतवारिणा ॥
निराशाः पितरो यान्ति वस्त्रनिष्पीडने कृते ।
तस्मान्निष्पीडयेद्वस्त्रं नाकृत्वा पितृतर्पणम् ॥
जलमध्ये तु यः कश्चिद्द्विजातिर्ज्ञानदुर्बलः ।
निष्पीडयति तद्वस्त्रं स्नानं तस्य वृथा भवेत् ॥

'कौपीनश्च्योतवारिणा' कौपीनं जघनप्रदेशः, ततश्च्युतेन जलेन ॥

स्नानविध्यनन्तरं शङ्खः[3]

उदकस्याप्रदानाद्धि स्नानशाटीं न पीडयेत्[4] ।
अनेन विधिना स्नातः पुण्यं फलमुपाश्नुते ॥

हारीतः[5]

स्नात्वा न गात्रमवमृज्यान्न शिरो विधुनुयान्नोत्तरीयविपर्यासं कुर्यात् ॥

1 Reproduced by वी. मि. आ., २४३ ; मुद्रितपराशरस्मृतिपाठस्त्वेतद्भिन्नः.
2 बाह्यभूता जलान्विताः—ब, द.
3 वी. मि. आ., २४३.
4 शोधयेत्—ब, द.
5 वी. मि. आ., २४१.

विष्णुः[1]—[६४, १०-१५]

स्नातः शिरो [2]नाऽवधुनेत्। नाङ्गेभ्यस्तोयमुद्धरेत्। न तैलवसे संस्पृशेत्[3]। नाप्रक्षालितं पूर्वधृतं [4]वासो बिभृयात्। [5]स्नात एव सोष्णीषो धौते वाससी बिभृयात्। न म्लेच्छान्त्यजपतितैः सह संभाषणं कुर्यात्॥

तैलं च वसा च 'तैलवसे'। 'पूर्वधृतं' अङ्गेष्विति शेषः। 'उष्णीषं' च केशश्मश्रुजलापकर्षणार्थं शिरोवेष्टनं तावन्मात्रकालमेव यावता जलापकर्षणं भवति॥

तथा च महाभारते[6]

आप्लुतः साधिवासेन जलेन च सुगन्धिना।
राजहंसनिभं प्राप्य चोष्णीषं शिथिलार्पितम्॥
जलक्षयनिमित्तं वै वेष्टयामास [7]मूर्धजे॥

'शिथिलार्पितम्' अगाढबद्धम्॥

[8]मनुः—[४, ८३]

शिरःस्नातस्तु तैलेन नाङ्गं किंचिदपि स्पृशेत्।

यदा शिरःस्नानं कृतं भवति, तदा किंचिदप्यङ्गं तैलसंबन्धि न कार्यम्। तैलशब्दश्च योगरूढ्या तिलतैले वर्तते।

1 वी. मि. आ., २४१.
2 नावधुनुयात्—ब, द.
3 न तैलवत् संस्पृशेत्—ब, द, मुद्रितपाठश्च.
4 वसनं—मु. विष्णु. पाठः.
5 स्नातः सोष्णीषे—वी. मि. आ.
6 वी. मि. आ., २४२.
7 मूर्धनि—ब, ज, क, द, वी. मि. आ.
8 वी. मि. आ., १८१.

[1]सार्षपतैलादिषु 'स्नेहे तैलच्' [वार्तिकम्, ३११८] इति तैलच्प्रत्ययात्तत्र प्रयोगः[2] ॥

इति स्नानविधिः ॥

मध्याह्ने स्नात्वा ततः सन्ध्योपासनं पूर्वोक्तविधिना कर्तव्यम् ।

'सन्ध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा[3]'

इति योगियाज्ञवल्क्यवचनात् । शङ्खेन च मध्याह्न-संध्यामभिधाय—

'[4]एष एव विधिः प्रोक्तः सन्ध्ययोश्च द्विजातिषु'

इत्यभिधानात्[5] ॥

तदुक्तं शङ्खेन[6]—[९, १६–२०]

आचम्यैवं पुरा प्रोक्तास्तीर्थसंमार्जने तु ये ।
[7]मन्त्रास्तैर्मन्त्रितं तोयं मूर्ध्नि भूमौ तथा क्षिपेत् ॥
क्षिप्तेन मूर्ध्नि तोयेन पापमस्य प्रणश्यति ।
भूमौ क्षिप्तेन हन्यन्ते असुरा देवशत्रवः ॥

1 सर्षपादितैलेषु—क, ब, द, वी. मि. आ.

2 तैलेन शिरःस्नातः तैलेन नाङ्गं स्पृशेदित्यर्थ इति बहवः । कल्पतरुस्तु यदा . . . . . इत्यर्थ इत्याह । केचित्तु शिरःस्नातपदं शिरोनैक्यार्थस्नातपरमिति वदन्ति । तैलशब्दो योगरूढ्या etc. इति कल्पतरुः—वी. मि. आ., १८१.

3 वी. मि. आ., २५४.

4 शङ्खस्मृतिः—९, १९.

5 इति वचनात्—ब, ज, क, द.

6 वी. मि. आ., २८३.

7 अर्धमिदं मुद्रितशङ्खस्मृतौ नास्ति । 'क्षिप्तेन मूर्ध्नि' इत्यारभ्य सार्धः श्लोकः टिप्पण्यां दृश्यते—स्मृतीनां समुच्चयः, ३८३.

व्याहृतीः कीर्तयेच्चैव तथैवाव्ययमक्षरम् ।
उपस्पृशेत्ततः [1]पश्चान्मन्त्रेणानेन धर्मतः ॥
"[2]अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥"
आचम्य तु ततः पश्चादादित्याभिमुखो जलम् ।
[3]उदु त्यं जातवेदसमिति मन्त्रेण निक्षिपेत् ॥
एष एव विधिः प्रोक्तः सन्ध्ययोश्च द्विजातिषु ।
पूर्वां संध्यां जपंस्तिष्ठेदासीनः पश्चिमां तथा ॥
ततो जपेत्पवित्राणि पवित्रं वा स्वशक्तितः ।
ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः[4] ॥

'पुरा प्रोक्ताः' "आपो हि ष्ठे"त्यादय "इदमापः प्रवहते"त्यन्ताः शङ्खोक्ता एव । 'पवित्राणि' शङ्खोक्तान्येवाघमर्षणादीनि ॥

[5]इति भट्टहृदयधरात्मजमहासांधिविग्रहिकभट्टश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकल्पकाण्डे स्नानपर्व[6]

1 पश्चादादित्याभिमुखो जलम्—क.

2 महाना. उ., १५ .६; तै. आ., (अन्तश्चरति) १०. ३१. १.

3 ऋ. सं., १. ५०. १; तै सं., १. २. ८. २; ४. ४३. १; २. ३. ८. २; ४. १४. ४; ६. १. ११. ४.

4 दीर्घमायुरवाप्नुवन्—क, वी. मि. आ.

5 इति कृत्यकल्पतरौ नियतकालकृत्यकाण्डे स्नानपर्व—ब, द, क; इति भट्टहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकृत्यकाण्डे स्नानपर्व, A.S.B.

6 स्नानविधिपर्व—ज.

॥ ३ ॥

# अथ जपविधिः

तत्र बौधायनः[1]—[२, ८, १२-१४]

[2]अप आचम्य दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम्। अथादित्यमुपतिष्ठते[3] उद्वयं तमसस्परि, उदु त्यं, चित्रं, तच्चक्षुर्देवहितं, य उदगादिति। अथाप्युदाहरन्ति प्रणवो व्याहृतयः सावित्री चेत्येते [4]पञ्च ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्बिषात्पावयन्ति॥

'अपरिमितकृत्व' इति, दशभ्य ऊर्ध्वं शतादर्वागुक्तशतादिसंख्याव्यतिरेकेणापि बोद्धव्यं, 'दशावरामि'त्यभिधानात्। '[5]उद्वयं तमसस्परी'ति, "[6]उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम्' इत्यादिका ऋक्। 'उदुत्यमि'ति, "[7]उदु त्यं जातवेदसम्" इत्यादिका। 'चित्र-

1 वी. मि. आ., ३१७.

2 अथाऽऽचम्य—ब, द, A.S.B.

3 उपतिष्ठेत्—द, ब; उपतिष्ठेत—क.

4 पञ्च महायज्ञाः—ब, द.

5 'उद्वयं' इत्यारभ्य 'मन्त्रवत्स्नानभोजने' इत्यन्तो भागः नास्ति—द.

6 ऋ. सं., १. ५०. १०; तै. सं., ४. १. ७. ४; ५. १. ८. ६.

7 ऋ. सं., १. ५०. १; तै. सं., १. २. ८. २; ४. ४३. १; २. ३. ८. २; ४, १४. ४; ६. १. ११. ४,

मि'ति, "[1]चित्रं देवानाम्" इत्यादिका। 'य उदगात्' "[2]य उदगान्महतोर्णवाद्" इत्यादिका ॥

योगियाज्ञवल्क्यः[3]

आचान्तः पुनराचामेन्मन्त्रवत्स्नानभोजने ।
द्रुपदां च त्रिरावर्त्य[4] तथा चैवाघमर्षणम् ॥
गायत्रीं वा त्रिरावर्त्य महाव्याहृतिभिस्तथा ।
सोपांशुप्रणवेनापि आपः पीता अघापहाः ॥
आचम्य पाव्य चात्मानं त्रिराचम्य शनैरसून् ।
अथोपतिष्ठेदादित्यमूर्ध्वं पुष्पान्वितं जलम् ॥
प्रक्षिप्योद्वयमुदु त्यं चित्रं तच्चक्षुरित्यपि[5] ।
[6]हंसः शुचिषदेतानि शुभानि पावनानि च ॥
एतज्जपेदूर्ध्वबाहुः सूर्यं वीक्ष्य समाहितः ।
गायत्र्या तु यथाशक्ति चोपस्थाय दिवाकरम्[7] ॥
विभ्राडित्यनुवाकेन सूक्तेन [8]पुरुषस्य च ।
शिवसंकल्पेन तथा [9]मण्डलब्राह्मणेन च ॥

1 ऋ. सं., १. ११५. १; तै. सं., १. ४. ४३. १; २. ३. ८. २; ४. १४. ४.

2 तै. आ., ४. ४२. ५; 'उदगात्' "उदगादयमादित्यः" (ऋ. सं., १. ५०. १३; तै. ब्रा., ३. ७. ६. २३); इत्यादिका ऋक्—इति वी. मि. आ.

3 वी. मि. आ., ३१७–३१८.

4 र्त्य महाव्याहृतिभिस्तथा—क.

5 'उद्वयं' ऋ. सं., १. ५०. १०; तै. सं., ४. १. ७. ४; ५. १. ८. ६; 'उदु त्यं' ऋ. सं., १. ५०. १; तै. सं., १. २. ८. २; 'चित्रं' ऋ. सं., १. ११५. १; तै. सं., १. ४. ४३. १; 'तच्चक्षुः' ऋ. सं., ७. ६६. १६; वाज. सं., ३६. २४; तै. आ., ४. ४२. ५.

6 ऋ. सं., ४. ४०. ८; तै. सं., १. ८. १५. २; ४. २. १. ५.

7 च भास्करम्—ज.

8 सूक्तेन पुरु . . . इतः परं 'क' कोशे बहूनि पत्राणि लुप्तानि.

9 'मण्डलब्राह्मणं' "यदेतन्मण्डलं तपति" (शत. ब्रा., १०. ५. २. १.) इत्यादि—वी. मि. आ.

दिवाकीर्त्यैश्च [1]सौरैश्च मन्त्रैरन्यैश्च शक्तितः ।
जपयज्ञो हि कर्तव्यः सर्ववेदप्रणीतकैः ॥
पवित्रैर्विविधैश्चान्यैर्गुह्योपनिषदा तथा ।
अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये ॥
[2]प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु दर्भपाणिः स्यात्प्राङ्मुखस्तु[3] कृताञ्जलिः ॥
स्वाध्यायं तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ।
आकेशादानखाग्राच्च परमं तप्यते तपः ॥
यः [4]स्रग्व्यपि [5]द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ।
आदावारभ्य वेदं तु स्नात्वोपर्युपरि क्रमात् ॥
[6]यदधीतेऽन्वहं शक्त्या सः स्वाध्याय इति स्मृतः ।

'[7]मन्त्रवत्' '[8]द्रुपदादिवे'त्यादिमन्त्राभिमन्त्रितम् । अयं चाऽऽचमने मन्त्रविकल्पः [9]फलविशेषापेक्षया व्यवस्थितः । 'पाव्य' मार्जनं कृत्वा । 'विभ्राडि'त्यनुवाकः "[10]विभ्राड् बृहत्पिबतु सोम्यं मधु" इत्यादिः । 'शिवसंकल्पः' "[11]यज्जाग्रतो दूरम्" इत्यादिः । 'दिवाकीर्त्यैः'

1 'सौरैः' "नमो मित्रस्य" (ऋ. सं., १०. ३७. १ ; वाज. सं., ४. ३५ ; तै. सं., १. २. ९. १ ; ६. १. ११. ६.) इत्याद्यैः—वी. मि. आ.

2 प्रदक्षिणं नमस्कृत्य समावृत्योप—ब, द.

3 श्च—ब, द.

4 सुख्यपि—ब, वी. मि. आ.

5 द्विजो वा तैः—वी. मि. आ.

6 यदि वा तेऽन्वहं शक्त्या सुसंध्येया इति स्मृतिः—वी. मि. आ.

7 Reproduced by वी. मि. आ., ३१८–३१९.

8 वाज. सं., २०. २० ; अ. वे., ६. ११५. ३.

9 फलविकल्पापेक्षया व्यवस्थितः—ज.

10 ऋ. सं., १०. १७०. १ ; वाज. सं., ३३. ३० ; कठ. सं., २. ९.

11 वाज. सं., ३४. १.

अध्येतृसंप्रदायेन दिवा पठनीयैः शतरुद्रियादिभिः । 'सर्ववेदप्रणीतकैः' [1]सर्ववेदपठितैः । 'पवित्रैः' पावनैः । 'गुह्योपनिषदा' [2]साक्षात्परमात्मप्रतिपादकोपनिषद्भागेन। 'अध्यात्मविद्या' उपनिषद्भ्योऽन्यापि । '[3]स्रग्वी'ति समावृत्तोपलक्षणम् ॥

[4]**नरसिंहपुराणे**—[५८, ७७, ८५, ८७, ८८]

> दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः ।
> प्राणायामांस्तु कुर्वीत[5] यथाशास्त्रमतन्द्रितः ॥
> जपेदहरहः स्नात्वा सावित्रीं जपविद्द्विजः ।
> अथ पुष्पाञ्जलिं दत्वा भानवे चोर्ध्वबाहुकः ॥
> [6]उदु त्यं च जपेन्मन्त्रं [7]चित्रं [8]तच्चक्षुरित्यपि ।
> प्रदक्षिणमुपावृत्य नमस्कृत्य ततः प्रभुम् ॥

[9]**वसिष्ठः शङ्खलिखितौ च**[10]

> सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम् ।
> येषां जपैश्च होमैश्च पूयन्ते नात्र संशयः ॥

1 सर्ववेदपठनीयैः—ब, द.

2 साक्षात्परमात्मप्रकाशक—ब, द.

3 सुखीति—ब, द; मित्रमिश्रः 'स्रग्व्यपि' इत्येतत्स्थाने 'सुख्यपि' इति पठन्नेवं व्याचख्यौ—सुख्यपीति, यः सुखवानपि भोगं कुर्वाणोऽपि तैः पूर्वोक्तमन्त्रैः स्वाध्यायं समाचरेत्स सर्वशरीरदुःखदं तपस्तप्यत इत्यर्थः—वी. मि. आ., ३१८.

4 वी. मि. आ., ३०२.

5 प्राणायामं प्रकुर्वीत—ब, द.

6 ऋ. सं., १. ५०. १; तै. सं., १. २. ८. २.

7 ऋ. सं., १. ११५. १; तै. सं., १. ४. ४३. १.

8 ऋ. सं., ७. ६६. १६; वाज. सं., ३६. २४; तै. आ., ४. ४२. ५.

9 **वसिष्ठस्मृतिः**, २८, ११–१५; **शङ्खस्मृतिः**, ११, १–५.

10 वी. मि. आ., ३१९.

अघमर्षणं देवकृतं[1] [2]शुद्धवत्यस्तरत्समाः[3] ।
[4]कूष्माण्ड्यः [5]पावमान्योऽथ दुर्गा सावित्र्यथैव च ॥
अभीषङ्गाः पदस्तोभाः सामानि व्याहृतीस्तथा ।
भारुण्डानि च सामानि गायत्रं रैवतं तथा ॥
पुरुषव्रतं च भासं च तथा देवव्रतानि च ।
अब्लिङ्गा बार्हस्पत्यं च वाक्सूक्तं मध्वृचस्तथा ॥
शतरुद्रियमथर्वशिरस्त्रिसुपर्णं महाव्रतम् ।
गोसूक्तं चाश्वसूक्तं च इन्द्रशुद्धे च सामनी ॥
त्रीण्याज्यदोहानि रथन्तरं च
अग्निव्रतं वामदेव्यं बृहच्च[6] ।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते य इच्छेत् ॥

'[7]देवकृतं' "[8]देवकृतस्यैनस" इत्यादयो मन्त्राः । 'दुर्गा' "[9]जातवेदस" इत्यादि दुर्गाप्रकाशिका ऋक् ।

1 वाज. सं., ८. १३; तै. सं., ३. २. ५. ७.

2 ऋ. सं., ८. ९५. ७.

3 ऋ. सं., ९. ५८. १–४.

4 'कूष्माण्ड्यः' "यद्देवा देवहेडनम्" (वाज. सं., २०. १४; अ. वे., ६. ११४. १.) इत्यादिकाः—वी. मि. आ.

5 ऋग्वेदखिल, ९. ६७. १; तै. ब्रा., १. ४. ८. ४, ५.

6 "मूर्धानं दिवो अरतिं पृथिव्याः" (ऋ. सं., ६. ७. १; सा. वे., १. ६७; २. ४९०) इत्यस्यामृचि गीयमानं सामत्रयम् 'आज्यदोहानि'। "अभि त्वा शूर नोनुमः" (ऋ. सं., ७. ३२. २२; सा. वे. १. २३३; २. ३०) इत्यस्यामुत्पन्नं 'रथन्तरम्'। 'अग्निव्रतं' "अग्निर्मूर्धा दिवः ककुत्" (ऋ. सं., ८. ४४. १६; सा. वे., १. २७; २. ८८२) इत्यस्यामृच्युत्पन्नं साम। 'वामदेव्यं' "कया नश्चित्र आभुवत्" (ऋ. सं., ४. ३१. १; सा. वे., १. १६९; २. ३२) इत्यस्यामृच्युत्पन्नं साम। "त्वामिद्धि हवामहे" (ऋ. सं., ६. ४६. १; सा. वे., १. २३४; २. १५९) इत्यस्यामृच्युत्पन्नं 'बृहत्साम' ॥ विष्णुस्मृतिव्याख्या केशववैजयन्ती (५६, २७).

7 Reproduced by वी. मि. आ., ३१९–३२०.

8 वाज. सं., ८. १३; तै. सं., ३. २. ५. ७.

9 ऋ. सं., १. ९९. १; ऋग्वेदखिल., १०. १२७. ५; तै. आ., १०. १. १६.

'सावित्री' "[1]तत्सवितुः" इत्यादिका। 'अभीषङ्गाः' "[2]पुरोजिती वो अन्धस" इत्यादि सामत्रयम्। 'पदस्तोभाः' [3]अष्टेडादिसामचतुष्टयम्। 'सामानि व्याहृतीस्तथे'ति, [4]व्याहृतिसामानीत्यर्थः। 'भारुण्डानि' "[5]यत्ते कृष्णः शकुन आ तुतोद पिपीलः सर्प" इत्यादीन्येकविंशतिसंख्याकानि सामानि राणायनीयानां प्रसिद्धानि। 'अब्लिङ्गाः' "[6]आपो हि ष्ठा" इत्यादयः। 'बार्हस्पत्यं' "[7]गणानां त्वा गणपतिम्" इत्यादिका ऋक्। 'वाक्सूक्तं' "[8]बृहस्पते प्रथमं वाचो अग्रम्" इत्यादि। 'मध्वृचः' "[9]मधु वाता ऋतायते" इत्यादिकास्तिस्रः। 'शतरुद्रियं' "[10]नमस्ते रुद्र मन्यवे" इत्याद्येकादशानुवाकाः। 'अथर्वशिरः' "[11]ब्रह्मा देवानां प्रथमः" इत्यादि। 'त्रिसुपर्णं' "[12]ब्रह्म मेतु

1 ऋ. सं., ३. ६२. १०; तै. सं., १. ५. ६. ४; ८. ४; ४. १. ११. १.

2 सा. वे., १. ५४५; २. ४७; ऋ. सं., ९. १०१. १; अभीषङ्गाः 'पुरोजातीरोधस' इत्यादिसामत्रयम्—वी. मि. आ.

3 'पदस्तोभाः' अष्टेडादिसामचतुष्टयम् "धर्ता दिवः पवते" (ऋ. सं., ९. ७६. १; सा. वे., १. ५५८; २. ५७८.) इत्यास्यामृचि गीयमानम्—विष्णुस्मृतिविवृतिः, केशववैजयन्ती, ५६, ११; पदस्तोमाः युञ्जे इत्यादिसामचुष्टयम्—वी. मि. आ.

4 व्याहृतीः सामानीत्यर्थः—वी. मि. आ.

5 ऋ. सं., १०. १६. ६; अ. वे., १८. ३. ५५; तै. आ., ६. ४. २; 'यत्ते' इत्यारभ्य 'राणायनीयानां प्रसिद्धानि' इत्यन्तो भागः नास्ति—ज, द.

6 ऋ. सं., १. ९. १; तै. सं., ४. १. ५. १. etc.

7 ऋ. सं., २. २३. १; वाज. सं., २३. १९; तै. सं., २. ३. १४. ३; 'बार्हस्पत्यं' "यस्तस्तम्भ सहसा" (ऋ. सं., ४. ५०. १.) इत्येकादशर्चम्—स्मृतिमुक्ताफलम्, आह्निकप्रकाशः, ३४७.

8 ऋ. सं., १०. ७१. १.

9 ऋ. सं., १०. ९०. ६; वाज. सं., १३. २७; तै. सं., ४. २. ९. ३; ५. २. ८. ६.

10 वाज. सं., १६. १; तै. सं., ४. ५. १. १.

11 मुण्ड. उप., १. १. १.

12 तै. आ., १०. ४८. १; महाना. उ., १७. ६.

माम्" इत्याद्यनुवाकत्रयं तैत्तिरीयाणां प्रसिद्धम्। 'महाव्रतं' [1]"सोमं राजानं" साम। 'गोसूक्ताश्वसूक्ते' सामनी "[2]यदिन्द्राहं यथा त्वम्" इत्यस्यामृचि प्रसिद्धे। 'इन्द्रशुद्धे सामनी' "[3]एतोन्विन्द्रं स्तवाम" इत्यस्यामृचि प्रसिद्धे। अत्रिस्मृतौ चैतान्यधिकानि।

[4]अत्रिः

विमलं शिवसंकल्पं विवर्णं रोहितं ततः।

'विमलं' "[5]हंसः शुचिषदि"त्यादि। विष्णुस्मृतौ[6] नारायणीयमधिकम्। 'नारायणीयं' तैत्तिरीयाणामुपनिषत्॥

मनुः[7]—[४, १४७–१४९]

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः।
तं ह्याहुः परमं धर्ममुपधर्मोऽन्य उच्यते[8]॥
वेदाभ्यासेन सततं शौचेन तपसैव [9]च।
अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम्॥
संस्मृत्य पौर्विकीं जातिं ब्रह्मैवाभ्यसते [10]द्विजः।
ब्रह्माभ्यासेन वाजस्रमनन्तं सुखमश्नुते॥

1 सा. वे., १. ९१.

2 सा. वे., १. १२२; २. ११८४; 'गोसूक्तं' "आ गावो अग्मन्" (ऋ. सं., ६. २८. १.) इत्यष्टर्चम्। 'अश्वसूक्तं' "मा नो मित्रो वरुणो" (ऋ. सं., १. १६२. १.) इत्यष्टर्चम्—स्मृतिमुक्ताफलम्, आह्निकप्रकाशः, ३४८.

3 सा. वे., १. ३५०; २. ७५२.

4 Reproduced by वी. मि. आ., ३२०.

5 ऋ. सं., ४. ४०. ८; तै. सं., १. ८. १५. २; ४. २. १. ५.

6 विष्णुस्मृतिः, ५६, २५.

7 Reproduced by वी. मि. आ., ३२०.

8 'उच्यते' इत्येतदनन्तरं कानिचन पत्राणि त्रुटितानि—A.S.B.

9 तु—ना.

10 पुनः—ना.

'उपधर्मः' अल्पफलो धर्मः। 'तपः' कृच्छ्रादि। 'ब्रह्म' वेदः। 'अनन्तं' चिरकालोपभोग्यम्।

हारीतः

[1]प्रणवो व्याहृतिः सावित्री चेति सावित्रं येन पापेभ्यो मुच्यते। शतं जप्त्वा मानसात्पूतो भवति। सहस्रं जप्त्वा वाक्कृतात्पूतो भवति। दशसहस्राणि जप्त्वा सर्वतः पूतात्मा भवति। [2]आयुः प्राणं मा निर्मार्जीरिति मार्जनं पवित्रं [3]येन सर्वपापेभ्यो मुच्यते। [4]देवीरापः [5]शुद्धा वयं [6]हिरण्यवर्णाः शुचय [7]आपो अस्मान्मातर इति [8]शुद्धवतीरप्सु जपेदपामार्गं वा जुहुयात्पूतो भवतीति। [9]इमां धियं [10]शतं ते राजन् [11]तरत्समन्दीस्तरन् जपेत्पूतो भवति। [12]त्वं सोम तनूकृद्भ्य इति तनुकृतं पवित्रं येन तनुकृतादन्यकृताच्च मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो जुहुयादादित्यं चोपतिष्ठेत् पूतो भवति। [13]अग्न आयूंषि पवस इति सप्त शुचिमत्पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो वा जुहुयादादित्यं चोप-

1 वी. मि. आ., ३२३.
2 मैत्रा. सं., १. १. ११: ६. १२; कठ. सं., १. १०.
3 येन पापेभ्यो—ब, द.
4 तै. सं., १. २. ३. ३.
5 तै. सं., १. ३. ८. २. (शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म).
6 तै. सं., ५. ६. १. १.
7 तै. सं., १. २. १. १.
8 ऋ. सं., ८. ९५. ७; सा. वे., १. ३५०; २. ७५२.
9 ऋ. सं., ८. ४२. ३; तै. सं., १. २. २. २; ६. १. ३. २.
10 ऋ. सं., १. २४. ९; तै. सं., १. ४. ४५. १; ६. ६. ३. २.
11 ऋ. सं., ९. ५८. १–४.
12 ऋ. सं., ८. ७९. ३; वाज. सं., ५. ३५; तै. सं., १. ३. ४. १; ६. ३. २. २.
13 ऋ. सं., ९. ६६. १९; तै. सं., १. ३. १४. ७; ४. २९. १; ५. ५. २; ६. ६. २.

तिष्ठत् पूतो भवति। [1]अग्नेः समिदस्यभिशस्त्या मा पाहीति पञ्चदशकेनाभिशंसनान्मुच्यते। [2]समुद्रादूर्मिरिति तिस्र ऋषभं पवित्रं येनेन्द्रियकृतान्मुच्यते। मातापितरावतिक्रम्य [3]यदन्तरिक्षमित्यादित्यमुपतिष्ठेत्पूतो भवति। [4]अयं वां मित्रावरुणा इति पञ्च [5]नमस्ते राजन् वरुणेति चत्वारो [6]धाम्नो धाम्न [7]उदुत्तममव ते हेड[8] इति [9]निर्वरुणं पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो वा जुहुयादादित्यं चोपतिष्ठेत्पूतो भवति। [10]देवीराप[11] इत्यनुवाकमप्सु जपेत्पूतो भवति। [12]इमं स्तोममर्हत इति रोचनं पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो वा जुहुयादादित्यं चोपतिष्ठेत्पूतो भवति। [13]सुपर्णोऽसि गरुत्मानिति सौपर्णं पवित्रं प्राग्विष्णुक्रमेभ्यो[14] विषगरदष्टोपघातेषूपदिश्यते। [15]कया नश्चित्र

1 मैत्रा. सं., १. ५. २ : ६७. १५ ; १. ५. ८ : ७६. १३ ; कठ. सं., ६. ९ ; ७. ६.

2 ऋ. सं., ४. ५८. १ ; वाज. सं., १७. ८९ ; तै. आ., १०. १०. २.

3 तै. सं., १. ८. ५. ३.

4 ऋ. सं., २. ४१. ४ ; वाज. सं., ७. ९ ; तै. सं., १. ४. ५. १.

5 अ. वे., १. १०. २.

6 वाज. सं., ६. २२ ; तै. सं., १. ३. ११. १.

7 ऋ. सं., १. २४. १५ ; तै. सं., १. ५. ११. ३. etc.

8 ऋ. सं., १. २४. १४ ; तै. सं., १. ५. ११. ३.

9 इतः प्रभृति 'पूतात्मा भवति मानसात्पापात्' इत्येतत्पर्यन्तं नास्ति—ज, ना.

10 हंसः शुचिषदिति विमलं पवित्रं येन सर्वपापेभ्यो मुच्यते, अप्सु जपेद् घृतं तिलान् समिधो जुहुयात् आदित्यं वोपतिष्ठेत् पूतो भवति' इत्यधिकमुपलभ्यते—ब, द.

11 तै. सं., १. २. ३. ३.

12 ऋ. सं., १. ९४. १ ; मै. सं., २. ७. ३ : ७८. १.

13 वाज. सं., १२. ४ ; १७. ७२ ; तै. सं., ४. १. १०. ५ ; ६. ५. ३ ; ५. १. १०. ५.

14 वाज. सं., १२. ५ ; तै. सं., १. ६. ५. २ ; ४. २. १. १.

15 ऋ. सं., ४. ३१. १ ; वाज. सं., २७. ३९ ; तै. सं., ४. २. ११. २ ; ४. १२. ५.

इति तिस्रो वामदेव्यं पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान् समिधो वा जुहुयादादित्यं चोपतिष्ठेत्पूतो-भवति। [1]रुचं नो धेहीति सुरुचं पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो वा जुहुयादादित्यं चोपतिष्ठेत्पूतो भवति। [2]न तमंह इति सूक्तं पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो वा जुहुयादादित्यं चोपतिष्ठेत्पूतो भवति। [3]तत्त्वायामीति वारुणं पवित्रं येन सर्वपापेभ्यो मुच्यते। अप्सु जपेद्घृतं तिलान्समिधो वा जुहुयादादित्यं चोपतिष्ठेत्पूतो भवति। [4]पुनन्तु मा पितर इति षोडश पावमानीरप्सु जपेत्पूतो-भवति। [5]यद्देवा देवहेडनमिति कूष्माण्ड्यस्ताभिराज्यं जुहुया-त्पूतोभवति। [6]पवित्रमसि [7]द्रुपदादिवेति चाघमर्षणमन्त-र्जले त्रिरावर्तयित्वा [8]मुच्यते ब्रह्महत्यायाः। सर्वार्तिष्वापत्सु वाऽऽसमाप्तिकं जपेदापदो मुच्यते। [9]अदिति चेत्तयेति च सा-वित्रं [10]यत्किं चेदं वरुणमन्तर्जले त्रिरावर्त्य जपेत्सर्वपापेभ्यः प्रमुच्यते। [11]आ कृष्णेनेत्यादित्यमुपतिष्ठेत्सर्वपूतात्मा भवति।

1 वाज. सं., १८. ४८; तै. सं., ५. ७. ६. ३.

2 ऋ. सं., १०. १२६. १.

3 ऋ. सं., १. २४. १; वाज. सं., १८. ४९; २१. २; तै. सं., २. १. ११. ६; ५. ७. ६. ४.

4 वाज. सं., १९. ३७; मैत्रा. सं., ३. ११. १०: १५५. ६.

5 वाज. सं., २०. १४; अ. वे., ६. ११४. १; तै. आ., २. ३. १.

6 मैत्रा. सं., ३. ११. १०: १५७. ८.

7 वाज. सं., २०. २०.

8 प्रमुच्यते—ब, द.

9 Not traced.

10 ऋ. सं., ७. ८९. ५; तै. सं., ३. ४. ११. ६.

11 ऋ. सं., १. ३५. २; वाज. सं., ३३. ४३; ३४. ३१.

न षडर्चजापी योनिं विन्दति जातिस्मरश्च भवति। एवं प्रतिदिशमैन्द्रयाम्यसौम्यवारुणवायव्याग्नेयसौरैरुपतिष्ठेत् सर्वपूतात्मा भवतीति ॥

'मानसात्' मानसात्पापात्। 'वाक्कृतात्' वाक्कृतपापात्। 'सर्वतो' वाङ्मनःकायकृतेभ्यः पापेभ्यः। 'मार्जनम्' इति समाख्यानादेतन्मन्त्रमार्जनादेव फलम्। 'अपामार्गम्' अपामार्गसमिधः, हारीतेनैव समिद्रूपत्वेन होमाभिधानात्। 'तरन्' नौकादिना, "सुतर्माणमधिनावं रुहेम"[1] इति मन्त्रवर्णात्। 'तनुकृतात्' कायिकात्। 'अन्यकृतात्' मानसाद्वाचिकाच्च पुत्रशिष्यादिकृताद्वा पापादिति शेषः। 'शुचिमत्' शुचित्वप्रतिपादकं 'पवस' इत्यादिसूक्तम्। 'अभिशंसनम्' अभिशापः। अभिशापकर्तुरेतदिति जयस्वामी। 'निर्वरुणम्' इत्यस्य नाम। 'विष्णुक्रमेभ्यः' "[2]विष्णोः क्रमोऽसि" इत्यादिमन्त्रेभ्यः। 'गरः' मन्त्रौषध्यादिना प्रतिबद्धवीर्यं विषम्। 'दष्टः' श्वादिना। 'वामदेव्यं' वामदेवऋषिदृष्टम्। 'आर्तिः' व्याध्यादिकृता। 'समाप्तिकं' [3]"अग्नेर्मन्वे प्रथम" इत्यादिरनुवाकः॥

[4]याज्ञवल्क्यः—[१, १०१]

वेदाथर्वपुराणानि सेतिहासानि शक्तितः।
जपयज्ञार्थसिध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥

1 ऋ. सं., ८. ४२. ३; तै. सं., १. २. २. २.
2 वाज. सं., १२. ५; तै. सं., १. ६. ५. २; ४. २. १. १.
3 तै. सं., ४. ७. १५. १; अ. वे., ४. २३. १.
4 वी. मि. आ., ३२०.

[1]विष्णुः—[६४, ३६-३९]

स्नातश्च पवित्राणि यथाशक्ति जपेत्। विशेषतः सावित्रीम्। पुरुषसूक्तं वा। नैताभ्यामधिकमस्ति॥

[2]मनुर्यमश्च प्रथमे—[मनुः, २, ८१-८४]

ओँकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्॥
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान्॥
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः।
सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते॥
क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः।
अक्षरं त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः॥

[3]'एतां' गायत्रीम्। 'वायुभूतः' वायुवच्छीघ्रगतिः, लिङ्गशरीरनिष्ठो वा। 'खमूर्तिमान्' आकाशवद्व्यापी, सन् परमात्मा भवति। 'क्षरन्ति' विनाशिन्यो भवन्ति। 'अक्षरं' ओँकारः, तस्य मोक्षरूपं फलम्। न क्षरतीत्यक्षरम्। 'प्रजापतित्वं' च तत्प्रतिपादकत्वेनोंकारस्य मन्तव्यम्। 'अक्षरत्वं' ब्रह्मत्वम्॥

[4]यमं ऋषय ऊचुः

किं वै परमकं ब्रह्म किं वै परमकं तपः।

1 वी. मि. आ.. ३२०.
2 वी. मि. आ., ३२०-२१.
3 Reproduced by वी. मि. आ., ३२१.
4 वी. मि. आ., ३२१-३२२.

उपवासात्परं किं वै किं च मौनाद्विशिष्यते ॥

यम उवाच[1]

ॐकारः परमं ब्रह्म प्राणायामः परं तपः ।
सावित्र्याः [2]परमं नास्ति मौनात्सत्यं विशिष्यते ॥
क्षरन्तीह क्रियाः सर्वाः प्रयुक्ता वैदिकीर्भुवि ।
अक्षरं त्वक्षरं विद्याद्ब्रह्म चैव प्रजापतिः ॥
एकाक्षरं परं ब्रह्म पावनं परमं स्मृतम् ।
गायत्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं तु जपेन्नित्यं सर्वपापप्रणाशिनीम् ॥
गायत्रीं चैव वेदांश्च तुलयाऽतोलयत्प्रभुः ।
एकतश्चतुरो वेदान् साङ्गान् स सपदक्रमान् ॥
एकतश्चैव गायत्रीं तुल्यरूपा तु सा स्मृता ।

[3]'सः' प्रजापतिः । 'सपदक्रमान्' पदक्रमसहितान् ॥

अङ्गिराः[4]

प्रणवाद्यास्तथा वेदाः प्रणवे पर्युपस्थिताः ।
वाङ्मयं प्रणवः सर्वमभ्यसेत्प्रणवं ततः ॥
प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥

1 वी. मि. आ., ३२१–३२२.
2 स्तु परं नास्ति—ब, ना, द.
3 Reproduced by वी. मि. आ., ३२२.
4 वी. मि. आ. ३२२.

दक्षः[1]

सविता देवता यस्या मुखमग्निस्त्रिपात्स्थिता ।
विश्वामित्र ऋषिश्छंदो गायत्री सा विशिष्यते ॥

'त्रिपात्' त्रिपदा गायत्री या स्थितेति योज्यम् ।

यमः[2]

न तथा वेदजापेन[3] पापं निर्दहति द्विजः ।
यथा सावित्रिजापेन[4] सर्वपापैः प्रमुच्यते ॥

शङ्खः[5]—[१२, १–३१]

इति वेदपवित्राण्यभिहितानि । एतेभ्यः सावित्री विशिष्यते । नाघमर्षणात्परमन्तर्जले । न व्याहृतिभ्यः परं होमे । न सावित्र्याः परं जप्ये । कुशबृष्यामासीनः कुशोत्तरायां वा कुशपवित्रपाणिरुदङ्मुखः सूर्याभिमुखो वाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्यात् । सुवर्णमणिमुक्ताफलस्फटिकपद्माक्षेन्द्राक्षपुत्रजीवकानामन्यतमादक्षमालां कुर्यात् । कुशग्रन्थिकृतां वा हस्तोपयामैर्वा गणयेत् । आदौ देवतामार्षं छंदश्च संस्मरेत् । ततः सप्रणवा व्याहृतीरादावावर्त्य गायत्रीमावर्तयेत् । अथास्याः सविता देवता ऋषिर्विश्वामित्रो गायत्री च्छंदः । ॐकारस्य प्रणवाख्या । ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं इति महाव्याहृतयः । आपो ज्योती

1 वी. मि. आ., ३२२.
2 वी. मि. आ., ३२२.
3 जप्येन—ना., वी. मि. आ.
4 जप्येन—ना.
5 वी. मि. आ., ३१२–३१३.

रसोऽमृतं ब्रह्म भूर्भुवःस्वरोमिति शीर्षम्। अत्र च भवन्ति श्लोकाः।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥
[1]शतजप्ता तु सा देवी [2]दिनपापप्रणाशनी।
सहस्रजप्ता तु तथा पातकेभ्यः प्रमोचिनी॥
दशसाहस्रजापेन सर्वपापप्रणाशिनी।
[3]लक्षजप्ता तु सा देवी महापातकनाशिनी॥
सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः।
सुरापश्च विशुध्यन्ति लक्षजापान्न संशयः॥
प्राणायामत्रयं कृत्वा [4]कल्यं कल्यं समाहितः।
अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्यते॥
सव्याहृतीः सप्रणवाः प्राणायामास्तु षोडश।
अपि भ्रूणहनं [5]मासात्पुनन्त्यहरहः कृताः॥
गायत्री वेदजननी गायत्री पापनाशिनी।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम्॥
हस्तत्राणपदा देवी पततां नरकार्णवे।
तस्मात्तामभ्यसेन्नित्यं[6] ब्राह्मणो हृदये शुचिः॥
गायत्रीजापनिरतं हव्यकव्येषु योजयेत्।
तस्मिन्न तिष्ठते पापमब्बिन्दुरिव पुष्करे॥

1 शतं—ना., वी. मि. आ.
2 महापातकनाशिनी। सुवर्णस्तेय—ना; सर्वपापप्रणाशिनी—वी. मि. आ.
3 अर्धमिदं नास्ति—द, ब.
4 स्नानकाले—ब, द.
5 साक्षात्—ब, द.
6 देवीं—ज, ना.

जप्यैनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
उपांशु स्याच्छतगुणः साहस्रो मानसः स्मृतः ।
नोच्चैर्जप्यं बुधः कुर्यात्सावित्र्यास्तु विशेषतः ॥
सावित्रीजप्यनिरतः स्वर्गमाप्नोति मानवः ।
सावित्रीजप्यनिरतो मोक्षोपायं च विन्दति ॥
तस्मात्सर्वप्रयत्नेन स्नातः प्रयतमानसः ।
गायत्रीं तु जपेद्भक्त्या सर्वकल्मषनाशिनीम् ॥

'वृषी' स्वल्पमासनम् । 'इन्द्राक्षः' आरुकम् । 'हस्तोपयामः' अङ्गुलीनमनम् । 'आदौ' जपारम्भे । 'हृदये शुचिः' शुद्धमनाः । 'मोक्षोपायं' तत्त्वज्ञानम् ॥

[1]योगियाज्ञवल्क्यो मनुयमवसिष्ठहारीताश्चाद्यश्लोकद्वये—

ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥
जप्येनैव तु [2]संसिद्धो ब्राह्मणो नात्र संशयः ।
कुर्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
न चङ्क्रमन्न च हसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न [3]चावृत्तशिरास्तथा ॥
न पदा [4]पदमाक्रम्य न चैव हि तथा करौ[5] ।

1 वी. मि. आ., ३१३–३१६ ; मनुः, २, ८६–८७ ; वसिष्ठः, २६, ११–१२.
2 संसिध्येत्—ब, ज, द.
3 प्रावृतशिरा:—ब, ज, ना, द.
4 पादं—ब, द.
5 करम्—ब, द.

न चासमाहितमना न च संश्रावयन् [1]जपेत् ॥
प्रच्छन्नानि[2] च दानानि ज्ञानं च निरहंकृतम् ।
जप्यानि च सुगुप्तानि तेषां फलमनन्तकम् ॥
उपांशुजपयुक्तस्य शंस्याच्छतगुणो भवेत् ।
साहस्रो मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः ॥
ओष्ठस्पन्दनमात्रेण यत्रोपांशु तदध्वनि[3] ।
कृत्वा जिह्वां निर्विकल्पां [4]चिन्तयेत्तद्धि मानसम् ॥
तिष्ठंश्चेद्वीक्षमाणोऽर्कं जपं कुर्यात्समाहितः ।
अन्यथा प्राङ्मुखः कुर्याद्वक्ष्यमाणक्रमेण तु ॥
प्राक्कूलेषु कुशेष्वेवमासीनश्चाऽऽसने शुभे ।
नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयुतः[5] ॥
स्फटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ।
अक्षमाला तु कर्तव्या[6] उत्तमा ह्युत्तरोत्तरा ॥
कोट्यादिका भवेद्वृद्धिरक्षमाला विशेषतः ।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठा [7]परा परा ॥
अभावे त्वक्षमालायाः कुशग्रन्थ्याग्रपाणिना ।
जप एव हि कर्तव्य एकाग्रमनसैव तु ॥
ध्यायेत मनसा मन्त्रं जिह्वौष्ठौ न तु[8] चालयेत् ।
[9]न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥

1 परान्—ना.
2 प्रसन्नानि—उ.
3 ध्वनिः कृता—ना.
4 चिन्तनं तद्धि—ब, द.
5 समाहितः—ब, द.
6 प्रकर्तव्या—ना.
7 इतः प्रभृति A.S.B., कोशः उपलभ्यते.
8 च—ब, द.
9 Line omitted by वी. मि. आ.

यक्षराक्षसभूतानि सिद्धविद्याधरोरगाः ।
हरन्ति प्रसभं यस्मात्तस्माद्गुप्तं समाचरेत् ॥
जलान्ते [1]चाग्न्यगारे वा जले देवालयेऽपि वा ।
गवां गोष्ठे पुण्यतीर्थे सिद्धक्षेत्रेऽथवा [2]गृहे ॥
गृहे ह्येकगुणं जप्यं नद्यां तु द्विगुणं स्मृतम् ।
गवां गोष्ठे [3]दशगुणमग्न्यगारे [4]दशाधिकम् ॥
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ ।
सहस्रं शतकोटीनामनन्तं [5]विष्णुसन्निधौ ॥
शाकयावकभैक्ष्याणि पयो मूलफलानि च ।
दधि सर्पिस्तथा ह्यापः प्रशस्ता ह्युत्तरोत्तरम् ।
चरवो ह्युपवासश्च भैक्ष्यं नक्तमयाचितम् ।
बिसशृङ्गाटशालूकहविष्यान्नानि यानि तु ॥
एतान्यनुव्रतान्याहुः शस्तानि जपकर्मणि ।
जपकाले न भाषेत व्रतहोमादिकेषु च ॥
एतेष्वेवावसक्तं तु यद्यागच्छेद्द्विजोत्तमः ।
अभिवाद्य ततो विप्रं योगक्षेमं तु[6] कीर्तयेत् ॥
स्त्रीशूद्रपतितांश्चैव रासभं च रजस्वलाम् ।
जपकाले न भाषेत व्रतहोमादिकेषु च ॥
तूष्णीमासीत तु जपंश्चण्डालपतितादिकान्[7] ।
दृष्ट्वा तान्वार्युपस्पृश्याऽऽभाष्य स्नात्वा पुनर्जपेत् ॥

1 वा for च—ब, ना, द.
2 तथा—ब, द.
3 शतगुणं—ज, ना.
4 शताधिकम्—ज.
5 शिवसन्निधौ—ज, ना.
6 च—ना.
7 पाषण्डचाण्डालपतितादिषु—ना.

[1]आचम्य प्रयतो [2]नित्यं जपेदशुचिदर्शने ।
सौरान्मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ॥
[3]रौद्रमैत्रासुरान् मन्त्रान् राक्षसानाभिचारिकान् ।
व्याहृत्यालभ्य चात्मानमपः [4]स्पृष्ट्वान्यदाचरेत्[5] ॥
एतान् व्याहृत्य रौद्रादीनस्पृष्ट्वाथ जलं द्विजः ।
ऊर्ध्वं यत्कुरुते कर्म तद्भवत्ययथायथम् ॥
यदि वाग्यमलोपः स्याज्जपादिषु कथंचन[6] ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

[7]'पाकयज्ञाः' ब्रह्मयज्ञव्यतिरिक्ता देवयज्ञादयः। 'विधियज्ञाः' ज्योतिष्टोमादयः। मित्र मेव 'मैत्रः', सर्वेषां भूतानामिति शेषः। सर्वभूतमित्रत्वं च हिंसाङ्गक्रतुव्यतिरिक्ताहिंसाङ्गकजपयज्ञानुष्ठानेन। 'चङ्क्रमन्' इतस्ततश्चलन्। 'अपाश्रितः' कुड्यादाविति शेषः। 'करौ' पदाक्रम्येति शेषः। 'शंस्यात्' उच्चैः [8]पठनीयाद् 'उपांशुजपयुक्तस्य' यो जपः सः 'शतगुणो भवेद्' इत्यर्थः। 'कोट्यादि' शब्देनार्बुदादिसंख्यापरिग्रहः। 'प्रसभं' हठात्। 'चरवो' अन्नस्थालीपाकविशेषाः। 'बिसः' मृणालः। 'हविष्यान्नानि' यवषाष्टिकादीनि। 'अनुव्रतानि' जपयज्ञव्रतस्याङ्गभूतानि। 'एतेषु' जपहोमादिषु। 'अवसक्तं'

1 मनुः [५, ८६]—इति उ; मनुरिति नास्ति—ब, द, ना, A.S.B., वी. मि. आ.
2 भूत्वा—ना.
3 रौद्रपित्र्यासुरान्—द, ब, ना, A.S.B; रौद्रपैत्रासुरान्—ज.
4 स्पृष्ट्वा यदाचरेत—उ.
5 इतः प्रभृति श्लोकद्वयं नास्ति—द, ब.
6 कदाचन—ना.
7 Reproduced by वी. मि. आ., ३१६.
8 'पठनीया' इत्येतदनन्तरं पत्राणि त्रुटितानि—A.S.B, कोशे.

व्यापृतम्। 'तान् आभाष्ये'ति संबन्धः। 'अयथायथं' निष्फलम् ॥

[1]नरसिंहपुराणे—[५८, ७८-८२]

त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत।
वाचिकश्च उपांशुश्च मानसश्च त्रिधा स्मृतः ॥
त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः।
यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ॥
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः।
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ [2]प्रचालयेत् ॥
किंचिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः।
धिया यदक्षरश्रेण्यो वर्णाद्वर्णं पदात्पदम् ॥
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः।

'किंचिच्छब्दं स्वयं विद्यादि'ति, यथा तं ध्वनिमन्यो न जानीयादित्यर्थः[3] ॥

पैठीनसिः

सावित्र्या मानसेन च स्वाध्यायेन जपो व्याख्यातो ब्रह्मयज्ञश्च ॥

'जपः' इतरमन्त्रजपः। यथा गायत्र्याः स्वाध्याये मानसे इतिकर्तव्यताफलत्वं[4], तथा जपे ब्रह्मयज्ञे चेत्यर्थः ॥

1 वी. मि. आ., ३१६-३१७.
2 च चालयेत्—ब, द, वी. मि. आ.
3 जानातीत्यर्थः—ब, ज, द. Reproduced by वी. मि. आ.
4 ताफलं च तथा—ना.

ब्रह्मयज्ञाधिकारे—

[1]आपस्तम्बः—[१, ११, १८–२०]

तस्य विधिः। अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशेऽधीयीत यथास्वाध्यायमुत्सृजन्वाचा। मनसा चानध्याये ॥

'[2]यथास्वाध्यायमुत्सृजन्नि'ति, यदधीतं तत्त्यजन् वाचाधीयीत। अनध्याये पुनर्मनसाधीयीत ॥

[3]वसिष्ठः—[२६, १४]

यथाग्निर्वायुना धूतो हविषा चैव दीप्यते।
एवं जप्यपरो नित्यं मन्त्रयुक्तः सदा द्विजः ॥

यमः

यमयित्वेन्द्रियग्रामं कामक्रोधावुभावपि।
ब्रह्मचारी च जापी च ब्रह्मलोकमवाप्नुयात् ॥

[4]लघुहारीतः

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे।
[5]अशून्यौ तु करौ कुर्यात्सुवर्णरजतैः कुशैः ॥

[6]योगियाज्ञवल्क्यः

न क्लिन्नवासाः स्थलगो जपादीनाचरेद् बुधः।

1 वी. मि. आ., ३२२.
2 Reproduced by वी. मि. आ., ३२२
3 वी. मि. आ., ३२२–३२३.
4 वी. मि. आ., ३२३.
5 अशून्यं तु करं—ब, ज, ना, द.
6 वी. मि. आ., ३२३.

वस्त्रनिश्च्योतनं प्रेताः परिवार्य पिबन्ति हि[1] ।
अतादृते नार्द्रवासा नैकवासाः समाचरेत् ॥
न जीर्णेन न नीलेन परिक्लिष्टेन वा जपेत् ।
'परिवार्य' वेष्टयित्वा । 'परिक्लिष्टेन' मलिनेन ।

नरसिंहपुराणे[2]—[५८, ७७, ८५, ८७–९०]

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः ।
प्राणायामांस्तु कुर्वीत यथाशास्त्रमतन्द्रितः ॥
जपेदहरहः स्नात्वा सावित्रीं जपविद्द्विजः ।
अथ पुष्पाञ्जलिं दत्वा भानवे चोर्ध्वबाहुकः ॥
[3]उदु त्यं च जपेन्मन्त्रं [4]चित्रं [5]तच्चक्षुरित्यपि ।
प्रदक्षिणमुपावृत्य नमस्कृत्य ततः प्रभुम् ॥
पित्रर्षिगणदेवादीनद्भिः संतर्पयेत्ततः ।
देवान्देवगणांश्चैव मुनीन्मुनिगणानपि ॥
पितॄन्पितृगणांश्चैव नित्यं संतर्पयेत्ततः[6] ।
स्नातवस्त्रं ततः पीड्य पुनराचमनं चरेत् ॥

[7]इति भट्टहृदयधरात्मजमहासांधिविग्रहिकभट्टश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकाण्डे[8] जपविधिः ॥

1 च—ज.
2 वी. मि. आ., ३०२.
3 ऋ. सं., १. ५०. १; तै. सं., ४. १. ७. ४; ५. १. ८. ६.
4 ऋ. सं., १. ११५. १; तै. सं., १. ४. ४३. १.
5 ऋ. सं., ७. ६६. १६; वाज. सं., ३६. २४; तै. आ., ४. ४२. ५.
6 संतर्पयेद्बुधः—ज.
7 इति कृत्यकल्पतरौ नियतकालकृत्ये जपविधिः—द. ब; इति श्रीभट्ट—ना.
8 कृत्यकल्पतरौ कृत्यकाण्डे—उ; कृत्यकल्पतरौ नियतकालकृत्यकाण्डे—ज, ना.

# अथ तर्पणविधिः

तत्र विष्णुः[1]—[६४, २४–२५]

स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्यात्। परिवर्तितवासाश्चेत्तीर्थतीरमुत्तीर्य ॥

याज्ञवल्क्यः—[१, १००]

स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥

'देवान्' ब्रह्मादीन्। 'अर्चयेत्' तल्लिङ्गैर्मन्त्रैः[2] पुष्पाक्षतादिभिः। 'पितॄंश्च' श्राद्धेन ॥

शातातपः[3]

तर्पणं च शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥

'शुचिः' मन्त्रस्नानादिनापि। अनेन च प्रधानतया नित्यतर्पणं विधीयते, प्रत्यहमित्यभिधानात्। तर्पणमुपक्रम्य

तस्मात्सदैव कर्तव्यमकुर्वन्महतैनसा[4]।

1 वी. मि. आ., ३३७.

2 तल्लिङ्गैस्तत्तन्मन्त्रैः—ज.

3 Text and commentary reproduced by वी. मि. आ., ३३७.

4 महतैनसा—ब, द, ना.

युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्धि भर्ति हि ॥

इत्यादिछन्दोगपरिशिष्ट[२, २३]वचनाच्च ॥

विष्णुः—[६४, २७-३५]

स्नात्वा च विधिवदुपस्पृशेत्। पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाञ्जलिं दद्यात्। उदकाञ्जलिं चादावेव। दिव्येन तीर्थेन देवानां तर्पणं कुर्यात्। पित्र्येण पितृतर्पणम्। आदौ स्ववंश्यानां तर्पणं कुर्यात्। ततः संबन्धिबान्धवानाम्। ततः सुहृदाम्। एवं नित्यस्नायी स्यात्॥

'स्ववंश्याः' मातापितृवंशजाः पित्रादयो मातामहाश्च॥

जपानन्तरं छन्दोगपरिशिष्टे कात्यायनः[1]—[२,१८-२३]

[2]यवाद्भिस्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि।
नामान्ते तर्पयामीति आदावोमिति हि ब्रुवन्॥

ब्रह्माणं विष्णुं रुद्रं प्रजापतिं देवांश्छन्दांसि वेदान् ऋषीन् पुराणानाचार्यान् गन्धर्वानितराचार्यान्। संवत्सरं सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान् सरितो दिव्यान् मनुष्यान् [3]यक्षान् रक्षांसि सुपर्णान् पिशाचान् पृथिवीमोषधीः पशून्वनस्पतीन्[4] भूतग्रामं चतुर्विधमित्युपवीती। अथ प्राचीनावीती यमं यमपुरुषं कव्यवाहमनलं सोममर्यमणमग्निष्वात्तान् सोमपान् बर्हिषदोऽथ स्वान्[5]

1 वी. मि. आ., ३६८.

2 अथाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनपि—इति मुद्रितगोभिलस्मृतिपाठः.

3 यक्षान् सुपर्णान् भूतानि पशून्—ब, द; यक्षान् रक्षांसि पिशाचान् सुपर्णान् तानि-पशून् वनस्पतीन् ओषधीः भूतग्रामं चतुर्विधमुपवीती—ज.

4 इतः प्रभृत्युपलभ्यते—A.S.B.

5 भ्रातॄन् पितॄन् पितामहान्—ज.

पितॄन्मातामहानिति प्रतिपुरुषमभ्यसेत्। ज्येष्ठभ्रातृश्वशुरपितृव्यमातुलांश्च मातापितृवंश्या ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्ययमवसानाञ्जलिः। अथ श्लोकः।

छायां यथेच्छेच्छरदातपार्तः
पयः पिपासुः क्षुधितोऽत्तुमन्नम्।
बालो जनित्रीं जननी च बालं
योषित्पुमांसं पुरुषश्च योषाम्॥
तथा भूतानि सर्वाणि स्थावराणि चराणि च।
[1]विप्रादुदकमिच्छन्ति सर्वे ह्युदककाङ्क्षिणः॥
तस्मात्सदैव कर्तव्यमकुर्वन्महतैनसा।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्बिभर्ति हि॥

'पुराणान्' इत्याचार्यविशेषणम्। 'प्रतिपुरुषमभ्यसेदि'त्यनेन पित्रादीनां त्रयाणां मातामहानां[2] च त्रयाणामुदकाञ्जलिरावर्तत इत्युक्तम्॥

जपानन्तरं योगियाज्ञवल्क्यः[3]

ततः संतर्पयेद्देवान् ऋषीन्देवगणांस्तथा[4]।
ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्॥
देवांश्छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान्।
आचार्यांश्चैव गन्धर्वानाचार्यानितरांस्तथा॥
[5]संवत्सरं सावयवं देवीश्चाप्सरसस्तथा।

1 विप्रादुदयमिच्छान्ति सर्वेभ्युदयकांक्षिणः—ब, द, ज.
2 मातामहादीनां च—ज, ना.
3 वी. मि. आ., ३६५—३६७.
4 गणानपि—ब, द; ऋषीन् मर्त्यान् पितॄंस्तथा—वी. मि. आ.
5 श्लोकोऽयं नास्ति—ना.

तथा देवानुगान्नागान् सागरान्पर्वतांस्तथा ॥
सरितोऽथ मनुष्यांश्च यक्षरक्षांसि[1] चैव हि ।
पिशाचांश्च सुपर्णाश्च भूतान्यथ पशूंस्तथा ॥
वनस्पतींश्चौषधीश्च भूतग्रामं चतुर्विधम् ।
[2]अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥
तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ।
आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान् [3]शुभान् ॥
प्रागग्रेषु सुरान्सम्यग्दक्षिणाग्रेषु वै पितॄन् ।
सव्यं जानुं ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ॥
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान्पितृगणांस्तथा ।
मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः ॥
प्राचीनावीत्युदकं तु प्रसिञ्चेद्वै तिलान्वितम् ।
यद्युद्धृतं प्रसिञ्चेत्तु तिलान्संमिश्रयेज्जले[4] ॥
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ।
दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि ॥
दक्षिणेनैव गृह्णीयात्पितृतीर्थसमीपतः ।
तिलानामप्यलाभे[5] तु सुवर्णरजतान्वितम्[6] ॥
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वाप्यथ ।
[7]कव्यवाडनलं सोमं यममर्यमणं तथा ॥
अग्निष्वात्तान्सोमपांश्च तथा बर्हिषदः पितॄन् ।

1 यक्षान् रक्षांसि—ब, ज, ना, द.
2 आरब्धेन च—ब, द.
3 शुचीन्—ना, वी. मि. आ.
4 जलैः—ज, ना.
5 तिलानामप्यभावे तु—ना.
6 सुवर्णरजतादिकम्—ब, द.
7 The next three lines are missing in वी. मि. आ.

यदि स्याज्जीवपितृक एतान्दिव्यान्पितॄंस्तथा ॥
येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत् ।
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ॥
वसून् रुद्रांस्तथाऽऽदित्यान्[1] नमस्कारस्वधान्वितान् ।
एते सर्वस्य पितर एष्वायत्ताश्च मानवाः[2] ॥
आचार्यांश्च पितॄन्स्वांश्च पितृप्रभृति नामतः ।
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्धनैः ॥
[3]उदीरतामङ्गिरस[4] [5]आयन्त्वित्यूर्जमित्यपि[6] ।
[7]पितृभ्य इति [8]ये चेह [9]मधुवाता इति त्र्यृचम् ॥
पितॄन्ध्यायन् प्रसिञ्चन्वै जपेन्मन्त्रान्यथाक्रमम् ।
[10]तृप्यध्वमिति च स्त्रिर्वै ततः प्राञ्जलिरानतः[11] ॥
[12]नमो व इति जप्त्वा वै ततो मातामहान्स्वीन् ।
तर्पयेदानृशंस्यार्थं धर्मं परममास्थितः ॥
माता मातृष्वसा चैव मातुलानी पितृष्वसा ।
दुहिता च स्वसा चैव शिष्यर्त्विग्ज्ञातिबान्धवाः ॥
नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वशः ।

1 तथा दिव्यान्—ब, ज, द.
2 मानुषाः—ब, द, ज; एषां दत्वा च मानुषान्—ना.
3 तै. सं., २. ६. १२. ३; ऋ. सं., १०. १५. १.
4 तै. सं., २. ६. १२. ६; ऋ. सं., १०. १४. ६.
5 वाज. सं., १९. ५८.
6 वाज. सं., २. ३४.
7 वाज. सं., १९. ३६; तै. ब्रा., २. ६. ३. २.
8 ऋ. सं., १०. १५. १३; वाज. सं., १९. ६७.
9 तै. सं., ४. २. ९. ३; ऋ. सं., १. ९०. ६; वाज. सं., १३. २७.
10 चान्ते वै—ज.
11 प्राञ्जलिनानतः, ब. द.
12 तै. सं., ३. २. ५. ५; वाज. सं. २. ३२.

सवर्णेभ्यो जलं [1]दद्यान्नान्यवर्णे[2] कदाचन ॥
[3]पूर्वं स्वपितरस्तर्प्याः पश्चादन्यांश्च तर्पयेत् ।
नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः[4] ॥
पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिनः ।

'पूर्ववन्मन्त्रैः' पूर्वं याज्ञवल्क्यसंहितायां श्राद्धप्रकरणे उक्तैः "विश्वेदेवास आगत[5]" "उशन्तस्त्वा[6]" इत्यादिमन्त्रैः । 'कव्यवाडनलः' एका देवता । 'येभ्यो वाऽपी'ति, पितुः पित्रादिभ्यः । 'एतान्दिव्यपितॄन्' कव्यवाडनलादीन् वक्ष्यमाणान् वस्वादीन् पितॄंश्च । 'नमस्कारस्वधान्वितान्' तर्पयेदिति शेषः । अत्र च

"देवान् ब्रह्मऋषीन् सर्वान् तर्पयेताक्षतोदकैः[7]" ।

इति [8]पद्मपुराणे [सृष्टिखण्डम्, २०, १६५] अभिधानाद्देवर्षिमनुष्यतर्पणे यवा नियताः । पितृतर्पणे तु योगियाज्ञवल्क्येन स्नानप्रकरणे [9]'मृत्तिलान्गोमयम्' इति तिलानां नित्यवदङ्गत्वाभिधानात् 'तिलोदकमि'ति च [10]तत्राभिधानात् तिला नियताः ।

"तिलानामप्यभावे तु सुवर्णरजतान्वितम्" ।

1 देयम्—ना.
2 नासवर्णे—वी. मि. आ.
3 संतर्प्य स्वान् पितॄन् पूर्वं—वी. मि. आ ; पूर्वाः स्वपितरस्तर्प्याः—उ.
4 स्वतः—ब, ज, द.
5 ऋ. सं., १. ३. ७. etc ; तै. सं., १. ४. १६. १.
6 ऋ. सं., १०. १६. १२ ; तै. सं., २. ६. १२. १ ; वाज. सं., १९. ७०.
7 तर्पयेदक्षतोदकैः—ज.
8 वी. मि. आ., ३४८.
9 See *infra* page ६० line ६.
10 तत्र तत्र—ब, द.

इत्यभिधानात्। तिलाभावेऽपि पितृतर्पणं भवत्येव। पित्रादिदेवतोद्देशेन जलत्यागरूपं चेदं तर्पणाख्यं कर्म न प्रसेकमात्रं, दद्यादित्यभिधानात्। पित्रादीनां [1]तत्र तत्र तृप्तिश्रवणात्। अत्र च देवतर्पणे ईदृशं वाक्यम्—'ॐ ब्रह्मा तृप्यताम्। ॐ विष्णुस्तृप्यताम्।' इत्येवं प्रकारं प्रतिदैवतं कर्तव्यम्। मनुष्यतर्पणे तु—'ॐ सनकस्तृप्यताम्' इत्येवं [2]वाक्यम्। दिव्यपितृतर्पणे तु—'ॐ वसवस्तृप्यन्तामिदं जलं तेभ्यः स्वधा नमः' इत्येवं रूपं वाक्यम्। पितृतर्पणे तु—'ॐ अमुकगोत्रोऽस्मत्पिताऽमुकशर्मा तृप्यतामिदं जलं तस्मै स्वधा नमः' इत्येवं रूपं वाक्यं कर्तव्यम् ॥

पद्मपुराणे[3]—[सृष्टिखण्डम्, २०, १५१–१७०]

ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्।
[4]देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः ॥
क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भकाः खगाः।
विद्याधरा[5] जलधरास्तथैवाकाशगामिनः ॥
निराधाराश्च ये जीवाः [6]पापे धर्मे रताश्च ये।
तेषामाप्यायनायैतद्दीयते सलिलं मया[7] ॥
कृतोपवीती देवेभ्यो निवीती च[8] भवेत्ततः।

1 तु तत्र तत्र—ब, द; तु तत्र तृप्तिश्रवणात्—ना.
2 प्रकारं—ब, द, ज; वाच्यम्—ना.
3 वी. मि. आ., ३५४—३५५.
4 देवान्यक्षांस्तथा नागान् गन्धर्वाप्सरसोसुरान्—उ.
5 जलाधारा—उ.
6 पापधर्मे—ना.
7 तथा—ना.
8 तु—ब, ज, द, वी. मि. आ.

मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा[1] ।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ।
देवान्ब्रह्मऋषीन्सर्वांस्तर्पयेदक्षतोदकैः ॥
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य[2] भूतले ।
अग्निष्वात्तांस्तथा सौम्यान् हविष्मन्तस्तथोष्मपान् ॥
सुकालिनो बर्हिषदस्तथा चैवाज्यपान्पुनः ।
[3]तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः ॥
दर्भपाणिस्तु विधिना [4]प्रेतांस्तांस्तर्पयेत्ततः[5] ।
पित्रादीन्नामगोत्रेण तथा मातामहानपि ॥
संतर्प्य भक्त्या विधिवदिमं[6] मन्त्रमुदीरयेत् ।
"येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ॥
ते तृप्तिमतुलां यान्तु[7] यश्चास्मत्तोऽभिवाञ्छति[8]" ।

[9]विष्णुपुराणे—[३, ११, २७-३६]

शुचिवस्त्रधरः [10]स्नातो देवर्षिपितृतर्पणम् ।

1 मद्दत्तेनाम्बुनाखिलाः—ज.
2 जानु च—ना ; जानु तु—ड.
3 तर्पयेत्पितृवद्भक्त्या—ड ; तर्पयेच्च पितॄन् भक्त्या—ब, द, ज ; तर्पयेत पितॄन् भक्त्या—ना, वी. मि. आ.
4 पितॄन्स्वांस्तर्पयेत्ततः—ना.
5 पुनः—ब, द.
6 अमुं—ब, द.
7 ते तृप्तिमखिला यान्तु—A.S.B., द, ब, क, मुद्रितपाठश्च.
8 येऽप्यस्मत्तोयकांक्षिणः—मुद्रितपद्मपुराणपाठः.
9 वी. मि. आ., ३६४.
10 शान्तो—ब, द.

तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥
त्रिरपः[1] प्रीणनार्थाय देवानामपवर्जयेत् ।
ऋषीणां च यथान्यायं [2]सकृच्चापि प्रजापतेः ॥
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते ।
पितामहेभ्यश्च तथा प्रीणयेत्प्रपितामहान् ॥
मातामहाय तत्पित्रे तत्पित्रे च समाहितः ।
दद्यात्पित्र्येण तीर्थेन काम्यं चान्यच्छृणुष्व मे ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै [3]तथैव च ।
गुरवे मातुलादीनां स्निग्धमित्राय भूभुजे ॥
इदं चापि जपेदम्बु दद्यादात्मेच्छया नृप ।
उपकाराय भूतानां कृतदेवादितर्पणः ॥
देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥
जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः ।
प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाऽम्बुनाऽखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति ॥

'[4]त्रिरपः प्रीणनार्थाय' इति, एतस्माद्वचनाद्देवानामृषीणां प्रत्येकमञ्जलित्रयदानम् । प्रजापतेश्च तन्मध्य एक एवाञ्जलिः । पित्रादीनां तु वृद्धप्रमातामहान्तानामञ्जलित्रयं

1 'त्रिरपः' इत्येतदनन्तरं A.S.B. कोशे पत्राणि त्रुटितानि.

2 सकृद्वापि—ज.

3 तथा नृप—ना.

4 Quoted by वी. मि. आ., ३६५.

प्रत्येकम्। मात्रादितर्पणे काम्यत्वाभिधानं फलविशेष-कथनार्थं, नित्यता तु स्मृत्यन्तरानुसारात्॥

बौधायनः[1]—[२, ८, १५–२, १०, ४]

पूतः पञ्चभिर्ब्रह्मयज्ञैरद्भिरेवाप्सु[2] यथोत्तरं देवतास्तर्पयति। अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि। वसूंश्च तर्पयामि। पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि। रुद्रांश्च तर्पयामि। मित्र इन्द्रो महापितर आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि प्रत्यग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि। आदित्यांश्च तर्पयामि। वरुणो वसवोऽज एकपादहिर्बुध्न्यः पूषाश्विनौ यम इत्येतान्युदग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि। विश्वान्देवांस्तर्पयामि[3]। साध्यांश्च तर्पयामि। ब्रह्माणं तर्पयामि। प्रजापतिं तर्पयामि[4]। [चतुर्मुखं तर्पयामि। परमेष्ठिनं तर्पयामि।] हिरण्यगर्भं तर्पयामि। स्वयंभुवं तर्पयामि। ब्रह्मपार्षदांस्तर्पयामि[5]। ॐ भूः पुरुषं

1 वी. मि. आ., ३६०—३६३.

2 यज्ञैरथोत्तरं—मु. बो. पाठः; यज्ञैरप्सुरेव—द, ब.

3 आदित्यांश्च विश्वान्देवान्तर्पयामि—ब, पु, द, मि.

4 चतुर्मुखं तर्पयामि—ना.

5 ब्रह्मपार्षदीश्च तर्पयामि। अग्निं तर्पयामि। वायुं तर्पयामि। वरुणं तर्पयामि। सूर्यं तर्पयामि। चन्द्रमसं तर्पयामि। नक्षत्राणि तर्पयामि। ज्योतींषि तर्पयामि। सद्योजातं तर्पयामि। ओं भूः etc—मु. बो.

तर्पयामि। ॐ भुवः पुरुषं तर्पयामि। ॐ सुवः पुरुषं तर्पयामि। ॐ भूर्भुवः स्वः पुरुषं तर्पयामि। ॐ भूस्तर्पयामि। ॐ भुवस्तर्पयामि। ॐ सुवस्तर्पयामि। ॐ महस्तर्पयामि। ॐ जनस्तर्पयामि। ॐ तपस्तर्पयामि। ॐ सत्यं तर्पयामि। ॐ भवं देवं तर्पयामि। ॐ शर्वं देवं तर्पयामि। ॐ ईशानं देवं तर्पयामि। ॐ पशुपतिं देवं तर्पयामि। ॐ रुद्रं देवं तर्पयामि। ॐ उग्रं देवं तर्पयामि। ॐ भीमं देवं तर्पयामि। ॐ महान्तं देवं तर्पयामि। ॐ भवस्य देवस्य पत्नीं तर्पयामि। ॐ शर्वस्य देवस्य पत्नीं तर्पयामि। ॐ ईशानस्य देवस्य पत्नीं तर्पयामि। ॐ पशुपतेर्देवस्य पत्नीं तर्पयामि। ॐ रुद्रस्य देवस्य पत्नीं तर्पयामि। ॐ उग्रस्य देवस्य पत्नीं तर्पयामि। ॐ भीमस्य देवस्य पत्नीं तर्पयामि। ॐ महतो देवस्य पत्नीं तर्पयामि। ॐ भवस्य देवस्य सुतं तर्पयामि। ॐ शर्वस्य देवस्य सुतं तर्पयामि। ॐ ईशानस्य देवस्य सुतं तर्पयामि। ॐ पशुपतेर्देवस्य सुतं तर्पयामि। ॐ रुद्रस्य देवस्य सुतं तर्पयामि। ॐ उग्रस्य देवस्य सुतं तर्पयामि। ॐ भीमस्य देवस्य सुतं तर्पयामि। ॐ महतो देवस्य सुतं तर्पयामि। ॐ रुद्रांश्च तर्पयामि[1]। रुद्रपार्षदांश्च तर्पयामि[2]। ॐ विघ्नं तर्पयामि। विनायकं तर्पयामि। वीरं तर्पयामि। शूरं तर्पयामि। [3]उग्रं तर्पयामि। वरदं तर्पयामि। हस्तिमुखं तर्पयामि[4]। एकदंष्ट्रं

1 ॐ रुद्रांस्तर्पयामि—ब, द, मु. बो.

2 ओं रुद्रपार्षदांस्तर्पयामि—ब, पु, द; यामि। रुद्रपार्षदांश्च तर्पयामि—मु. बो.

3 omitted by मु. बो.

4यामि। वक्रतुण्डं तर्पयामि। एकदन्तं तर्प—मु. बो.

तर्पयामि । लम्बोदरं तर्पयामि[1] । विघ्नपार्षदांश्च[2] तर्पयामि । विघ्नपार्षदीश्च तर्पयामि[3] । ॐ सनत्कुमारं तर्पयामि । स्कन्दं तर्पयामि । इन्द्रं तर्पयामि । षष्ठीं तर्पयामि । षण्मुखं तर्पयामि । विशाखं तर्पयामि । [4]सुब्रह्मण्यं तर्पयामि । महासेनं तर्पयामि । स्कन्दपार्षदांश्च तर्पयामि । स्कन्दपार्षदीश्च तर्पयामि[5] । ॐ केशवं तर्पयामि । नारायणं तर्पयामि । माधवं तर्पयामि । गोविन्दं तर्पयामि । विष्णुं तर्पयामि । मधुसूदनं तर्पयामि । त्रिविक्रमं तर्पयामि । वामनं तर्पयामि । श्रीधरं तर्पयामि । हृषीकेशं तर्पयामि । पद्मनाभं तर्पयामि । दामोदरं तर्पयामि । श्रियं देवीं तर्पयामि । सरस्वतीं देवीं तर्पयामि । पुष्टिं तर्पयामि । तुष्टिं तर्पयामि । [6]गरुत्मन्तं तर्पयामि । विष्णुपार्षदांश्च तर्पयामि । विष्णुपार्षदीश्च तर्पयामि । ॐ यमं तर्पयामि । यमराजं [7]तर्पयामि । धर्मं तर्पयामि । धर्मराजं तर्पयामि । कालं तर्पयामि । नीलं तर्पयामि । मृत्युं तर्पयामि । वैवस्वतं तर्पयामि । चित्रगुप्तं तर्पयामि । वैवस्वतपार्षदांस्तर्पयामि । वैवस्वतपार्षदीश्च तर्पयामि । [8]भूमिं देवीं तर्पयामि । कश्यपं तर्पयामि । अक्षरं तर्पयामि[9] । विद्यां तर्पयामि । धन्वन्तरिं

1 यामि । गणपतिं तर्पयामि । विघ्न—मु. बो.

2 च नास्ति—ब, पु, ना, द.

3 विघ्नपार्षदार्दीश्च तर्पयामि—उ, वी. मि. आ.

4 जयन्तं for सुब्रह्मण्यं—मु. बो.

5 'ॐ आदित्यं तर्पयामि' etc., to 'केतुं तर्पयामि', बोधा., २, ९, ९. omitted by कल्पतरु.

6 वैनतेयं—मु. बो.

7 'तर्पयामि' इत्यारभ्योपलभ्यते—A.S.B.

8 भरद्वाजं तर्पयामि । गौतमं तर्पयामि । अत्रिं तर्पयामि । आङ्गिरसं तर्पयामि । विद्यां तर्पयामि । दुर्गां तर्पयामि । धान्वन्तरिं—इति मु. बो. पाठः.

9 Omitted by वी. मि. आ., ब, द, ज, A.S.B.

तर्पयामि। धन्वन्तरिपार्षदांश्च तर्पयामि। धन्वन्तरिपार्षदीश्च तर्पयामि ॥ अथ निवीती। ॐ ऋषींस्तर्पयामि[1]। महर्षींस्तर्पयामि। परममहर्षींस्तर्पयामि। ब्रह्मर्षींस्तर्पयामि। देवर्षींस्तर्पयामि। राजर्षींस्तर्पयामि। श्रुतर्षींस्तर्पयामि[2]। तपर्षींस्तर्पयामि। सत्यर्षींस्तर्पयामि। सप्तर्षींस्तर्पयामि। काण्डर्षींस्तर्पयामि। ऋषिकांस्तर्पयामि। ऋषिपत्नीस्तर्पयामि। ऋषिपुत्रकांस्तर्पयामि। [3]काण्वं बौधायनं तर्पयामि। आपस्तम्बं सूत्रकारं तर्पयामि। सत्याषाढं हिरण्यकेशिनं[4] तर्पयामि। [5]व्यासं तर्पयामि[6]। प्रणवं तर्पयामि। व्याहृतीस्तर्पयामि। सावित्रीं तर्पयामि। गायत्रीं तर्पयामि। छन्दांसि तर्पयामि। ऋग्वेदं तर्पयामि। यजुर्वेदं तर्पयामि। सामवेदं तर्पयामि। अथर्ववेदं तर्पयामि। अथर्वाङ्गिरसं तर्पयामि। इतिहासपुराणांस्तर्पयामि। सर्ववेदांस्तर्पयामि। सर्वदेवजनांस्तर्पयामि। सर्वभूतानि तर्पयामि ॥ अथ [7]दक्षिणतः प्राचीनावीती। ॐ पितॄन्स्वधा नमस्तर्पयामि। पितामहान्स्वधा नमस्तर्पयामि। प्रपितामहान्स्वधा नमस्तर्पयामि। मातॄः स्वधा नमस्तर्पयामि। पितामहीः स्वधा नमस्तर्पयामि। प्रपितामहीः स्वधा नमस्तर्पयामि। मातामहान्स्वधा नमस्तर्पयामि। मातुः पितामहान्स्वधा नमस्तर्पयामि। मातुः प्रपितामहान्स्वधा नमस्तर्पयामि। मातामहीः स्वधा नम-

1 मि। परमर्षींस्तर्पयामि। महर्षीं—ना, मु. बो.

2 मि। जनर्षींस्तर्पयामि। तप—मु. बो.

3 काण्डबौधायनं—वी. मि. आ.

4 हिरण्यकेशिं—उ; हिरण्यकेशं—ज, ना, वी. मि. आ.

5 वाजसनेयिनं याज्ञवल्क्यं तर्पयामि। आश्वलायनं शौनकं तर्पयामि। व्यासं—मु. बो., ध्यानं for व्यासं—वी. मि. आ., ३६२.

6 मि। वसिष्ठं तर्पयामि। प्रणवं—मु. बो.

7 'दक्षिणतः' इति नास्ति—मु. बो.

स्तर्पयामि। मातुः पितामहीः स्वधा नमस्तर्पयामि। मातुः प्रपितामहीः स्वधा नमस्तर्पयामि। आचार्यान्स्वधा नमस्तर्पयामि। आचार्यपत्नीः स्वधा नमस्तर्पयामि। गुरून्स्वधा नमस्तर्पयामि। गुरुपत्नीः स्वधा नमस्तर्पयामि। सखीन्स्वधा नमस्तर्पयामि। सखिपत्नीः स्वधा नमस्तर्पयामि। ज्ञातीन्स्वधा नमस्तर्पयामि। ज्ञातिपत्नीः स्वधा नमस्तर्पयामि। अमात्यान्स्वधा नमस्तर्पयामि। [1]अमात्यपत्नीः स्वधा नमस्तर्पयामि। सर्वान्स्वधा नमस्तर्पयामि। सर्वपत्नीः[2] स्वधा नमस्तर्पयामि। अनुतीर्थमप उत्सिञ्चति "[3]ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन्। तृप्यत तृप्यत तृप्यत" इति। नार्द्रवासा नैकवस्त्रो दैवानि कर्माण्यनुसंचरेत्। पितृकर्माणि [4]चेत्येकेषाम्॥

'[5]पञ्चभिर्ब्रह्मयज्ञैः' प्रणवव्याहृतित्रयगायत्रीजपात्मकैः। बौधायनेनैव 'प्रणवो व्याहृतयः सावित्री च' [२, ८, १४] इति पूर्वमभिधानात्। 'यथोत्तरं' या या देवता ब्रह्मादिका तां तां तेनैव क्रमेणेत्यर्थः। 'अनुतीर्थं' पित्रादितीर्थं[6] लक्ष्यीकृत्य। 'एकेषाम्' इति वचनाज्जलस्थतर्पणे आर्द्रवस्त्रताप्यभिमता। तर्पणजलप्रक्षेपश्च जलस्थेन स्थलस्थेन च पुरुषेण तर्पणे क्रियमाणे जलमध्ये कर्तव्यः। न तु स्थलस्थेन

1 अमात्याः for अमात्यपत्नीः—मु. बो.
2 सर्वाः for सर्वपत्नीः—मु. बो.
3 वाज. सं., २. ३४.
4 'कर्माणि चे' इत्येतदनन्तरं A.S.B. कोशे पत्राणि त्रुटितानि.
5 Reproduced by वी. मि. आ., ३६३–३६४.
6 पितृतीर्थं—ब, द.

स्थल एवेति नियमः। [1]स्थलस्थतर्पण एव बौधायनेन '[2]पूतः पञ्चभिर्ब्रह्मयज्ञैरद्भिरेवाप्सु यथोत्तरं देवतास्तर्पयति' [२, ८, १५] इत्यपामेव तर्पणजलप्रक्षेपाधिकरणत्वेनाभिधानात्। प्रणवव्याहृतित्रयसावित्रीगायत्रीरूपाणां पञ्चब्रह्मयज्ञानां वस्त्रपरिधानोत्तरकालमभिधानात्। यत्तु 'वासः पीडयित्वा' [२, ८, १२] इत्युक्त्वा तदभिधानं तद्बौधायनीयानां तर्पणात् प्राच्यं स्नानाङ्गमिति न ततोऽप्स्वित्येतस्य जलस्थतर्पणविषयता। यत्तु 'नार्द्रवासः' [२, १०, ४] इत्यादि तर्पणान्ते बौधायनीयं वचनं तेन स्थलतर्पणमेव द्रढीकृतम् ॥

शङ्खः[3]:—[१३, १-१५]

स्नातः कृतजप्योऽन्तर्जानुरुदङ्मुखश्च दिव्येन तीर्थेन देवानुदकेन तर्पयेत्। अथ तर्पणविधिः। ॐ भगवन्तं शेषं तर्पयामि। कालाग्निरुद्रं सन्तानवराहमजिनं रुक्मभौमं शैलभौमं ललाटभौमं रक्तभौमं श्वेतभौमं [4]कृष्णभौममिति पातालसप्तकम्। जम्बूद्वीपं शाकद्वीपं कुशद्वीपं क्रौञ्चद्वीपं शाल्मलिद्वीपं [5]प्लक्षद्वीपं पुष्करद्वीपमिति द्वीपसप्तकम्। लोकालोकाख्यं पर्वतं [6]सुधानामानं [7]शङ्खपदं

1 स्थलस्थिततर्पण—ब, द.

2 पूतः पञ्चभिर्यज्ञैरद्भिरेवाप्सु यथोत्तरं—ना, ब, द; पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरं—मु. बो.

3 वी. मि. आ., ३५६-३६०; Refer *Saṅkhasmṛti* in Anandasrama Series No. 48, pp. ३७४-३९५. The differences are very many.

4 कृत्स्नभौममिति—ज, वी. मि. आ.

5 गोमेदद्वीपं for प्लक्षद्वीपं—उ.

6 स्वधानामानं—वी. मि. आ., स्वधामानं—मु. शङ्ख. स्मृ; सुधामानं—उ.

7 शम्पदं—वी. मि. आ., शंखपदं—द, ब, ज.

केतुमन्तं हिरण्यरोमाणमिति कल्पस्थायिनो लोकपालान्। [1]लवणोदकं क्षीरोदकं घृतोदकं दध्युदकं सुरोदकमिक्षुरसोदकं स्वादूदकमिति समुद्रसप्तकं सागरचतुष्कम्। शृङ्गवन्तं श्वेतं नीलं मेरुं माल्यवन्तं गन्धमादनं निषधं हेमकूटं हिमवन्तमिति महापर्वतान्। महेन्द्रं मलयं सह्यं शुक्तिमन्तमृक्षवन्तं विन्ध्यं [2]पारिपात्रमिति [3]सप्त कुलपर्वतान्। कैलासमैनाकप्रमुखांश्च सप्तपर्वतान्। बिन्दुसरःप्रमुखानि सरांसि। सप्तप्रवाहाम् गङ्गाम्। त्रिलोकवाहिनीं गङ्गाम्। [4]सिन्धुम्। सरस्वतीम्। यमुनाम्। प्रथमपुष्करम्। द्वितीयपुष्करम्। तृतीयपुष्करम्। प्रयागम्। नैमिषम्। गयाशीर्षम्। सर्वतीर्थानि। सर्वप्रस्रवणानि। सर्वाः सरितः। इन्द्रतीर्थम्। अश्वत्थप्रमुखान् वनस्पतीन्। यवप्रमुखा ओषधीः। मानसोत्तराख्यं पर्वतम्। लोकपालान्। इन्द्रम्। शचीम्। वज्रम्। ऐरावतम्। मातलिम्। चित्रसेनप्रमुखान् गन्धर्वाप्सरसः। मुदो नामाप्सरसः। पशुनो नामाप्सरसः। [5]आयुषो नामाप्सरसः। [6]सुधा नामाप्सरसः। [7]पृष्टमो नामाप्सरसः। ऊर्जा नामाप्सरसः। अग्निसन्ताम्। स्वाहाम्। अग्नीधम्। यमम्। धर्मम्। श्रियम्। सत्यम्। तपः। संयज्ञम्[8]। दक्षिणाम्। दीक्षाम्। ब्रह्मचर्यम्। व्यव-

1 लावर्णं—ज ; लवणं—उ.
2 पारियात्रकमिति—वी. मि. आ., पारिभद्रमिति—ब, द.
3 सदा for सप्त—वी. मि. आ.
4 सप्तसरस्वतीम्—ब, द, वी. मि. आ.
5 असुरो for आयुषो—ब, द, वी. मि. आ.
6 भारा for सुधा—वी. मि. आ.
7 प्रष्टयो—उ.
8 तपःसंज्ञकम्—ना.

सायम्। धर्मराजानम्। दण्डम्। पिङ्गलम्। कालपाशौ। आयुधम्। स्वर्गम्। मृत्युम्। चित्रगुप्तम्। यमपुरुषान्। श्यावशबलौ। विरूपाक्षम्। नैर्ऋतिम्[1]। धर्मप्रधानान्। दैत्यान्। दानवान्। विद्याधरान्। यक्षान्। राक्षसान्। पिशाचान्। रोगान्[2]। ज्वरम्। रोगाधिपम्। आरोग्यम्। वरुणम्। गौरीम्[3]। नागान्। वासुकिम्। अनन्तम्। सर्पान्। वनस्पतीन्। वायुम्। शिराम्[4]। प्राणापानसमानोदानव्यानान्। इन्द्रियाणि। इन्द्रियार्थान्। जीवम्। सोमम्। नक्षत्राणि। वर्तमानं नक्षत्रम्। पितॄन्। आभास्वरम्[5]। बर्हिषदः। अग्निष्वात्तान्। क्रव्यादान्। [6]तद्रूपान्। आज्यपान्। सुकालिनः[7]। महादेवम्। पार्वतीम्। सेनानीम्। स्कन्दम्। विशाखम्। स्कन्दग्रहान्[8]। बालग्रहान्। स्कन्दपार्षदान्। रुद्रपार्षदान्। भूतानि। भौमान्। रुद्रान्। अन्तरिक्षान्। रुद्रान्। विद्यारुद्रान्। सर्वगतान् रुद्रान्। [9]मातॄः। योगेश्वरीम्। देवपत्नीः। देवमातृगणान्। धनाधिपान्। विनायकम्। [10]मितम्। संमितम्। शालकटङ्कटौ। कूष्माण्डम्। राजपुत्रान्। [11]धर्मम्। अर्थम्। कामम्। गतिम्।

1 नैर्ऋतम्—वी. मि. आ.
2 भोगान्—उ; उरगान्—ना.
3 गौरीः—वी. मि. आ.
4 शिवान्—उ; शिवाम्—ज; शिवम्—ना.
5 आभासुरं—वी. मि. आ; आभास्करं—उ.
6 तत्तद्रूपान्—वी. मि. आ; अनुभूतरूपान्—उ.
7 स्वकालिनः—ब, द.
8 स्कन्दवहान्—वी. मि. आ.
9 मातृयोगेश्वरीम्—उ, वी. मि. आ.
10 सितस्मितम्—वी. मि. आ; सितम्। स्मितम्—ब, ज, द.
11 धर्मसन्धम्—वी. मि. आ.

निद्राम्। क्षुधम्। अदितिम्। आयतिम्। नियतिम्। कीर्तिम्। प्रज्ञाम्। धृतिम्। मेधाम्। [1]आकृतिम्। रुचिम्। श्रद्धाम्। वाणीम्। सरस्वतीम्। दक्षम्। दाक्षायणीम्। प्रजापतीन्। सनकम्। सनातनम्। सनन्दनम्। सनत्कुमारम्। क्रतुम्। पितॄन्। ब्रह्मर्षीन्। देवर्षीन्। महर्षीन्[2]। राजर्षीन्। ऋषिकान्। ऋषिपत्नीः। ऋषिपुत्रान्। गायत्रीम्। उष्णिहम्। अनुष्टुभम्। बृहतीम्। [3]त्रिष्टुभम्। पङ्क्तिम्। जगतीम्। सर्वच्छन्दांसि। गरुडम्। अरुणम्। हव्यजातम्। सुरभिम्। दिङ्नागान्। उच्चैःश्रवसम्[4]। धन्वन्तरिम्। भुवननागान्[5]। दिङ्नागान्। कुलनागान्। विश्वकर्माणम्। वैश्रवणम्। ऋद्धिम्। नलकूबरम्। [6]रैवतम्। शङ्खपद्मौ। नहुषपुत्रं तत्पत्नीं तत्प्रजाम्। कश्यपं तत्पत्नीं तत्प्रजाम्। प्रजापतिं तत्पत्नीं तत्प्रजाम्। चन्द्रं तत्पत्नीं तत्प्रजाम्। अरिष्टनेमिं तत्पत्नीं तत्प्रजाम्। [7]कृशानुम्। जायाम्। अजाम्। अस्त्राणि। शस्त्राणि। शास्त्राणि। ऋग्वेदम्। यजुर्वेदम्। सामवेदम्। अथर्ववेदम्। इतिहासम्। पुराणम्। धनुर्वेदम्। गान्धर्ववेदम्। आयुर्वेदम्। फलवेदम्[8]। ज्योतिषम्। शिक्षाम्। कल्पम्। व्याकरणम्। निरुक्तम्। छन्दोविचितिम्। धर्मशास्त्राणि[9]। भारतम्। मनुम्। विष्णुम्।

1 क्षान्तिम्—वी. मि. आ., ब, द, ज.
2 महर्षीन्—omitted by वी. मि. आ.
3 त्रिष्टुभम्—omitted by वी. मि. आ.
4 वैश्रवसम्—वी. मि. आ.
5 दिव्यनागान्—वी. मि. आ.
6 रेवतम्—वी. मि. आ.
7 कृशाश्वम्—ना, द, ब, ज.
8 कुलवेदम्—वी. मि. आ., पालवेदम्—ना.
9 धर्मशास्त्रम्—वी. मि. आ.

यमम्। अङ्गिरसम्[1]। वसिष्ठम्। नारदम्। दक्षम्। संवर्तम्। शातातपम्। पराशरम्। आपस्तम्बम्। औशनसम्। कृष्णद्वैपायनम्। कात्यायनम्। बृहस्पतिम्। गौतमम्। शङ्खम्। लिखितम्। हारीतम्। अत्रिम्। याज्ञवल्क्यम्। अथ भगवन्तं धर्मम्। उत्तानपादम्। यज्ञम्। नारायणम्। नासत्यम्। वरुणार्यमणौ। संवत्सरम्। मित्रम्। इन्द्राग्नी। मरीचिकश्यपौ। ध्रुवम्। अगस्त्यम्। धातारम्। मार्तण्डम्। रामम्। वाल्मीकिम्। महाकल्पम्। कल्पम्। मन्वन्तरम्। वर्तमानमिन्द्रम्। ओजस्विनम्। स्वायंभुवम्। स्वारोचिषम्। औत्तमम्। तामसम्। रैवतम्। चाक्षुषम्। महातेजसम्। वैवस्वतम्। अर्कसावर्णिम्। ब्रह्मसावर्णिम्। रुद्रसावर्णिम्। दक्षसावर्णिम्। धर्मसावर्णिम्। रौच्यम्। भौत्यम्। युगम्। वर्तमानं संवत्सरम्। वर्तमानमयनम्। वर्तमानमृतुम्। वर्तमानं मासम्। वर्तमानं पक्षम्। वर्तमानमादित्यम्। सोमम्। कुजम्। बुधम्। जीवम्। शुक्रम्। शनैश्चरम्। राहुम्। केतुम्। ऋक्षाणि। वर्तमानं दिवसम्। रात्रिम्। संध्ये। किंपुरुषान्। सर्वाणि भूतानि। देवानुचरान्। देवानुगान्। ॐ एकज्योतिषम्। द्विज्योतिषम्। त्रिज्योतिषम्। चतुर्ज्योतिषम्। एकशक्रम्। द्विशक्रम्। त्रिशक्रम्। इन्द्रम्। आपोहशम्[2]। नभः। [3]प्रविशक्यम्। सितम्। सम्मितम्। ऋतुजितम्। सत्यजितम्। सुषेणम्। [4]सेनजितम्। अतिमित्रवन्मित्रम्। पुरुषमित्रम्। धृतम्। धर्तारम्। विधर्ता-

1 अङ्गिरसम्—omitted by वी. मि. आ.

2 गात्यादक्षम्—वी. मि. आ.

3 शङ्कपितम्—वी. मि. आ.

4 सेनजितम्—omitted by वी. मि. आ.

रम्। [1]वरुणम्। ध्रुवम्। धातारम्। विधातारम्। ईदृक्षम्। एतादृक्षम्। सदृक्षम्। प्रतिसदृक्षम्। अमृताशिनम्। प्रीतिनम्। [2]युगम्। वृक्षम्। [3]सरसमतिम्। [4]धन्वन्तरिम्। उग्रम्। धुनिम्। भीमम्। अतियुक्तम्। ऋक्षपादम्। सहम्। द्युतिम्। [5]वायुम्। अधृष्यम्। वासम्। [6]कासम्। जयम्। विजयम्। इत्येकोनपञ्चाशन्मरुतः[7] ॥ भुवनम्। भावनम्। पर्जन्यम्। स्वजन्यम्। ऋतुम्। वसुम्। मूर्धानम्। [8]वाजम्। वाजस्तवम्। प्रसवम्। आप्यायनम्। ऋक्षम्। इति द्वादश भृगून्॥ मनुम्। मन्वन्तरम्। [9]प्राणम्। अपानम्। चितिम्। छयम्। मयम्। हंसम्। नरम्। नारायणम्। विभुम्। प्रभुम्। इति द्वादश साध्यान्॥ सवितारम्। धातारम्। मित्रम्। अर्यमणम्। पूषणम्। अंशुम्[10]। त्वष्टारम्। विवस्वन्तम्। इन्द्रम्[11]। विष्णुम्। वरुणम्। भगम्। इति द्वादशादित्यान्॥ पावकम्। [पिनाकिनम्। मृगव्याधम्। सर्पम्।] सूर्यम्। [12]निर्ऋतिम्। हरम्। अजैकपादम्। अहिर्बुध्न्यम्। धूमकेतुम्। [13]कपालिनम्। इत्येकादश रुद्रान्॥ आत्मानम्। [14]अजमनम्। ऋक्षम्। दमम्।

1 धरणम्। ध्रुवम्। विधातारम्—वी. मि. आ.

2 शुगदृक्षम्—वी. मि. आ.

3 सभवमतिम्—वी. मि. आ.

4 धर्तारमुखम्। धनिर्भीमम्—वी. मि. आ.

5 वपुराधृक्षवासम्—वी. मि. आ.

6 कामम्—वी. मि. आ.

7 पञ्चाशतं मरुतः—वी. मि. आ.

8 राजम्। वास्तवम्। प्रणवम्—वी. मि. आ.

9 प्राणायामम्। चितिम्। छयम्—वी. मि. आ; प्राणम्। अपानम्। विनिहयम्—उ.

10 अंशम्—वी. मि. आ; हंसम्—ब, द.

11 मित्रम्—वी. मि. आ.

12 निकृतिम्—वी. मि. आ.

13 कलापिनम्—वी. मि. आ.

14 अजमनीम्—ज, वी. मि. आ.

सदम्। प्राणम्। हविष्मन्तम्। गरिष्ठम्। ऋतम्। सत्यम्। इति दशाङ्गिरसः॥ ऋतुम्। दक्षम्। वसुम्। सत्यम्। कालम्। कामम्। धुरिम्। रोचनम्। [1]मार्द्रवम्। पुरूरवसम्। इति दश विश्वान्देवान्॥ [2]धरम्। ध्रुवम्[3]। सोमम्। आपम्। अनलम्। अनिलम्। प्रत्यूषम्। प्रभासम्। इत्यष्टौ वसून्॥ नासत्यं दस्रमित्यश्विनौ। एतान् [4]देवगणान् सानुचरान्। स्वायंभुवम्। सावित्रीम्। सर्वान्देवान्। सतीम्। देवीम्। लक्ष्मीम्। धराम्। अनिरुद्धम्। प्रद्युम्नम्। संकर्षणम्। वासुदेवम्। भूलोकम्। भुवर्लोकम्। स्वर्लोकम्। महर्लोकम्। जनलोकम्। तपोलोकम्। सत्यलोकम्। ब्रह्माण्डम्। पृथिवीम्। अपः। वन्हिम्। वायुम्। आकाशम्। मनः। [5]शुद्धिम्। [6]आसनम्। अव्यक्तं पुरुषं तर्पयामीति। [7]इदं चान्ते प्रत्यृचं पुरुषसूक्तेनाञ्जलीन्दद्यात् पुष्पाञ्जलिं च भक्त्या। अथ कृतापसव्यो दक्षिणाभिमुखोऽन्तर्जानुः पित्र्येण तीर्थेन [8]पितॄणां यथाश्रद्धं यथाप्रकाशमुदकं दद्यात्। सौवर्णेन पात्रेण राजतेनौदुम्बरेण[9] खड्गपात्रेण वा। शङ्कुनाप्युदकं पितृतीर्थं स्पृशन्दद्यात्। पित्रे पितामहाय प्रपितामहाय [10]मात्रे पितामह्यै प्रपितामह्यै वा [मातामहाय प्रमातामहाय वृद्ध-

1 मद्रवम्—ब, द; माद्रवम्—वी. मि. आ; आर्द्रवम्—उ.
2 धवम्—वी. मि. आ.
3 अध्वरम्—ना.
4 देवगणान्—ब; नरगणान्—द, वी. मि. आ.
5 बुद्धिम्—ना.
6 आत्मानं—ज.
7 तर्पयामीत्यन्ते शब्दः प्रयुक्तः प्रत्यृचं—उ.
8 पितॄन्—ना, वी. मि. आ.
9 उदुम्बरेण—ब, द.
10 मात्रे मातामह्यै प्रमातामह्यै—ब, द.

प्रमातामहाय मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै][1] च। आ सप्तमात्पुरुषात् पितृपक्षे यावतां नाम जानीयात्। पितृपक्षाणामुदकतर्पणं कृत्वा गुरूणां कुर्यात्। गुरूणां कृत्वा मातृपक्षाणां कुर्यात्। मातृपक्षाणां कृत्वा संबन्धिबान्धवानां कुर्यात्। तेषां कृत्वा सुहृदां कुर्यात्। भवति चात्र वचनम्।

विना रूप्यसुवर्णेन विना [2]ताम्रतिलेन च।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते॥
सौवर्णराजताभ्यां तु[3] खड्गेनौदुम्बरेण वा[4]।
दत्तमक्षयतां याति पितॄणां तु तिलोदकम्॥
हिमेन सह यद्दत्तं क्षीरेण मधुनाथवा।
तदप्यक्षयतां याति पितॄणां च तिलोदकम्॥

'[5]अन्तर्जानुः' जानुनोरन्तःकृतहस्तः। अत्र च यद्यपि 'ॐ भगवन्तं शेषं तर्पयामी'ति सर्वान्ते च 'अव्यक्तं पुरुषं तर्पयामी'त्युक्तं, तथापि कालाग्निरुद्रादिष्वपि प्रत्येकं तर्पयामीति [6]संबन्धनीयम्। कर्मत्वेन क्रियापेक्षत्वात्। क्रियायाश्च तर्पयामीत्येतस्यात्रैव विद्यमानत्वात्। इदं पुरुषसूक्तेन प्रत्यृचमञ्जलिदानं[7] पुष्पदानं च 'अव्यक्तं पुरुषं तर्पयामि' इति तर्पणान्ते[8] तर्पणप्रयोगमध्य एव। 'यथाश्रद्धं' ज्ञायमा-

1 Not found in MSS. Supplied by वी. मि. आ.
2 ताम्रतिलैस्तथा—ना, ज.
3 च—ब, ज, द.
4 तु—ब, द.
5 Reproduced by वी. मि. आ., ३६०.
6 समर्थनीयम्—ब.
7 प्रत्यृचं जलाञ्जलिदानं—ब, द, ना, वी. मि. आ.
8 तर्पणान्ते कर्तव्यम्—वी. मि. आ.

नेष्वपि येषु श्रद्धा भवति । 'यथाप्रकाशं' यथानामज्ञानम् । 'शङ्कुना' कीलकेन [1]प्रस्तुतद्रव्याणामेव । 'गुरवो'ऽत्राचार्यादयः । सुवर्णरजतताम्रखड्गानां प्रत्येकशः[2] सामस्त्येन वा यथासंभवमङ्गत्वम् । क्षीरमधुहिमचन्दनानां[3] गुणफलत्वम् ॥

मरीचिः[4]

मुक्तहस्तं तु दातव्यं न मुद्रां तत्र दर्शयेत्[5] ।
वामहस्ते तिला ग्राह्या मुक्त्वा हस्तं तु दक्षिणम् ॥
देवान्पितॄंस्तर्पयेत्तु तृप्तैस्तैर्मुदितो व्रजेत् ।
अनभ्यर्च्य यदा याति तदा भवति निष्फलः ॥
राजते मनसा यायात्[6] सुवर्णे हस्तनिर्गतम् ।
तिलेषु च क्षणं गच्छेत् ताम्रे तु द्विमुहूर्ततः ॥
दर्भे सप्तमुहूर्तेन मन्त्रयुक्तं तदक्षयम् ।
यत्र यत्र हि यो यस्य तत्र तस्योपतिष्ठते ॥
बहुगोषु यथा नष्टां मातरं लभते[7] सुतः ।
मनसा यस्य यद्दत्तं तद्धि तस्योपतिष्ठते ॥

'[8]मुद्रा' तर्जन्यङ्गुष्ठसंयोगविशेषः । 'मुक्त्वा हस्तं तु दक्षिणमि'ति, दक्षिणं हस्तं तिलरहितं कुर्यात् । 'यत्र

1 प्रस्तुतसुवर्णादिद्रव्यनिर्मितेनेत्यर्थः—वी. मि. आ.
2 प्रत्येकं—ब, द.
3 चन्दनधूपानां—ज.
4 वी. मि. आ., ३४१, ३५०.
5 मुद्रां तत्र न दर्शयेत्—ब, द, ज, वी. मि. आ.
6 यान्ति—ना.
7 विन्दते—ज.
8 Quoted by वी. मि. आ., ३४१.

तत्रे'ति, 'यत्र' देशादौ, 'यः' पित्रादिः, 'यस्य' पुत्रादेः। 'तस्योपतिष्ठते' तद्गामी भवति। 'मनसा दत्तं' मनसा क्लृप्तम् ॥

पैठीनसिः

पवित्रैरभ्युक्ष्य वसुभ्यो ब्रह्मणे वैश्रवणायेत्युदकं निनयेत्। [1]उदीरतामिति त्रिभिर्मन्त्रैस्त्रीनुदकाञ्जलीन्निनयेत्। पितृबन्धुभ्यो नाम गृह्णन्। आचार्याय मात्रे मातामहाय मातुलेभ्यश्च ॥

[2]यमः

सपिण्डानां च बन्धूनां कृत्वादावुदकक्रियाम्।
सुहृत्संबन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् ॥

[3]तथा

दत्वा जलाञ्जलीन् सप्त कृष्णपक्षे चतुर्दशीम्।
[4]धर्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते ॥
अनर्काभ्युदिते काले कृष्णपक्षे चतुर्दशीम्[5]।
स्नातः संतर्प्य [6]तु यमं सर्वपापैः प्रमुच्यते ॥
यत्र क्वचन नद्यां हि स्नात्वा कृष्णचतुर्दशीम्।
संतर्प्य धर्मराजानं मुच्यते सर्वकिल्बिषैः ॥

1 ऋ. सं., १०. १५. १; वाज. सं., १९. ४९; तै. सं., २. ६. १२. ३.
2 वी. मि. आ., ३५०.
3 तथा—omitted by उ, ज.
4 संतर्प्य धर्मराजानं मुच्यते सर्वकिल्बिषात्—ब, द.
5 त्रयोदशीम्—ना.
6 च—ब, द.

[1]मनुशातातपयोगियाज्ञवल्क्याः

य एवं तर्पयत्यद्भिः पितॄन्स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥

[2]शङ्खः

स्नातः संतर्पणं कृत्वा पितॄणां तु तिलाम्भसा ।
पितृयज्ञमवाप्नोति प्रीणाति च तथा पितॄन् ॥

[3]हारीतः

न स्रवन्तीं वृथातिक्रामेत् । एवं ह्याह ।
देवाश्च पितरश्चैव काङ्क्षन्ति सरितं प्रति ।
अदत्ते तु निराशास्ते प्रतियान्ति यथागतम् ॥

अत्र पितृगाथासु यमः[4]

अपि नः स कुले भूयाद्यो नो[5] दद्याज्जलाञ्जलिम् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥

तथैव विष्णुः

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥

उशना

न वेष्टितशिराः कृष्णकाषायवाससा देवपितृकार्यं कुर्यात् ॥

1 मनुः, ३, २८३ ; वी. मि आ., ३७५.
2 वी. मि. आ., ३७५.
3 वी. मि. आ., ३७५–३७६.
4 वी. मि. आ., ३७६.
5 नो—ब, द, ज, ना, वी. मि. आ. ; हि—उ.

[1]योगियाज्ञवल्क्यः

[2]वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले ॥
पूर्वं निष्पीडनं केचित् प्राग्देवपितृतर्पणात् ।
स्नानवस्त्रस्य नेच्छन्ति तस्मादूर्ध्वं निपीडयेत् ॥
[3]अन्नप्रकरवत्तस्य चापसव्येन पीडनम् ।
पीडयित्वा ततः पश्चाज्जपं कुर्यात्सुविस्तरम् ॥

'[4]उच्छिष्टभागिनः'—

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥

इति [5]मनूक्ताः । तेनैतान् [6]बुद्धिस्थीकृत्य वस्त्रनिष्पीडनोदकं दातव्यम् । 'पूर्वे' आचार्याः । 'अन्नप्रकरः' श्राद्धे विकिरदानम् । 'सुविस्तरजप'श्च, "आचान्तः पुनराचामेद्[7]" इत्यादियोगियाज्ञवल्क्याद्युक्तपवित्रवर्गस्य जपेतिकर्तव्यतासहितस्य बोद्धव्यः ॥

[8]तथा

निपीड्य स्नानवस्त्रं तु आचम्य प्रयतः शुचिः ।

1 वी. मि. आ., ३७६.
2 वस्त्रनिष्पीडनं तोयं—ना, वी. मि. आ.
3 अत्र प्रकरणात्तस्य—वी. मि. आ.
4 Reproduced by वी. मि. आ., ३७६.
5 मनुः, ३, २४५–२४६.
6 बुध्या स्थिरीकृत्य—ज.
7 See *infra* pages ८९–९०.
8 वी. मि. आ., ३७७.

देवानामर्चनं कुर्याद्ब्रह्मादीनाममत्सरः ॥
ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणैः ।
तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वान्देवान्समाहितः ॥
ध्यात्वा प्रणवपूर्वं तु [1]दैवतं तु समाहितः ।
नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक् ॥
आवाहनादिकं कर्म यत्तु नोक्तं मया त्विह ।
तत्सर्वं प्रणवेनैव कर्तव्यं चक्रपाणिनः ॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥
सावित्र्या दद्याद्धूपादि यथाशक्ति समाहितः ।
एवं संपूज्य देवेशं [2]कृष्णं ध्यात्वा निरञ्जनम् ॥
ततोऽवलोकयेदर्कं [3]हंसः शुचिषदित्यृचा ।
स याति ब्रह्मणः सद्म स्नात्वेक्षेतानया तु यः ॥
[4]अदृश्रमस्येति मन्त्रैरुपस्थाय दिवाकरम् ।
[5]संवर्चसेति पाणिभ्यां तोयेन विमृजेन्मुखम् ॥
[6]स्वयंभूरित्युपस्थाय [7]सूर्यस्येति प्रदक्षिणम् ।
आवृत्य तु नमस्कुर्याद्दिशो दिग्देवता अपि ॥
ब्रह्मणेऽग्नये पृथिव्यै चौषधिभ्यस्तथैव च ।

1 देवतां—ना, द.
2 क्षणं—ब, ना, द.
3 ऋ. सं., ४. ४०. ५ ; तै. सं., १. ८. १५. २. etc.
4 ऋ. सं., १. ५०. ३ ; वाज. सं., ८. ४०.
5 वाज. सं., २. २४ ; ८. १४ ; तै. सं., १. ४. ४४. १.
6 वाज. सं., २. २६.
7 वाज. सं., २. २६, २७ ; कठ. सं., ५. ५ ; ३२. ५.

वाचे च वाचस्पतये विष्णवे महते तथा ॥
एताभ्यो देवताभ्यश्च नमस्कारादि वै जलम् ।
दत्वा नमस्येत्क्रमशस्त्वन्तै वै सर्वकर्मणाम् ॥
नमोऽद्भ्यो नमोऽप्पतये वरुणाय नमो नमः ।
इत्युक्त्वाऽपो नमस्कृत्यावनौ देवांश्च नामवत् ॥
[1]इदमापः प्रवहता [2]धाम्नो धाम्नस्तथैव च ।
विमोचनं तु[3] तीर्थस्य [4]आप्यायस्वेति वै जपेत् ॥
[5]देवा गातु विद इति कृत्वा जप्यनिवेदनम् ।
प्रक्षाल्य [6]तीर्थदेशं तु गत्वा स्वं धर्ममाचरेत् ॥

ब्रह्मविष्णुरुद्रा एकैकेन तल्लिङ्गेन मन्त्रेणार्चनीयाः। सविता तु त्रिभिः, 'सावित्रै'रिति [7]चोपादेयगतबहुत्व-संख्यानिर्देशात्। [8]तस्य च त्रिष्वेव चरितार्थत्वात्। मित्रा-वरुणस्य त्रिभिस्त्रिभिरेव, अत्रापि बहुवचननिर्देशात्। 'तल्लिङ्गैः' तद्ब्रह्मादिदेवताप्रकाशनसमर्थैः। 'ध्यात्वा प्रण-वम्' इत्यादिना तु तेषामेव पूजाप्रकारोऽभिहितः। विष्णु-पूजायामावाहनादिः ॐकारेण, पुरुषसूक्तेन च पुष्पदानमुद-कदानं वा। 'धूपादी'त्यादिशब्देन दीपनैवेद्यवाद्यानामभि-धानम्। 'निरञ्जनं' निष्प्रपञ्चं परं ब्रह्म। 'दिशः' प्राच्या-दिकाः। 'दिग्देवताः' इन्द्राद्याः[9]। 'अवनौ' भूमौ। 'देवान्'

1 ऋ. सं., १. २३. २२ etc; वाज. सं., ६. १७.
2 वाज. सं., ६. २२; तै. सं., १. ३. ११. १.
3 च—ब, पु, द.
4 वाज. सं., १२. ११२; तै. सं., ३. २. ५. ३; ४. २. ७. ४.
5 वाज. सं., २. २१; तै. सं., १. १. १३. ३.
6 तीरदेशं तु—ना.
7 च पदोपगतबहुत्वसंख्यानिर्देशात्—ना; उपादेयगतबहुत्वनिर्देशात्—ब, ज, द.
8 'तस्य च' इत्यारभ्य 'बहुवचननिर्देशात्' इत्येतत्पर्यन्तो भागः नास्ति—उ.
9 इन्द्रादयः—ब, द.

नमस्कृत्य । 'जप्यनिवेदनं' अनेन जप्येन परमात्मा प्रीयता-मित्येवंरूपम् । 'स्वं धर्मं' स्ववर्णाश्रमविहितम् ॥

[1]तथा

स्रवन्त्यादिष्वथाचम्य सोपानत्को ह्यसंस्पृशन् ।
आगतः सोदपात्रस्तु यत्नेन शुचिरेव सः ॥
तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहम् ।
ततः कर्माणि कुर्वीत नित्यं वै यानि कानि च ॥
पात्रादिरहितं तोयमुद्धृतं सव्यपाणिना ।
न तेन प्रोक्षणं कुर्याद्वस्त्रनिष्पीडनेन च ॥
सौवर्णं राजतं ताम्रं मुख्यं[2] पात्रं प्रकीर्तितम् ।
तदलाभे स्मृतं पात्रं स्रवते यन्न धारितम् ॥

'असंस्पृशन्' अशुच्यादीनिति शेषः । 'प्रोक्षणं' गृहस्थितपुष्पनैवेद्यादिद्रव्याणाम् । 'यन्न धारितम्' इति नारिकेलादिपात्रमुपात्तम् ॥

[3]शातातपः

बहिर्नद्यादिष्वाचान्तः सोदकः किंचिदस्पृशन् ।
रथ्यागतोऽपि यत्नेन [4]शुचिरेवेह मानवः ॥
यत्पात्ररहितं तोयं[5] धृतं सव्येन पाणिना ।
न तेन प्रोक्षयेद्द्रव्यं वस्त्रनिष्पीडनेन वा[6] ॥

1 वी. मि. आ., ३७९.
2 पुण्यं—ना.
3 वी. मि. आ., ३७९–३८०.
4 शुचिरेव हि—ज, ना.
5 तोयमुद्धृतं सव्यपाणिना—ना.
6 ने तथा—ना.

नाधोवस्त्रैकदेशेन शुध्यर्थमप आहरेत् ।
यच्चानीतं तु सव्येन प्रोक्षयेद्दक्षिणेन तु[1] ॥

'अस्पृशन् यत्नेने'ति संबन्धः । 'द्रव्यं' गृहस्थितं पुष्पोपहारादि । 'नाधोवस्त्रैकदेशेन' इतरजलपात्रस्यासंभवेऽपि नाधोवस्त्रानीतेन जलेन प्रोक्षयेदित्यर्थः ॥

तर्पणानन्तरं [2]विष्णुपुराणे—[३, ११, ३९–४१]

आचम्य च ततो दद्यात् सूर्याय सलिलाञ्जलिम् ।
नमो विवस्वते ब्रह्मन्भास्वते विष्णुतेजसे ॥
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ।
ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम् ॥
जलाभिषेकपुष्पाणां धूपादीनां निवेदनैः ।

[3]पद्मपुराणे—[सृष्टिखण्डम्, २०, १७०–१७७]

आचम्य विधिवत्सम्यगालिखेत्पद्ममग्रतः ।
[4]अक्षताभिः सपुष्पाभिः सतिलारुणचन्दनैः ॥
अर्घ्यपाद्ये प्रयत्नेन सूर्यनामानुकीर्तनैः ।
नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ॥
सहस्ररश्मये नित्यं नमस्ते सर्वतेजसे ।
नमस्ते रुद्रवपुषे[5] नमस्ते भक्तवत्सल ॥
पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषित ।
नमस्ते सर्वलोकेश सुप्तानामपि बुध्यसे ॥

1 च—ब, द.
2 वी. मि. आ., ३७७.
3 वी. मि. आ., ३७८.
4 अक्षताद्भिः—ब, ज, द.
5 रुद्ररूपाय—ज.

सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वदा ।
सत्यदेव[1] नमस्तेऽस्तु प्रसीद मम भास्कर ॥
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते ।
एवं सूर्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम् ॥
द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत् ।
आश्रयस्थं ततः पूज्य प्रतिमां चापि पूजयेत् ॥

ब्रह्मयज्ञानन्तरम्—

[2]नरसिंहपुराणे—[५८, ९१-९३]

ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पजलान्वितम् ।
उत्थाय मूर्धपर्यन्तं [3]हंसः शुचिषदित्यृचा ॥
जलदेवं नमस्कृत्य ततो गृहगतः पुनः ।
विधिना पुरुषसूक्तस्य तत्र विष्णुं समर्चयेत् ॥
[4]वैश्वदेवं ततः कुर्याद्बलिकर्म यथाविधि ।

'पुरुषसूक्तविधि'श्च पुराणान्तरादवगन्तव्यः[5] पूजाप्रकरणे ॥

[6]इति भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्डे[7] तर्पणपर्व ॥

1 सर्वदेव—ब, द.
2 वी. मि. आ., ३७९.
3 ऋ. सं., ४. ४०. ५; तै. सं., १. ८. १५. २. etc.
4 वैश्वदेवं प्रकुर्वीत बलिकर्म—ज.
5 दधिगन्तव्यः—ना.
6 इति कृत्यकल्पतरौ नियतकालकृत्यकाण्डे तर्पणपर्व—द.
7 नियतकालकृत्यकाण्डे—उ, द, ब.

॥ ५ ॥

# वैश्वदेवादिपञ्चयज्ञविधिः

[1]अथ दक्षः—[२, ५६]

पञ्चमे च तथा भागे संविभागो यथार्हतः ।
देवपितृमनुष्याणां [2]कीटानां चोपदिश्यते ॥

'यथार्हतः' यथायोग्यम्[3] ॥

[4]व्यासः

वैवाहिकेऽग्नौ कुर्वीत पाकयज्ञानशेषतः ।
आपद्यपि हि कष्टायां पञ्चयज्ञान्न हापयेत् ॥
स्वर्गापवर्गयोः प्राप्तिं महायज्ञैः प्रचक्षते ।

'वैवाहिकोऽग्निः' आवसथ्यः ॥

गौतमः[5]—[५, ३-६]

देवपितृमनुष्यभूतर्षिपूजकः । नित्यस्वाध्यायः । पितृभ्यश्चोदकदानम् । यथोत्साहमन्यत् ॥

1 वी. मि. आ., ३८७.
2 भूतानां—ब, द.
3 यथालोकं—ब, द.
4 वी. मि. आ., ३८८.
5 वी. मि. आ., ३८८-३८९.

'[1]मनुष्यपूजा' अतिथिपूजा। 'ऋषिपूजा' स्वाध्यायाध्ययनम्। ऋषियज्ञपितृयज्ञयोः पूर्वमभिहितयोरपि 'नित्यस्वाध्याय' इत्यादिना पुनरभिधानमितरयज्ञत्रयानुष्ठानासंपत्तावपि किंचिदङ्गवैकल्येनोदकद्रव्येणाप्यादरेणावश्यानुष्ठेयत्वार्थम्। एतदेवोक्तं 'यथोत्साहमन्यद्' इत्यनेन ॥

[2]शङ्खलिखितौ

शेषभुक् महापश्चयज्ञानहरहर्निर्वपेदापन्नशाकोदकेभ्यः॥

उद्वाहानन्तरं संवर्तः[3]

ततो पश्चमहायज्ञान् कुर्यादहरहर्द्विजः।
न हापयेत्तु तान्प्राज्ञः श्रूयन्ते हि श्रुतावपि ॥

अथ तथैव देवलः[4]

तदनन्तरमग्नीनादधीत। गृहीताग्निहोत्रो देवपितृऋष्यतिथ्यभ्यागतभृत्यात्मपूजनं सुचरित्रानुष्ठानं च कुर्वीत[5]। अत्र कव्यहव्यस्वाध्यायैर्देवपितृऋषीन् पृथक् पृथक् पूजयेत्। स्वाहेत्यग्निहोत्रप्रवृत्ति हव्यं तद्देवान् प्रसादयति[6]। स्वधेति पैतृकप्रवृत्ति कव्यं तत्पितॄन्प्रीणयति[7]। ॐइत्यध्ययनप्रवृत्तिः स्वाध्यायः स मुनींस्तोषयति ॥

1 Quoted by वी. मि. आ., ३८९.
2 वी. मि. आ., ३८८.
3 वी. मि. आ., ३८८.
4 वी. मि. आ., ३८८.
5 कुर्यात्—ब, ज, द.
6 प्रसादयेत्—ब, द.
7 प्रीणाति—ज.

'[1]अभ्यागतो' अतिथिरन्योऽपि प्राघुणकः। 'सुचरित्रं' सदाचारः। 'अग्निहोत्रप्रवृत्ति' अग्निहोत्रे प्रवृत्तिर्यस्य। [2]'अग्निहोत्र'शब्दोऽत्राग्निमात्रहोमपरः॥

[3]जाबालिः

अहन्यहनि कर्तव्यं पितृदैवतपूजनम्।
हन्तेति हन्तकारं च मनुष्येभ्यो हि[4] पावनम्॥

[5]मनुः—[३, ६८–६९]

पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च बध्यन्ते यास्तु वाहयन्॥
आसां[6] क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्॥

'सूना' प्राणिवधस्थानम्। 'उपस्करः' गृहोपकरणभाण्डकुण्डादिः॥

हारीतः[7]

अथ सूना व्याख्यास्यामः। जङ्गमस्थावरादीन् प्राणिनः सूदयन्तीति सूनाः। एताः पञ्चविधा भवन्ति। द्रुतावतरणावगाहनविक्षोभणविक्षेपणापूतग्रहणयानादिभिराद्यां कुर्वन्ति। अवेलाविस्पष्टद्रुतगमनाक्रमणादिभिर्द्वितीयाम्। आह-

1 Reproduced by वी. मि. आ., ३८८.
2 Quoted by वी. मि. आ., ३८८.
3 वी. मि. आ., ३८८.
4 मनुष्येभ्योऽपि—ब, द, वी. मि. आ.
5 वी. मि. आ., ३८९.
6 तासां—ब, ज, ना, द.
7 वी. मि. आ., ३८९–३९०.

ननग्रहणबन्धनच्छेदन[1]भेदनकुट्टनोत्पाटनादिभिस्तृतीयाम् । आक्रमणघर्षणपेषणादिभिश्चतुर्थीम् । आदीपनतापनस्वेदन-भर्जनपचनादिभिः पञ्चमीम् । तदेताः पञ्चसूना निरययोनी-रहरहः प्रजाः कुर्वन्ति । अग्निगुरुशुश्रूषास्वाध्यायैरादितः सूनात्रयं ब्रह्मचारिणः पावयन्ति । पञ्च पञ्चभिः पाकयज्ञै-र्गृहस्थवानप्रस्थाः पावयन्ति । पवित्रज्ञानध्यानैर्भिक्षवः सूनाद्वयं पावयन्ति । [2]अनिष्क्रिया [3]दन्तसूनायाम् ॥

'[4]सूदयन्ति' प्राणैर्वियोजयन्ति । 'द्रुतावतरणं' शीघ्रं जलप्रवेशनम् । 'विक्षोभणम्' आलोडनम् । 'विक्षेपणम्' इतस्ततो जलप्रक्षेपः । 'अपूत'ग्रहणं वस्त्रादिनां कृमिकी-टादिनिवारणमकृत्वा जलग्रहणम् । 'आद्यां' प्रथमाम् । 'अवेलागमनम्' अन्धकारादौ गमनम् । 'अविस्पष्टः' उन्मार्गादिः । 'द्रुतं' शीघ्रम् । 'आक्रमणं' पादादिनाधि-ष्ठानम् । 'आक्रमणं' सस्यादीनां बलीवर्दादिना । 'आदीपनं' काष्ठादीनाम् । 'तापनं' तोयादेः । 'स्वेदनम्' उत्सेदनं धान्यादेः । 'भर्जनं' यवादीनाम् । 'पचनं' तण्डुलादीनाम् । भिक्षूणां सूनाद्वयमाद्यम्, वृक्षादिच्छेदनादीनामसंभवात् । 'अनिष्क्रिया' इति, अनन्तरोक्तपञ्चयज्ञानुष्ठाने दन्तसूना-जनितदुरितस्य न निष्क्रिया इत्युक्तम् । 'दन्तसूना' दन्तै-श्चर्वणे क्रियमाणे या भवति ॥

1 छेदनभेदन—omitted by वी. मि. आ. ; भेदन—omitted by ब, ज, द.

2 अनिष्क्रयो—उ, ना, द ; अनिर्जयो—वी. मि. आ.

3 दन्तसूनाया:—वी. मि. आ.

4 Reproduced by वी. मि. आ., ३८९–३९०.

[1]छन्दोगपरिशिष्टे कात्यायनः[2] [२, २५—२९]

पञ्चानामथ सत्राणां महतामुच्यते विधिः ।
यैरिष्ट्वा सततं विप्रः प्राप्नुयात्सद्म शाश्वतम् ॥
देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् ।
महासत्राणि जानीयात्त एवेह महामखाः ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा ।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते ॥
स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यत्र तु निमित्तकात् ॥

तर्पणश्राद्धपितृयज्ञबलिदानानां पितृयज्ञत्वं यथासंभवमधिकारिभेदेन व्यवस्थितं न पुनस्तुल्यविकल्पः। निमित्तमेव निमित्तकमिति 'निमित्तकाद्' अन्तरोक्ताद्ब्रह्मयज्ञकालत्रयादन्यत्र ब्रह्मयज्ञं न कुर्यादित्यर्थः ॥

[3]मनुर्यमविष्णुदेवलाश्च तृतीये[4]

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।

1 इतः प्रभृति 'पञ्चपाकयज्ञाः' इत्येतत्पर्यन्तो भागो नास्ति—ब.
2 वी. मि. आ., ३९०–३९१.
3 मनुः, ३, ७०–७५.
4 वी. मि. आ., ३९२.

न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥
अहुतं च हुतं चैव तथा प्रहुतमेव च ।
ब्राह्मं हुतं प्राशितं च पञ्चयज्ञान् प्रचक्षते ॥
जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः ।
ब्राह्मं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥

हारीतः

हुतो निर्वापोऽहुतः प्रहुतः प्राशित इति पञ्च पाकयज्ञाः । हुतं देवानाम् । पिण्डनिर्वापः पितृणाम् । वास्तुपालभूतेभ्यो बलिहरणमहुतम् । यदुद्धृत्यान्नं ब्राह्मणाय ददाति सः प्रहुतः । [1]यच्छिष्टं प्राश्नाति स यजमानभागस्तस्यैतदाहुः प्राशितमिति । [2]तदेतदृचोक्तम् ।

सायंप्रातरुपक्लृप्तं प्रजानां
यो निर्यात्यामृतमनृणोऽस्ति[3] विद्वान् ।
भागं देवेभ्योऽप्रदायोपक्लृप्तमन्धः पापीयानश्नुते अप्रचेताः ॥

इति । तस्मादहरहर्जुहुयात् । अन्नाभावे केनचिदाकाष्ठात् । देवेभ्यश्चापो निसर्गात् । पितृभ्यश्चापो निवापात् । भूतेभ्यश्चापो निसर्गात् । मनुष्येभ्यश्चोदपात्राणि । प्रत्यहं देवताः । तिथिविशेषाद्वा ॥

[4]निर्वापोऽस्मिन्नस्तीति 'निर्वापः' । 'तदेतदि'ति, तदेतदावश्यकत्वमृचा प्रतिपादितं 'सायंप्रात'रित्यादिकया । तस्या-

1 यदुच्छिष्टं प्रा—ना.
2 तदेव श्लोकं—ज; तदप्येतदृचोक्तं—उ.
3 हि—ज.
4 निवापोऽस्मिन्नस्तीति—ब, द.

श्राप्यर्थः—'सायंप्रातः' पाकाग्रेण पाकयज्ञं पञ्चलक्षणं यत्कर्म 'प्रजानां निर्यात्य' देवादिऋणापाकरणार्थं प्रदाय यो भुङ्क्ते स देवादीनामनृणः सन् अमृतमिवात्ति । 'विद्वान्' ज्ञानी । यस्तु 'उपक्लृप्तं भागं देवेभ्यो अप्रदाय भुङ्क्ते' 'अप्रचेताः' अज्ञः सः 'अन्धः' पाप एव । 'निवापः' पितुरुद्देशेन ब्राह्मणाय शुष्कान्नफलमूलानामुदकान्तानां दानम् । 'प्रत्यहं देवताः' पूजनीया इति शेषः । पुनर्वचनाद्विश्वेदेवदेवताभ्य अन्या एता देवताः । यथा वक्ष्यति हारीतः "अग्न्यादयो देवा दिविष्ठा" इत्यादि । 'तिथिविशेषाद्वा' पाराशराद्युक्तप्रतिपदादितिथिषु ब्रह्मादिदेवपूजा कर्तव्या ॥

[1]जाबालिः

स्नात्वा महामखानां तु प्रथमं तर्पणं [2]स्मृतम् ।
दिव्यो होमस्तु सावित्र्या भौतस्तु बलिकर्मणा ॥
ब्राह्मो वेदजपेनैव नृयज्ञोऽतिथिपूजनम् ।
अयाचिताहृतैर्द्रव्यैराचान्ते पूर्णदक्षिणम् ॥

'महामखानाम्' इति निर्धारणे षष्ठी । 'सावित्र्या' यो 'होमः' स 'दिव्यो' यज्ञः । अयं च सावित्र्या होमेन दिव्ययज्ञः शाखाविशेषे व्यवस्थितः । 'अयाचिताहृतै'रिति विहितवृत्त्युपार्जितोपलक्षणम् । 'पूर्णदक्षिणं' पूर्णा दक्षिणा यत्र पूजने तत्तथा ॥

[3]मनुः—[३, ८०–८१]

ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।

1 वी. मि. आ., ३९२.
2 मतम्—ना.
3 वी. मि. आ., ३९२.

आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ॥
[1]स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान्यथाविधि ।
पितॄन् श्राद्धेन नॄनन्नैर्भूतानि बलिकर्मणा ॥

[2]हारीतः

यद्देवेभ्यो जुहोति देवलोकं तेन जयति[3] । यत्पितृभ्यः पितृलोकं तेन । यत्स्वाध्यायमधीते ऋषिलोकं तेन । यद्भूतेभ्यो बलिं हरति भूतलोकं तेन । तस्माद्देवपितृऋषिभूतेभ्यो हुत्वोदीक्षेतागोदोहनात् ॥

पुनर्हारीतः[4]

देवार्थे च पितॄणां च ब्राह्मणार्थे च नित्यशः ।
स्वं चिन्वतां स्ववृत्तेषु यो नः क्लेशः स नस्तपः ॥
देवान् पितॄन् ऋषींश्चैव भूतानि ब्राह्मणांस्तथा ।
तर्पयन्विधिना विप्रो ब्रह्मभूयाय कल्पते ॥
सोऽयं ब्रह्मपथः श्रीमान् पुरा प्रोक्तः स्वयंभुवा ।
वर्तयन्विधिना विप्रो ब्रह्मभूयाय कल्पते ॥

'स्वं' धनम् । 'चिन्वतां' संचयनं कुर्वताम् । 'स्ववृत्तेषु' प्रतिग्रहादिषु ॥

मनुः—[३, ७५–७६]

स्वाध्याये नित्ययुक्तः स्याद्दैवे पित्र्ये च कर्मणि ।
दैवे कर्मणि युक्तो हि बिभर्तीदं चराचरैः ॥

1 स्वाध्यायेनार्चयेदृषीन्—उ, वी. मि. आ.
2 गृहस्थरत्नाकरः, (गृ. र.) २७४.
3 तेनाभिजयति—ब, ज, द.
4 तथा for पुनर्हारीतः—ना.

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

[1]शातातपः

लौकिके वैदिके वापि हुतोत्सृष्टे जले क्षितौ ।
वैश्वदेवस्तु कर्तव्यः पञ्चसूनापनुत्तये ॥
वैश्वदेवेन ये हीना आतिथ्येन विवर्जिताः ।
सर्वे ते वृषला ज्ञेयाः प्राप्तवेदा अपि द्विजाः ॥

'लौकिके' पाकसाधने । 'वैदिके' आवसथ्ये । 'हुतोत्सृष्टे' अन्येन होमं कृत्वा त्यक्ते । '[2]हुतोन्मृष्टे' इति पाठे त्वाहुत्योन्मृज्येत्यर्थः । अनन्तरोक्ताग्नित्रयासंभवे जलम् । तदसंभवे भूः[3] ॥

[4]छन्दोगपरिशिष्टे कात्यायनः—[२, ३४]

सायंप्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च ।
अनश्नतापि सततमन्यथा किल्बिषी भवेत् ॥

[5]तथा—[२, ४७–४८]

अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव वा ।
अनाहिताग्नेरप्येष युज्यते बलिभिः सह ॥

'अग्न्यादिः' "अग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः

1 वी. मि. आ., ३९३.
2 इदं वाक्यं नास्ति—उ, ना.
3 भूमिः—ब, द ; क्षितौ—ज.
4 वी. मि. आ., ३९५ and ४१२.
5 वी. मि. आ., ४११.

स्विष्टकृद्" इति [1]गौतमोक्तः। 'शाकल'श्च [2]'देवकृतस्यैनसोऽवयजनमसि' इत्यादिः। अयं च ज्योतिष्टोमे। आहवनीये 'षट् षट् शकलान्यभ्यादधीत' इत्यादिना विहितकाष्ठशकलसाध्यात्वाच्छाकलहोम इत्युच्यते। 'अनाहिताग्नेः' श्रौतस्मार्ताग्निरहितस्य ॥

[3]अङ्गिराः

शालाग्नौ विपचेदन्नं लौकिके वापि नित्यशः।
यस्मिन्नेव पचेदन्नं तस्मिन्होमो विधीयते ॥

'शालाग्निः' आवसथ्यः ॥

मनुः—[४, २१]

ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा।
नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥

'यथाशक्ति' पक्वान्नासंभवे फलमूलादिनापि।

"पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनः[4]।"

[5]इत्यनेनावश्यकर्तव्यत्वेन पूर्वं प्रतिपन्नानां पुनर्वचनं स्नातकव्रतत्वज्ञापनार्थं वक्ष्यमाणोपयोगार्थं च ॥

तथा—[४, २२–२४]

एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः।
अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥
वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा।

1 गौतमः, ५, ११.
2 तै. सं., ३. २. ५. ७.
3 वी. मि. आ., ३९३.
4 मनुः, ३, ६९.
5 इत्यनेन कर्तव्यत्वेन—ब, द; इत्यनेनावश्यके कर्तव्यत्वे—उ; इत्यनेनावश्यकर्तव्यत्वेन—ना.

वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम् ॥
ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा ।
ज्ञानमूलां [1]क्रियां तेषां पश्यन्तो ज्ञानचक्षुषा ॥

'यज्ञशास्त्रविदः' सोपनिषत्कवेदार्थविदः । 'अनीहमानाः' बाह्ययज्ञोपकरणार्थमचेष्टमानाः । 'सततं जुह्वती'-त्यन्वयः । इन्द्रियाणां यज्ञानां च होम्यत्वानुपपत्तेः सामर्थ्याद्बुद्धीन्द्रियाणां रूपाद्यभिमुखाः पञ्च वृत्तयः प्रत्याहारद्वारेण होम्यास्तन्निरोधद्वारेण पञ्चनिर्वृत्तिं साधयन्तीत्यर्थः । 'एके' स्वाध्यायपराः सन्तः वाग्वृत्त्यनुगुणां प्राणवृत्तिं कुर्वन्ति । 'प्राणे वाचं' प्राणायामपराः प्राणवृत्त्यनुगुणां वाचं कुर्वन्ति । अथवा सर्वदा शब्दोच्चारणे प्राणक्रियायां च यज्ञनिर्वृत्तिं कुर्वन्ति । 'वाचि प्राणे च यज्ञनिर्वृत्तिं' शास्त्रतः पश्यन्तः । 'अक्षयां' फलद्वारेण । तथा च श्रुतिः—"[2]यावद्वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति । यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति वाचं तदा प्राणे जुहोति । एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति"इति । 'ज्ञानेन' परमात्मज्ञानेन वैश्वानराद्यालम्भनेन वा 'यजन्ते' । 'एतैः' उक्तलक्षणैः । 'एषां' यज्ञानाम् । 'ज्ञानमूलां' ज्ञानप्रधानाम् । 'क्रियाम्' अनुष्ठानम् । 'पश्यन्तः' उपनिषद्ज्ञानचक्षुषा । एतदुक्तं भवति—अधिकृतैर्बाह्यसाधनपञ्चयज्ञानुष्ठानासंभव एतैः प्राणायामादिभिरपि स्नातकव्रतलोपनिमित्तदोषनिवृत्त्यर्थं पञ्चयज्ञसंपत्तिः कर्तव्या ॥

1 क्रियामेषां—ना.
2 कौषीतक्युपनिषत्, २. ४.

[1]शङ्खलिखितौ

अत ऊर्ध्वं देवयज्ञः सर्वेषामुपदिश्यते ।

आश्रमधर्माविरोधेन प्रतिनियतानामोषधीनां कोद्रवचणकमाषमसूरोद्दालककुलत्थवर्ज्यं निर्वपणीयम् । तण्डुलान्वा प्रातः पत्न्यै दद्यात् स्वयं वाधिश्रयेत् । सुसंमृष्टगृहद्वारोपलेपनधूपजप्यप्रयतो नियतः सायंप्रातरन्नादावश्यकानि कुर्यात् । अग्नये जातवेदसे स्वाहेत्यग्नौ । तूष्णीं द्वितीयाम् । [2]उदु त्यं जातवेदसमित्यादित्यमुपतिष्ठेत ॥

'[3]आश्रमधर्माविरोधेने'ति, वानप्रस्थार्थम् । तेन वानप्रस्थेन स्वाश्रमविहिताफालकृष्टनीवाराद्यन्नेन देवयज्ञादि 'निर्वपणीयं' निर्वर्तनीयम् । 'पत्न्यै दद्याद्' अधिश्रयणार्थमिति शेषः । 'स्वयं वे'ति पत्नीकर्तृकपाकासंभवविषयम् । 'सुसंमृष्टे'ति, सुसंमृष्टयोर्गृहद्वारयोः 'उपलेपने', देवतार्थं 'धूपे', पवित्राणां 'जपे', 'प्रयतः' शुचिः । 'नियतो' नियमवान् । 'अन्नाद्' अदनीयात् । 'आवश्यकानि' देवयज्ञादीनि । 'अग्नौ' जुहुयादिति शेषः । 'द्वितीयाम्' आहुतिमिति शेषः ॥

[4]आपस्तम्बः—[२, ३, १–१७]

आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः । भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् । केशानङ्गं वासश्चालभ्याप

1 वी. मि. आ., ३९४ and ४०४.
2 ऋ. सं., १. ५०. १ ; तै. सं., १. २. ८. २. etc.
3 Reproduced by वी. मि. आ., ३९४–४०४.
4 वी. मि. आ., ४२५.

उपस्पृशेत्। आर्याधिष्ठिता वा शूद्रा अन्नसंस्कर्तारः स्युः[1]। तेषां स एवाचमनकल्पः। अधिकमहरहः केशश्मश्रुनखलोमवापनम्। उदकोपस्पर्शनं च सह वाससा। अपि चाष्टमीष्वेव पर्वसु वा वपेरन्। परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्। तद्देवपवित्रमित्याचक्षते। सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात्। तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः। गृहमेधिनो यदशनीयं तस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः। तेषां मन्त्राणामुपयोगे द्वादशाहमधःशय्या ब्रह्मचर्यं क्षारलवणवर्जनं च। उत्तमस्यैकरात्रमुपवासः। बलीनां तस्य देशस्य संस्कारो हस्तेन [2]परिमृज्याभ्युक्ष्य न्युप्य पश्चात्परिषेचनम्। औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात्। उभयतः परिषेचनं यथा पुरस्तात्॥

'आर्याः' साधवोऽत्र द्विजातयः। 'प्रयताः' शुचयः। '[3]वैश्वदेवे' वैश्वदेवकर्मणि। 'क्षवथुः' हिक्का। 'केशान्' इति, केशानां प्रयतानां स्पर्शे अप उपस्पृशेदिति विधिः। 'अधिष्ठिताः' अवेक्षिताः। 'स एव' आर्याणाम् 'आचमनकल्पः'। 'अष्टमीषु' तिथिषु। 'परोक्षम्' आर्यानधिष्ठितम्। 'तद्देवपवित्रं' तदन्नं देवसंप्रदानेऽपि पवित्रं, किं पुनः स्वयं भोजने। 'गृहमेधिन' इति गृहस्थस्य। यदाप्यग्निपक्वेनापि प्राणवृत्तिस्तदा तेनैव होमा बलयश्चावश्यं

1 न स्वयं नापि स्त्रियः—उज्ज्वला.

2 परिमृज्यावेक्ष्यन्—द, ब; परिमृज्यावोक्ष्याभ्युक्ष्य—ना; बलीनां तस्य तस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य—मु. आप., (Mysore edn.)

3 'वैश्वदेवे' वैश्वदेवसंबन्धिनि गृहस्थस्य भोजनार्थे पाके। अशनीयस्यैव वैश्वदेवविधानात्। कल्पतरौ तु वैश्वदेवे कर्मणि अन्नं संस्कुर्युरिति व्याख्यानात् पाकधर्माणां वैश्वदेवार्थत्वमभ्यनुज्ञातम्। 'भाषा' शब्दोच्चारणम्। कासो घुर्घुरस्वरः—वी. मि. आ., ४२६.

[1]कर्तव्याः। 'उपयोगे' [2]आद्यप्रयोगकाले। 'अधःशय्या'दि 'क्षारलवण वर्जना'न्तं व्रतम्। 'उत्तमस्य' तु बलिमन्त्रस्याद्ये प्रयोगकाले द्वादशरात्रादनन्तरम् 'एक उपवासो' अधिकः। 'तस्य' बलिदेशस्य सर्वस्य संस्कार आवृत्या न तु तन्त्रेण। 'न्युप्य' निर्वापं कृत्वा। 'उभयतः' आदावन्ते च। 'परिषेचनं' बलीनामुदकेन परिवेष्टनम्॥

[3]छन्दोगपरिशिष्टे कात्यायनः—[२, १५३–१५४]

भूतप्रवाचने पत्नी यद्यसन्निहिता भवेत्।
रजोरोगादिना तत्र कथं कुर्वन्ति याज्ञिकाः॥
महानसेऽन्नं या कुर्यात् सवर्णा तां प्रवाचयेत्।
प्रणवाद्यपि वा कुर्यात्कात्यायनवचो यथा॥

'भूतप्रवाचनं' सिद्धेऽन्ने स्वामिना भूतमन्नमिति पत्न्या वाचनम्। तत्र पत्न्या असन्निधाने अन्या अपि या [4]पाककर्त्री सवर्णा तां वाचयेदित्यर्थः। यदि तु भूतमिति वक्तुं सा न शक्नोति तदान्यदपि ओंकारादि संमतिप्रतिपादकं ब्रूयादित्यभिप्रायः॥

[5]मनुः—[३, ८४–८६]

वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम्।
आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम्॥
अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः।

1 संपादनीयाः—ब, द.
2 आद्ये—ना; 'उपयोगो' नियमपूर्वकं विद्याग्रहणम्—हरदत्तः.
3 वी. मि. आ., ४२०.
4 पाककारी—उ.
5 वी. मि. आ., ४०२.

विश्वेषां चैव देवानां धन्वन्तरय एव च ॥
कुह्वै चैवानुमत्यै च प्रजापतय एव च ।
सह द्यावाप्रथिव्योश्च तथा स्विष्टकृतेऽन्ततः ॥

'समस्तयोः' अग्नीषोमाभ्याम् । 'सह द्यावापृथिव्योः' द्यावाप्रथिवीभ्यामित्येवं कर्तव्यम् ॥

[1]विष्णुः—[६७, १–३]

अथाग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य [2]परिसमाधाय सर्वतः पाकादग्रमुद्धृत्य जुहुयात् । वासुदेवाय संकर्षणाय प्रद्युम्नायानिरुद्धाय पुरुषाय सत्यायाच्युताय वासुदेवाय । [3]अग्नये सोमाय मित्राय वरुणायेन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतयेऽनुमत्यै धन्वन्तरये वास्तोष्पतयेऽग्नये[4] स्विष्टकृते इति ॥

[5]गौतमः—[५, ११]

अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति होमाः ॥

छन्दोगपरिशिष्टे कात्यायनः—[१, १३१]

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्वालाभेपि वर्जयेत् ॥

[6]'गौरो'ऽत्र सितसर्षपः ॥

1 वी. मि. आ., ४०४.
2 परिषिच्य—मु. वि. स्मृ.
3 अथाग्नये—मु. वि. स्मृ.
4 अग्नये—Not found in MSS. and वी. मि. आ ; Supplied by printed *Viṣṇusmṛti*.
5 वी. मि. आ., ४१७.

[1]आपस्तम्बः—[२, १५, १४–१८]

न क्षारलवणहोमो विद्यते। [2]तथाऽवरान्नसंसृष्टस्य वा। अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य [3]तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति। न स्त्री जुहुयात्। नाऽनुपेतः॥

'क्षारलवणम्' ऊषरलवणम्। 'अपरान्नसंसृष्टम्' अन्नान्तरसंबद्धम्। 'अहविष्यं' माषादि। यदि तु क्षारलवणाद्यैव होम्यं भवति तदा 'उदीचीनम्' उत्तरदिग्भागभवम् 'उष्णं भस्मापोह्य' 'तस्मिन्' अग्नौ 'जुहुयाद्' इत्यर्थः॥

[4]वसिष्ठः—[११, ३–६]

वैश्वदेवस्य सिद्धस्य सायंप्रातर्गृह्येऽग्नौ जुहुयात्। गृहदेवताभ्यो बलिं हरेत्। श्रोत्रियाय दत्वा ब्रह्मचारिणे चानन्तरं पितृभ्यो दद्यात्। ततोऽतिथीन्भोजयेत्॥

'वैश्वदेवस्य' विश्वेदेवदेवताकस्यान्नस्य॥

[5]शातातपः

भूतयज्ञं तथा श्राद्धं नित्यं त्वतिथितर्पणम्।
क्रमेणानेन कर्तव्यं स्वाध्यायाध्ययनं सदा॥

अयं च शाखाविशेषव्यवस्थितो भूतयज्ञादिक्रमः॥

1 वी. मि. आ., ३९६.

2 अथापरान्न—ज; तथापरान्न—उ.

3 तस्मिन् भस्मनि जुहुयात्—इति मुद्रितापस्तम्बपाठः; औपासनात्पचनाद्वा अग्नेरुदीचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयाद्वैश्वदेवमन्त्रैः—इति हरदत्तः.

4 वी. मि. आ., ४३०–४३१.

5 वी. मि. आ., ३९१.

[1]याज्ञवल्क्यः—[१, १०३–१०४]

देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यो विनिक्षिपेत्[2] ॥
अन्नं पितृमनुष्येभ्यो [3]देयमप्यन्वहं जलम् ।
[4]स्वाध्यायं चान्वहं कुर्यान्न पचेदन्नमात्मने ॥

अथ मनुः[5] [३, ८७–९३]

एवं सम्यग्घविर्हुत्वा सर्वदिक्षु प्रदक्षिणम् ।
इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो बलिं हरेत् ॥
मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि ।
वनस्पतिभ्य इत्येवं मुसलोलूखले हरेत् ॥
उच्छीर्षके श्रियै कुर्याद्भद्रकाल्यै तु पादतः ।
ब्रह्मवास्तोष्पतिभ्यां तु वास्तुमध्ये बलिं हरेत् ॥
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत् ।
दिवाचरेभ्यो भूतेभ्यो [6]नक्तंचारिभ्य एव च ॥
पृष्ठवास्तुनि कुर्वीत बलिं सर्वानुभूतये[7] ।
पितृभ्यो बलिशेषं तु सर्वं दक्षिणतो हरेत् ॥
शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवि ॥

1 वी. मि. आ., ४१३.

2 बलिं क्षिपेत्—ब, द; वायसेभ्यस्तु निक्षिपेत्—ना; वायसेभ्यश्च निक्षिपेत्—मिताक्षरा.

3 देवमप्यन्वहं जलम्—उ; देवताप्यन्वहं जलम्—ब, द.

4 स्वाध्यायमन्वहं—ना; स्वाध्यायं सततं—मिताक्षरा.

5 वी. मि. आ., ४०२.

6 नक्तंचरेभ्यः—ब, द.

7 कुल्लूकः 'सर्वात्मभूतये' इति पठित्वा, तत्र 'सर्वात्मभूतये नम' इत्येव बलिं दद्यात्, इति च व्याचख्यौ.

एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति[1] ।
[2]स गच्छति परं स्थानं तेजोमूर्ति पथर्जुना ॥

<u>तथा</u>—[३, १२१]

सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ।
वैश्वदेवं हि नामैतत्सायंप्रातर्विधीयते ॥

[3]'एवम्' इति, देवयज्ञप्रकारेण । 'उच्छीर्षके' गृहस्थशय्याशिरःप्रदेशे, वास्तुपुरुषशिरःप्रदेशे वा । 'पादतः' गृहस्थस्यैव शय्यापादप्रदेशे । 'ब्रह्मवास्तोष्पतिभ्याम्' इति, एवमेव बलिदाने प्रयोगः । 'पृष्ठवास्तुनि' पश्चाद्गृहे [4]मूत्रोच्चारकरणस्थान इत्यर्थः । 'सर्वानुभूतये' सर्वानुभूतिदेवतायै[5] । 'शनकैः' यथान्नोपघातः कथमपि न भवति । वायसादीनां चोपकाराय बलिः क्रियमाणस्तत्र देशे दातव्यो यत्र तेषामुपयोगसंभवः । 'अर्चती'त्यनेन श्वादीनामपि बलिदानेऽनादरो न कर्तव्य इत्युक्तम् । 'पथर्जुना' ऋजुना पथा । 'सायं त्वि'ति, इदं च सायं सिद्धेनान्नेन पत्न्या अमन्त्रकं बलिहरणं यजमानतत्पुत्रादीनामसन्निधाने । 'हरेत्' दद्यात् ॥

श्वादिभ्यो भूतेभ्यो बलिदानमुक्त्वा—

<u>यमः</u>

[6]सर्वमेव यथाशक्ति निर्वपेद्विधिपूर्वकम् ।
एवं युक्तो व्रजेत्स्वर्गं गृहस्थो नात्र संशयः ॥

1 नित्यमर्चयेत्—ब, द.
2 स गच्छेत्परमं स्थानं—ब, द, ज.
3 Reproduced by वी. मि. आ., ४०२ and **गृहस्थरत्नाकर**, २७९–२८०.
4 मूत्रोच्चारणस्थान इत्यर्थः—ब, द.
5 इतः परं सर्वकोशेषु 'तथा च सांख्यायनसूत्रम् (गृह्यम्)' इत्युपलभ्यते.
6 सर्वमेतद्यथाशक्ति—ब, ना, द.

हस्तेन इत्यनुवृत्तौ—

[1]आपस्तम्बः [२, ३, १८–२३; २, ४, १–५]

एवं बलीनां देशे देशे समवेतानां सकृत्सकृदन्ते परिषेचनम्। सति सूपसंसृष्टेन[2] कार्याः। अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गम्। उदधानसन्निधौ नवमेन। मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम्। उत्तरपूर्वदेशेऽगारस्योत्तरैश्चतुर्भिः। शय्यादेशे कामलिङ्गेन। देहल्यामन्तरिक्षलिङ्गेन। उत्तरेणापिधान्याम्। उत्तरैर्ब्रह्मसदने। दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात्। रौद्र उत्तरो यथा देवताभ्यः। तयोर्नाना परिषेचनं धर्मभेदात्। नक्तमेवोत्तमेन वैहायसम्। य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च॥

'[3]एवं बलीनाम्' इति, यथा 'अग्नये स्वाहा' इत्यादिषूक्तवैश्वदेवाहुतीनामादावन्ते च 'अदिते अनुमन्यस्व' इत्यादिभिर्मन्त्रैः 'परिषेचनम्', एवं 'बलीनां' 'समवेतानां' मिलितानाम्। 'सती'ति, [4]सत्यवकाशे 'सूपसंसृष्टे' परस्परसंकीर्णदेशे बलयो न कार्या इत्यर्थः। 'सप्तमाष्टमाभ्यां' 'धर्माय स्वाहा' 'अधर्माय स्वाहा' इत्याऽऽभ्याम्। 'उदगपवर्गम्' उदक्समाप्तिर्भवति। 'उदधानसन्निधौ नवमेन' 'अद्भ्यः स्वाहा' इति। '[5]उदधानं' मणिकादि। 'मध्येऽगारस्य' गृहस्य। 'दशमैकादशाभ्याम्' 'ओषधिवनस्प-

1 वी. मि. आ., ४२६.

2 सूपसंमृष्टेन—ड; सूपसंस्पृष्टेन—मु. आप.

3 वी. मि. आ., ४२८–४२९.

4 Quoted by वी. मि. आ., ४२८.

5 उदधाने मण्डपिकास्थाने—ब,द; उदकं यत्र धीयते तदुधानं मणिकाख्यम्—हरदत्तः.

तिभ्यः स्वाहा' 'रक्षोदेवजनेभ्यः स्वाहा' इति। 'प्रागपवर्गं' प्राक्संस्थम्। 'उत्तरपूर्वदेशे' अपराजितायां दिशि। 'अगारस्योत्तरैश्चतुर्भिः' 'गृहेभ्यः स्वाहा' 'अवसानेभ्यः स्वाहा' 'अवसानपतिभ्यः स्वाहा' '[1]सर्वभूतेभ्यः स्वाहा' इति। 'कामलिङ्गेन' 'कामाय स्वाहा' इति। 'अपिधान्यां' कपाटे। 'उत्तरैः' मन्त्राः 'पृथिव्यै स्वाहा' इत्यादयः 'ब्रह्मणे' इत्यन्ताः। 'पितृलिङ्गेन' 'स्वधा पितृभ्य' इति। 'रौद्रो मन्त्रो' 'नमो रुद्राय पशुपतये स्वाहा' इति। 'धर्मभेदात्' यथोक्तम्—'पितरो वाक्यमिच्छन्ति भावमिच्छन्ति देवताः' इति, तस्मात् पितृकेषु समन्त्रकमेवेति। 'उत्तमेन' 'ये भूताः प्रचरन्ति' इत्यनेन 'वैहायस'मेव [2]बलिं कुर्यान्नान्यम्॥

[3]गौतमः—[५, १२–१८]

दिग्देवताभ्यश्च यथास्वम्। द्वार्षु मरुद्भ्यः। गृहदेवताभ्यः प्रविश्य। ब्रह्मणे मध्ये। अद्भ्य उदकुम्भे। आकाशायान्तरिक्षे। नक्तंचरेभ्यश्च सायम्॥

'यथास्वं' यस्या दिशो या देवता इन्द्रादिका तस्याः तस्यां दिशि बलिर्देया इत्यर्थः। 'दिग्देवताभ्य'श्चेति, चकारात्तत्पुरुषेभ्यश्च। 'प्रविश्य' गृहमिति शेषः। 'सायं च' 'नक्तंचरेभ्य' इत्यधिकम्॥

विष्णुः—[६७, ४–२६]

ततोऽन्नशेषेण बलिमुपहरेत्। तक्षोपतक्षाभ्याम्। अभितः पूर्वेणाग्निम्। अम्बानामासीति दुलानामासीति

1 सर्वभूतपतिभ्यः—उ.
2 बलिं दद्यान्नान्यम्—ब, ज, द.
3 वी. मि. आ., ४१७–४१८.

[1]निनन्नी नामासीनि खुपुणीका नामासीनि[2] [3]अभ्रयन्ती नामासीनि मेघयन्ती नामासीनि वर्षयन्ती नामासीनि सर्वासाम्। नन्दिनि सुभगे सुमङ्गलि [4]भद्रकालीनि सक्तिष्वभिप्रदक्षिणम्। स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्च। धर्माधर्मयोर्द्वारे मृत्यवे च। उदधाने वरुणाय। विष्णव इत्युलूखले। मरुद्भ्य इति दृषदि। उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्च। [5]इन्द्रायेन्द्रपुरुषेभ्य इति पूर्वार्धे। यमाय यमपुरुषेभ्य इति दक्षिणार्धे। वरुणाय वरुणपुरुषेभ्य इति [6]पश्चिमार्धे। सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे। ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये। ऊर्ध्वमाकाशाय। दिवाचरेभ्यो भूतेभ्य इति स्थण्डिले। नक्तंचरेभ्यो [7]भूतेभ्य इति नक्तम्। ततो दक्षिणाग्रेषु [8]दर्भेषु पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै स्वनामगोत्राभ्यां पिण्डनिर्वपणं कुर्यात्। पिण्डानां चानुलेपनपुष्पधूपदीपनैवेद्यानि दद्यात्। उदककलशमुपनिधाय स्वस्त्ययनं वाचयेत्। श्वकाकश्वपचां भुवि निर्वपेत्॥

'अभितः' दक्षिणोत्तरयोः। 'सक्तिषु' कोणेषु। 'उपरि शरणे' उपरितने गृहे। इदं च [9]कठानां व्यवस्थितम्॥

1 निन[illegible] — ब, द.

2 खुपुणीका नामासीनि सर्वासाम् — मु. वि. [illegible]

3 अभ्रयन्ती नामासीनि, मेघयन्ती नामासीनि [illegible] नामासीनि — द, पुस्तकान्तरे नास्ति — मु. वि. स्मृ.

4 भद्रकालीनि — मु. वि. स्मृ.

5 वी. मि. आ., ४१८.

6 पश्चार्धे — ब, द, मु. वि. स्मृ.

7 'भूतेभ्यः' इति नास्ति — मु. वि. स्मृ.

8 दर्भेषु इति नास्ति — ज, ना.

9 बहूनां — ब, द; क. गृ., ५०, ४.

[1]शङ्खलिखितौ

ब्रह्मणे नम इति ब्रह्मस्थले बलिं हरेत्। सोमायेत्युदकुम्भे। वायव इति वास्तुगृहे। गृहपतय इति गृहद्वारे। प्रजापतय इति गर्भगृहे। [2]शन्नो देवीरित्यग्निकार्ये। [3]दिक्पतिभ्यस्तत्पुरुषेभ्य इति पश्चिमार्धे। सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे। ब्रह्मणे ब्रह्मपुरुषेभ्यः प्रतिदिशम्। नक्षत्रग्रहदेवताभ्योऽन्तरिक्षे। सर्वतः पशूनां पतये। नमो देवेभ्य इति प्रागुदीच्याम्। ब्रह्मस्थले स्वधा पितृभ्य इति दक्षिणेन निवाप्य गोदोहमात्रं कालमन्वाकाङ्क्षेदतिथिम्[4]॥

'ब्रह्मस्थले' गृहमध्ये। 'अन्वाकाङ्क्षेत्' प्रतीक्षेत॥

बलिदानविधौ—

छन्दोगपरिशिष्टे कात्यायनः [२, ४४]

[5]पिण्डवच्च पश्चिमा प्रतिपत्तिः॥

तथा [२, ३५–३८]

[6]असुष्मै नम इत्येवं बलिदानं विधीयते।
बलिदानप्रदानार्थं [7]नमस्कारः कृतो यतः॥
स्वाहाकारवषट्कारनमस्कारा दिवौकसाम्।

1 वी. मि. आ., ४०४.

2 विश्वेभ्यो देवेभ्य इति देवगृहे। शन्नो—ब, ज, द.

3 दिक्पतिभ्यस्तत्पुरुषेभ्य इति प्रतिदिशम्। नक्षत्रग्रहदेवताभ्य इत्यन्तरिक्षे। सर्वतः पशूनां पतये—द, ज, ब, वी. मि. आ.

4 अन्वाचक्षतेऽतिथिम् (अन्वाचक्षते प्रतीक्षते)—वी. मि. आ.

5 वी. मि. आ., ४१३.

6 वी. मि. आ., ४१२.

7 नमस्कारक्रिया यतः—ना.

स्वधाकारः पितॄणां च हन्तकारो नृणां यतः[1] ॥
स्वधाकारेण निर्वपेत्पित्र्यं बलिमतः सदा ।
तमप्येके नमस्कारैः कुर्वते नेति गौतमः ॥

[2]न चावराध्यां बलयो भवन्ति महामार्जारश्रवणप्रमाणात् ।
एकत्र चेत् [3]कृत्स्ना भवन्तीनरेतरमसंसक्ताश्च ॥

'पिण्डवदि'ति, यथा पिण्डानां प्रतिपत्तिरग्निक्षेपादिका तथा बलीनामपि । 'न चावराध्यां' इति, बिडाल-कर्णप्रमाणादूना बलयो न भवन्ति ॥

[4]विष्णुपुराणे—[३, ११, ४२–४९]

अपूर्वमग्निहोत्रं च कुर्यात् [5]प्राग्ब्रह्मणे ततः ।
प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात् ॥
गृह्याभ्यः काश्यपायाथ [6]ततोऽनुमतये क्रमात् ।
तच्छेषं [7]मणिके पृथ्वीपर्जन्याभ्यः क्षिपेत्ततः ॥
द्वारे धातुर्विधातुश्च [8]मध्ये च ब्रह्मणे क्षिपेत् ।
गृहस्य पुरुषव्याघ्र दिग्देवानां च मे शृणु ॥
इन्द्राय धर्मराजाय वरुणाय तथेन्दवे ।
प्राच्यादिषु बुधो [9]दद्याद्धुतशेषात्मकं बलिम् ॥

1 स्मृतः — ना.

2 [illegible] —वी. मि. आ., [illegible].

3 [illegible] भवन्ति— ना.

4 वी. मि. आ., [illegible].

5 प्राग्ब्राह्मणे ततः — ब, द ; अपूर्वमग्निहोत्रं च कुर्यात्प्राग्ब्राह्मणे ततः — वी. मि. आ.

6 ततोऽनुक्रम[illegible]क्रमात् — [illegible].

7 मणिके — अ.

8 मध्यमे — [illegible].

9 दद्याद्धुतशेषात्मकं — ब, द ; [illegible].

प्रागुत्तरे च दिग्भागे धन्वन्तरिबलिं बुधः ।
निर्वपेद्वैश्वदेवं च कर्म कुर्यादतः परम् ॥
वायव्ये वायवे दिक्षु [1]समस्तासु ततो दिशाम् ।
ब्रह्मणे चान्तरिक्षाय भानवे च क्षिपेद्बलिम् ॥
विश्वेदेवान्विश्वभूतान् ततो विश्वपतीन्पितॄन् ।
[2]यक्ष्माणं च समुद्दिश्य बलिं दद्यान्नरेश्वर ॥

[3]मार्कण्डेयपुराणे—[३४, ९४–१०१]

संपूजयेत्ततो वह्निं देयाश्चाहुतयः क्रमात् ।
प्रथमां ब्रह्मणे [4]कुर्यात् प्रजानां पतये ततः ॥
तृतीयां चैव गृह्याभ्यः काश्यपाय तथापराम् ।
ततोऽनुमतये [5]दद्याद्दद्याद्गृहबलिं तथा ॥
पूर्वाख्यातं मया यत्तन्नित्यकर्मक्रियाविधौ ।
वैश्वदेवं ततः कुर्याद्बल्यस्तत्र मे शृणु ॥
यथास्थानविभागं तु देवानुद्दिश्य वै पृथक् ।
पर्जन्याद्भ्यो धरित्रीणां दद्यात्तु मणिके त्रयम् ॥
[6]धात्रे विधात्रे च द्वाभ्यां दद्याच्च द्वारयोः क्रमात् ।
वायवे प्रतिदिग्भ्यश्च दिग्भ्यः प्राच्यादितः क्रमात् ॥
[7]ब्रह्मणे चान्तरिक्षाय सूर्याय च यथाक्रमम् ।
विश्वेभ्यश्चैव देवेभ्यो विश्वभूतेभ्य एव च ॥

1 समन्ताच्च—वी. मि. आ.
2 यक्षाणां—उ.
3 वी. मि. आ., ४०५.
4 दद्यात्—ज, ना, द, ब.
5 दत्वा—ब, ज, ना, द ; दद्याद्दद्याद्गृहबलिं तथा—उ.
6 श्लोकार्धं नास्ति—वी. मि. आ.
7 श्लोकार्धं नास्ति—वी. मि. आ.

उत्तसे भूतपतये दद्याच्चोत्तरतस्ततः ।
स्वधा नम इत्युक्त्वापि पितृभ्यश्चापि दक्षिणे ॥
कृत्वापसव्यं वायव्यां यक्ष्मैतत्तेऽवनेजनम् ।
अन्नावशेषमिश्रं वै तोयं दद्याद्यथाविधि ॥

[1]तथा—[२०, २१]

ततस्तोयमुपादाय तेषामाचमनाय वै ।
स्थानेषु निक्षिपेत्प्राज्ञो नाम्ना तूद्दिश्य देवताः ॥

[2]विष्णुपुराणे—[३, ११, ५०–५७]

ततोऽन्यदन्नमादाय भूमिभागे शुचौ पुनः ।
दद्यादशेषभूतेभ्यः स्वेच्छया तत्समाहितः ॥
देवा मनुष्याः पशवो वयांसि
 सिद्धाः [3]सयक्षोरगदैत्यसङ्घाः ।
प्रेताः पिशाचास्तरवः समस्ता
 ये चान्नमिच्छन्ति मया प्रदत्तम् ॥
पिपीलिकाः कीटपतङ्गकाद्या
 बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं
 तेभ्यो विसृष्टं सुखिनो भवन्तु ॥
येषां न माता न पिता न बन्धु-
 र्नैवान्नसिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि [4]दत्तमेतत्
 ते यान्तु तृप्तिं मुदिता भवन्तु ॥

१ वी. मि. आ., ४०५.
२ वी. मि. आ., ४०६–४०७.
३ सयक्षोरगभूतसङ्घाः वी. मि. आ.
४ दत्तमेतत्तेषां विसृष्टं ब, अ, ना, द.

भूतानि सर्वाणि तथान्नमेत-
दहं च विष्णुर्न यतोऽन्यदस्ति ।
तस्मादहं भूतनिकायभूत-
मन्नं प्रयच्छामि भवाय तेषाम् ॥
चतुर्दशो भूतगणो य एष[1]
तत्र स्थिता [2]येऽखिलभूतसङ्घाः ।
तृप्त्यर्थमन्नं हि मया विसृष्टं
तेषामिदं ते मुदिता भवन्तु ॥
इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितम् ।
भुवि[3] भूतोपकाराय गृही सर्वाश्रयो यतः ॥
श्वचण्डालविहङ्गानां भुवि दद्यात्ततो नरः ।

आपस्तम्बः—[२, ४, १०–११]

अग्रं च देयम् । अतिथीनेवाग्रे भोजयेत् ॥

'अग्रं' ग्रासचतुष्टयं विष्णुपुराणोक्तम् ॥

बोधायनः—[२, ५, १५]

श्रोत्रियायाग्रं[4] दद्यात् ॥

[5]मनुः—[३, ९४–९८]

कृत्वैतद्बलिकर्मैवमतिथिं पूर्वमाशयेत् ।
भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥

1 एते—उ.
2 ये खलु—ना.
3 भूरि—ब, ह.
4 वाऽग्रम्—इति मुद्रितपाठः.
5 वी. मि. आ., ४३४.

[1]यत्पुण्यफलमाप्नोति गां दत्वा विधिवद्गुरोः ।
[2]तत्पुण्यफलमाप्नोति भिक्षां दत्वा तु भिक्षवे ॥
भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम् ।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥
नश्यन्ति हव्यकव्यानि नराणामविजानताम् ।
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥
विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु ।
निस्तारयति दुर्गाच्च महतश्चापि किल्बिषात् ॥

विष्णुः—[६७, २७–२८]

भिक्षां च दद्यात् । अतिथिपूजने च परं [3]यत्नमातिष्ठेत् ॥

यमः

सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः ।
गोप्रदानसमं पुण्यं तस्याह भगवान्यमः ॥

याज्ञवल्क्यः—[१, १०८]

सत्कृत्य भिक्षवे भिक्षा दातव्या सव्रताय च ।

'सव्रतो' ब्रह्मचारी ॥

[4]शातातपः

ग्रासमात्रा भवेद्भिक्षा पुष्कलं तु चतुर्गुणम् ।
पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः ॥

1 इदमर्धं नास्ति— ३.
2 यत्पुण्यफलमाप्नोति — ३.
3 फलमाधितिष्ठेत—इति मुद्रित पाठः.
4 वी. मि. आ., ४३५.

[1]आपस्तम्बः—[१, ३, २६]

स्त्रीणां च प्रत्याचक्षाणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते। तस्मादु ह वै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीत। अपि हैष्वेवंविध एवंव्रतः स्यादिति हि ब्राह्मणम्॥

'प्रत्याचक्षाणानां' भिक्षार्थमागतानां प्रत्याख्यानं कुर्वन्तीनाम्। 'एषु' ब्रह्मचारिषु। 'एवंव्रतः' भिक्षादानव्रतः॥

यमः

हस्तदत्ता तु या भिक्षा सलिलं व्यञ्जनानि च।
भुक्त्वा त्वशुचितां याति दत्वा स्वर्गं न गच्छति॥

[2]वसिष्ठः—[११, ५]

श्रोत्रियायाग्रं दत्वा ब्रह्मचारिणे चानन्तरं पितृभ्यो दद्यात्॥

'श्राद्धम्' इत्यनुवृत्तौ—

शातातपः

यथाशक्त्यभिरूपाणां ब्राह्मणानां च भोजनम्।
अपवर्गे तु सर्वत्र नित्यमेव प्रकीर्तितम्॥

'अभिरूपाणां' विदुषाम्। 'अपवर्गः' [3]पञ्चयज्ञसमाप्तिः॥

1 वी. मि. आ., ४३५.
2 वी. मि. आ., ४३०.
3 पञ्चयज्ञसमाप्तिकाल:—ब, द.

[1]मनुशातातपौ शङ्खश्च प्रथमे

[2]दद्यादहरहः श्राद्धमन्नाद्येनोदकेन च[3] ।
पयोमूलफलैर्वापि पितृभ्यः [4]प्रीतिमाहरन् ॥
[5]एकमप्याशयेद्विप्रं [6]पित्रर्थे पाञ्चयज्ञिके ।
न चैवात्राशयेत्किंचिद्वैश्वदेवं प्रति द्विजम् ॥

[7]योगियाज्ञवल्क्यः

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
तृप्त्यर्थं वै पितॄणां तु[8] स्वात्मनः श्रेय इच्छता ॥

[9]छन्दोगपरिशिष्टे कात्यायनः—[२, ३०–३२]

अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥
[10]अप्युद्धृत्य यथाशक्ति [11]किंचिदन्नं यथाविधि ।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः ॥
पितृभ्य इदमित्युक्त्वा [12]स्वधाकारं च कारयेत् ।
'अदैवम्' विश्वेदेववर्जितम्[13] ॥

1 मनुः, ३, ८२, ८३ ; वी. मि. आ., ४३२.
2 कुर्यादहरहः श्राद्धं — मु. म. ४५., वी. मि. आ.
3 वा — अ, ना, मु. म. ४५.
4 प्रीतिमावहन् — ब, द, मु. म. ४५ ; प्रीतिमाहरन् — अ
5 मनुः — वी. मि. आ., ४३२.
6 पित्रर्थे — ब, अ, द.
7 वी. मि. आ., ४३२.
8 वा — ब, अ, ना, द.
9 वी. मि. आ., ४३१.
10 अभ्युद्धृत्य — ब, द ; अप्युद्धृत्य यथाशक्त्या — अ.
11 किंचिदन्नं — अ.
12 स्वधाकारमुदीरयेत् — वी. मि. आ.
13 विहीनम् — अ ; विवर्जितम् — ना.

आपस्तम्बः—[२, १८, ९–१०]

नित्यश्राद्धम्। बहिर्ग्रामाच्छुचयः शुचौ देशे संस्कुर्वन्ति। तत्र नवानि द्रव्याणि। यैरन्नं संस्क्रियते येषु च भुज्यते। तानि च भुक्तवद्भ्यो दद्यात्। समुदेतांश्च भोजयेत्। न चातद्गुणायोच्छिष्टं प्रयच्छेत्। एवं संवत्सरम्। तेषामुत्तमं लोहेनाजेन कार्यम्। मानं च कारयेत् प्रतिच्छन्नम्। तस्योत्तरार्धे ब्राह्मणान्भोजयेत्। उभयान् पश्यन्ति ब्राह्मणांश्च भुञ्जानानान्माने च पितॄनित्युपदिशन्ति। कृताकृतमत ऊर्ध्वम्। श्राद्धेन तृप्तिं वेदयन्ते पितरः॥

'नित्यश्राद्धम्' इति, नित्यमहरहः क्रियमाणम्। 'शुचय' इति पुनर्वचनमादरेण सर्वप्रकारेण शौचस्याङ्गत्वार्थम्। 'समुदेताः' समुद्धृताः, जातिविद्यादिभिरुत्कृष्टा इत्यर्थः। 'न चातद्गुणाये'ति, अतद्गुणाय अनन्तरोक्तसमुदेतत्वगुणशून्याय[1]। 'उच्छिष्टं' चात्र श्राद्धपाकशेषः। 'तेषाम्' इत्यादि, तेषामहरहः क्रियमाणानां श्राद्धानां यत् 'उत्तमं' श्राद्धं सवत्सरस्यान्ते, तल्लोहितच्छागमांसमिश्रणान्नेन कर्तव्यम्। 'मानं चे'ति, मीयन्ते प्रक्षिप्यन्ते शयनासनादिसाधनानि द्रव्याणि यत्र तन्मानं गृहम्। 'प्रतिच्छन्नं' सर्वतो वेष्टितम्। 'तस्य' च गृहस्य 'उत्तरार्धे' उत्तरभागे 'ब्राह्मणान्भोजयेत्'। तस्मिंश्च माने 'ब्राह्मणान् भुञ्जानान्' 'पितॄन्' पितृरूपेण 'पश्यति' पश्येदित्यर्थः। 'कृताकृतम्' इति, एवं संवत्सरे कृते अत ऊर्ध्वं नित्यश्राद्धं कृतं भवत्यकृतं भवतीत्यर्थः। [2]अकरणे दोषो नास्ति करणे च

1 इतः परं A. S. B., कोशे कानिचन पत्राणि नष्टानि.

2 अकरणे दोषो नास्तीत्युक्तं भवति। श्राद्धेन—उ; अकरणे दोषो नास्तीत्युक्तं भवति। करणे च फलं भवतीत्यर्थः। श्राद्धेन—ज, ब.

फलमस्तीत्युक्तं भवति। 'श्राद्धेने'ति, अनेनैवं संवत्सर-श्राद्धेन स्वकीयां यावज्जीवतृप्तिं 'वेदयन्ते' कथयन्ति॥

मत्स्यपुराणे—[१६, ५–६]

नित्यं तावत्प्रवक्ष्यामि चार्घ्यावाहनवर्जितम्।
अदैवं तद्विजानीयात् पार्वणं पर्वसु स्मृतम्॥

[1]विष्णुपुराणे—[३, ११, ३४]

पित्रर्थं चापरं [2]विप्रमेकमप्याशयेन्नृप।
[3]तद्दैवं विदिताचारसंभूतिं पाञ्चयज्ञिकम्॥

पद्मपुराणे—[सृष्टिखण्डम्, १९, १३९–१४०]

एकं वेदान्तगं विप्रं भोजयेच्छ्रद्धयान्वितः।
तस्य भुक्ता भवेत्कोटिर्विप्राणां नात्र संशयः॥

विष्णुपुराणे—[३, ११, ६६]

दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम्।
स्वेच्छया च बुधो दद्याद्विभवे सत्यवारितम्॥

[4]नरसिंहपुराणे—[५८, ९८–१०१]

भिक्षां च भिक्षवे दद्यात्परिव्राड्ब्रह्मचारिणे।
कल्पितान्नात्समुद्धृत्य सर्वव्यञ्जनसंयुताम्॥
अकृते वैश्वदेवे तु भिक्षार्थे गृहमागते।
उद्धृत्य [5]वैश्वदेवान्नं भिक्षां दत्वा विसर्जयेत्॥

1 वी. मि. आ., ४२९.
2 विप्रमेकमेवाशयेन्नृप ब, द.
3 तद्दैवं विदितावारं संभूतिं पाञ्चयाज्ञिकम् ब, द, म; तद्दैवं विदिताचारसंभूतिं पाञ्चयाज्ञिकम् —ना.
4 वी. मि. आ., ४३६.
5 वैश्वदेवार्थं ब, ना, द.

वैश्वदेवकृतं दोषं [1]शक्तो भिक्षुर्व्यपोहितुम् ।
[2]न तु भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति[3] ॥

[4]पद्मपुराणे—[सृष्टिखण्डम्, १९, १४०–१४१]

यः पात्रपूरणीं भिक्षां यतिभ्यः संप्रयच्छति ।
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ॥

[5]ब्रह्मपुराणे

पूर्वं देवैर्जिता दैत्याः संग्रामाच्च पराङ्मुखाः ।
कपालपाणयो जग्मुः केचिन्नग्नव्रतास्तथा ॥
केचिन्मुण्डा लोहिताक्षाः काषायवसनास्तथा ।
सात्वताश्च दुराचाराः शौचाचारविवर्जिताः ॥
नरास्थिकेशसंछिन्नाः केचिद्व्याजेन दानवाः ।
यज्ञेषु रक्षसां भागो देय इत्येव संस्मरन् ॥
विप्रेभ्यो मूर्त्तिमद्भ्यश्च [6]देवेभ्यश्च गृहाद्बहिः[7] ।
नित्यं सत्पुरुषः [8]कुर्यादेतेष्वप्यधिकां दयाम् ॥

तथा

पाखण्डिनां चापि न यत्र भिक्षां
कुर्वन्ति निन्दां च बहिर्गतानाम् ।
[9]क्षमावतां संस्थितानां स्वशास्त्रे
शून्याटव्यां भिक्षया वर्ततां च ॥

1 शक्तो भिक्षुर्व्यपोहितुम्—ना ; वी. मि. आ.

2 श्लोकार्धं मुद्रितनरसिंहपुराणे नास्ति.

3 अनेन च वैश्वदेवात्पूर्वमागतस्यैकग्रामवासिनो यतेर्ब्रह्मचारिणो वाऽतिथेर्वाऽऽगमनेऽपि वैश्वदेवार्थमुद्धृत्यावश्यं भिक्षा दातव्येत्युक्तं भवति—वी. मि. आ., ४३६.

4 वी. मि. आ., ४३६.

5 वी. मि. आ., ४३७.

6 तेभ्यो देहि गृहाद्बहिः—उ ; तेभ्यो देयं गृहाद्बहिः—ना.

7 इत आरभ्य उपलभ्यते—A.S.B.

8 कुर्यादेतेष्वभ्यधिकक्रियाम्—ब, द.

9 वेदे सम्यक् संस्थितानां स्वशास्त्रे—वी. मि. आ.

वेदान् पठन्त्वग्निहोत्राणि सम्य-
ग्व्रतोपवासांश्च चरन्तु किं तत् ।
स्पर्धां कृत्वा साधुजनेषु नित्यं
घोराणि पापानि समाचरन्ति ॥
आस्तां किमेभिर्बहुभिः प्रलापैः
पाखण्डिनां रोगिणां चाथ मध्ये ।
विकर्मिणो दुष्टतरा भवन्ति
दुष्टासु नारीषु यथा पतिघ्नी ॥
दुःखाकुलं जगदेतद्विचार्य
नमोऽस्तु धर्माय इति ब्रुवंश्च ।
दद्यादन्नं सर्वगतं च विष्णुं
प्रणम्य वै द्वादशपर्वमात्रम् ॥

[1]मार्कण्डेयपुराणे—[२९, ३५–३७]

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥
भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा ।
[2]अदत्वा न च भोक्तव्यं यथाविभवमात्मनः ॥

[3]महाभारते

घासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा ॥
अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥

[4]ब्रह्मपुराणे

सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।

1 वी. मि. आ., ४३५.
2 अदत्वा च न—ज, ना, वी. मि. आ.
3 गृ. र., २८९ ; वी. मि. आ., ४५८.
4 वी. मि. आ., ४५९

प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि ।
गवां कण्डूयनं घासं ग्रासमाह्निकमेव वा ।
दत्वा भवेन्महापुण्यं गोप्रदानसमं नृणाम् ॥

[1]भविष्यपुराणे

तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम् ।
कपिलाशतदानस्य फलं विद्यान्न संशयः ॥
पञ्चभूते शिवे पुण्ये पवित्रे सूर्यसंभवे ।
प्रतीच्छेमं मया दत्तं सौरभेयि नमोऽस्तु ते ॥

बलिदानानन्तरं—

[2]विष्णुपुराणे—[३, ११, ५८, ५९, ६३]

ततो गोदोहमात्रं वै [3]कालं तिष्ठेद्गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदूर्ध्वं वा [4]यथेच्छया ॥
अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना ।
[5]हिरण्यगर्भबुध्या तं मन्येताभ्यागतं गृही ॥

[6]इति भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्डे वैश्वदेवादिपर्व ॥

1 गृ. र., २८९ ; वी. मि. आ. ४५९.
2 वी. मि. आ., ४२९ ; ब्रह्मपुराणे इति गृ. र., २९०.
3 तिष्ठन् कालं गृहाङ्गणे—ब, द.
4 यदृच्छया—ब, द.
5 हिरण्यगर्भं बुध्वा तं—ब, द.
6 इति कृत्यकल्पतरौ नियतकालकाण्डे वैश्वदेवादिपर्व—द.

॥ ६ ॥

# अथातिथिपूजा

तत्र पितृदानानन्तरं वसिष्ठः—[११, ६]

ततोऽतिथीन्भोजयेच्छ्रेयांसमानुपूर्व्येण ॥

'श्रेयांसं' जात्यादिभिरुत्कृष्टम्। 'आनुपूर्व्येण' क्रमेण। यो यो जात्यादिभिरुत्कृष्टस्तं तं प्रथमं क्रमेण भोजयेदित्यर्थः।

मनुर्विष्णुश्च प्रथमे[1]

[2]संप्राप्ताय त्वतिथये प्रदद्यादासनोदके।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥
[3]अग्नीन् हुत्वा विधानेन यत्पुण्यफलमाप्यते[4]।
तेन तुल्यं विशिष्टं वा ब्राह्मणे तर्पिते फलम् ॥
मन्त्रकर्मविपर्यासाद्दुरिताद्दुर्गतादपि[5]।
तत्फलं नश्यते कर्तुरिदमश्रद्धया कृतम् ॥
[6]शिलानप्युञ्छतो[7] नित्यं पञ्चाग्नीनपि जुह्वतः।

1 मनुरिति गृ. र., २९०; 'मनुर्विष्णुश्च प्रथमे' इति वी. मि. आ., ४४०-४४१.

2 मनुः, ३, ९९; विष्णुः, ६७, ४५; 'सायं प्रातस्त्वतिथये' 'यथाशक्त्या' इति मुद्रितविष्णुस्मृतिपाठौ।

3 Not traced in *Manu* or *Viṣṇu*.

4 फलमाप्नुते—ब, द.

5 दुरिष्टाद्दुर्हुतादपि—उ, गृ. र., २९१; दुरितात् दुर्गतादपि—वी. मि. आ., ज.

6 मनुः, ३, १००-१०१.

7 'शिलादप्युञ्छतो'—वी. मि. आ., ब, ज, द.

सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कथंचन[1] ॥

'[2]संप्राप्ताय' निमन्त्रणं विना स्वयमागताय। 'उदकं' पादधावनाद्युपयोगि। 'विधिपूर्वकम्'[3] अतिथिपूजोक्तप्रकारेण। 'तत्फलम्' अग्निहोत्रफलम्। 'इदम्' आसनादिदानम्। 'शिलान्' लूनसस्यशेषान्। 'उञ्छतः' उच्चिन्वतः। अनेन च दरिद्रेणाप्यतिथिपूजनं कर्तव्यमित्युक्तम्। 'सूनृता' प्रिया सत्या ॥

[4]शङ्खलिखितौ

[5]गोदोहनमात्रं कालमन्वाकाङ्क्षेत्। अतिथिः श्रोत्रियो वेदव्रती यतिधर्मा नैष्ठिकः समानवृत्तिर्योऽन्यो वाऽभ्यागच्छेत्तस्मिन् काले तमर्चयित्वाऽश्नीयात्। कृशवृत्तेरपि ब्राह्मणो ह्यनश्नन् सुकृतमादत्ते। [6]पर्यश्नतः प्रजाः कृन्तति ॥

'श्रोत्रियः' एकशाखाया अप्यध्येता[7]। 'वेदव्रती' उपकुर्वाणकः। 'यतिधर्मा' यतिः। 'नैष्ठिको' ब्रह्मचारी।

1 कदाचन—ब, ज, ना, द, A.S.B., कुल्लूकः.

2 Reproduced by गृ. र., २९१ and वी. मि. आ., ४४१.

3 "असनावसथौ शय्यामनुव्रज्यामुपासनाम्" (मनुः, ३, १०७) इत्यादिवक्ष्यमाणविधिपूर्वकम्—कुल्लूकः.

4 वी. मि. आ., ४४२.

5 'गोदोहनकालं च मुहूर्ताष्टमभागः' आह्निकतत्त्वम्, ४२५; गोदोहमात्रकालो मुहूर्तस्याष्टमो भागः—वी. मि. आ., ४३०.

6 पर्यश्नतः पूजां कुर्वन्ति—इति वी. मि. आ., पाठः; 'पर्यश्नतः अतिथिं परित्यज्याश्नतः कृशवृत्तेरपि। तस्मादतिथेः पूजां कुर्वन्ति' इति च व्याख्यातम्.

7 एकशाखायामप्यध्येता—ज; एकशाखाध्येता—ब, द.

'समानवृत्तिः' तुल्यजीवनोपायः, यथा गृहस्थस्य गृहस्थः। 'पर्यश्नतः' अतिथिं परित्यज्याश्नतः॥

[1]तथा

प्रार्थयन्ते यथा सर्वे निपानं मृगपक्षिणः।
एवं गृहस्थं संपन्नं प्रार्थयन्तीह साधवः॥

नावमन्येत विद्वांसं ब्राह्मणम्। ब्राह्मणो ह्यग्निरिवाप्रमेयः सर्व एव। यथा प्रणीतश्चाप्रणीतश्चाग्निर्हि दैवतमेवं विद्वांश्चाविद्वांश्च ब्राह्मणः पूज्य एव सर्वेषाम्। यत्र हि ब्राह्मणो न भुङ्क्ते तद्भुतमप्यग्नावहुतमेवास्य तद्धविः। तत्र देवा अपि न गृह्णन्ति स्वं भागम्। अतिदेवा हि ब्राह्मणाः। ब्राह्मणानां प्रसादाद्देवा अपि स्वर्गमजयन्॥

'प्रणीतः' वैदिकसंस्कारसंस्कृताग्निः। 'अतिदेवाः' देवेभ्योऽतिशयिताः॥

[2]पुनः शङ्खलिखितौ

वयोवर्णविद्यातपःसंपन्नाय पाद्यमर्घ्यमाचमनीयमन्नविशेषान् तस्मै शक्तितो दद्यात्। [3][प्रियप्रश्नोत्तरेण] सहासीत। [3][यानवन्तमायानारोहणादयानवन्तमनुज्ञापर्यन्तमननुज्ञान आसीमान्तमनुव्रज्य विसर्जयेत्। यदि तत्रैव वस्तुमिच्छेत् तदा शय्यादिना शयनोपकरणेन पूजयेत्।] प्रदोषेऽनुज्ञाप्य शयीत। पूर्वं प्रतिबुध्येत। प्रस्थितमनुव्रजेत्।

1 वी. मि. आ., ४४२.

2 वी. मि. आ., ४४२–४४३.

3 Sentences within rectangular brackets are found *only* in the Nagpur manuscript, and they are missing in the citation in *Gṛhastha-ratnākara* (p. 292) and वी. मि. आ., ४४३.

समेत्य न्यायतो[1] निवर्तेत। वेद्युद्यानारामसभाप्रपातडागदेवगृह[2]महाद्रुमस्थाननदीनामन्यतरस्मिंस्तं प्रदक्षिणं कुर्याद्वाचमुत्सृज्य पुनर्दर्शनायेति ॥

वेद्यादीनामन्यतरस्मिन् स्थाने 'पुनर्दर्शनाय' इत्युक्त्वा तं प्रदक्षिणं कुर्यात् ॥

[3]हारीतः

अतिथिश्च यदागच्छेद्यतिर्वैखानसः समानवृत्तिः स्नातको वा तस्य स्वागतमर्घ्यपाद्याचमनीयमासनं च प्रदाय याश्चौषधयः सन्निहितास्ताश्चोपहरेत्। तं प्रयान्तमनुव्रजन् विष्णुक्रमाननुक्रामति। मोदन्तेऽस्य पितरः पितामहाः प्रपितामहाः। तेनानुज्ञातो निवर्तेत। वसेच्चेद्विधिवत्परिचरणम् ॥

'स्नातको'ऽत्रार्थादकृतविवाहः, 'समानवृत्ति'पदेन गृहस्थस्योपात्तत्वात्। 'ओषधयो' व्रीह्यादयः। 'विष्णुक्रमाः' इष्टयङ्गभूतानि मन्त्रवन्निगमानि ॥

[4]पुनर्हारीतः

विश्वरूपं ब्रह्म द्विविधमाहुः। परं शब्दब्रह्म च[5]। ब्रह्म सर्वा देवताः। ब्रह्ममयत्वाद्ब्रह्मसंभवाद्ब्रह्मण्यधिकाराच्च ब्राह्मणाः सर्वदेवत्या[6] भवन्ति। यस्यै यस्यै देवतायै ब्राह्मण-

1 'न्यायतः समेत्य' ज्येष्ठं पादसङ्ग्रहणादिना समं कनिष्ठं वा आलिङ्गनादिना मिलित्वा—वी. मि. आ., ४४३.

2 'महागमस्थानं' इति वी. मि. आ., पाठः, महाद्रुमस्थानमिति व्याख्यातं च.

3 वी. मि. आ., ४४९.

4 वी. मि. आ., ४४९–४५०.

5 वा—उ.

6 देवता—ज.

स्तर्पयति[1] तां तां प्रीणाति[2]। ब्राह्मणस्य वै तृप्तिं [3]देवपितरोऽनुतृप्यन्ते। न हि तत्स्कन्दते[4] न च्यवते, न यातयामि भवति। ब्राह्मणाः कारणम्। न हि ब्राह्मणाभिभाविनामग्निर्हव्यं वहति। न चास्य देवाः पितरः प्रतिगृह्णन्ति। ब्राह्मणकारणाभिभाविनां [5]नायं लोको न पर इत्याचार्याः। यज्ञोपवीतिनो देवाः। प्राचीनावीतिनः पितरः। विद्यास्नाता आग्नेयाः। व्रतस्नाता ऐन्द्राः। उभयस्नाता वैश्वानराः। सर्वा अस्य देवता गृहमागच्छन्ति। यस्यैवं विद्वान् ब्राह्मणो गृहमभ्येति तमनभ्युत्तिष्ठतः प्राणदेवता अपक्रामन्ति। ततः प्राणैः पापीयान् यातयामत्वमुपैति। [6]यदैनमभ्युत्तिष्ठति नास्य ब्राह्मणदेवता अपक्रामति। अतो न प्राणैः पापीयान् यातयामत्वमुपैति। तस्यैष [7]यदाह स्वागतमिति गृहदेवतास्तेन प्रीणाति। यदासनादिभिरर्चयत्यग्निं यज्ञं च तेन प्रीणाति। यत्पादाभिषेचनं कुरुते पितृंस्तेन प्रीणाति। यदन्नेनाभिपूजयति प्रजापतिं तेन प्रीणाति। यदेनं यान्तमनुयाति श्रेयस्यो ब्रह्मवर्चस्यस्तेन सर्वान्[8] कामानवाप्नोति॥

'[9]विश्वरूपं' जगत्प्रवृत्तित्वात्। 'ब्रह्ममयत्वाद्' वेदमयत्वात्। 'ब्रह्मसंभवाद्' उपनयने ब्रह्मरूपाया गायत्र्या

1 तर्पयन्ते—ज; ब्राह्मणास्तर्पयन्ति—ब, द.

2 प्रीणयन्ति—उ, ब, द.

3 देवा: पितरो—वी. मि. आ.

4 स च स्कन्धतो न व्यथते न यातयामी—वी. मि. आ.

5 'अयं लोको न पर'—इति मातृकादृतपाठः; अत्र वी. मि. आ., पाठः स्वीकृतः.

6 इत: परं सूत्रद्वयं नास्ति—वी. मि. आ.

7 यस्यैवं यदाह—ब, द; नास्यैष यदाह—ज; तस्मै यदाह—वी. मि. आ.

8 सर्वकामान्—उ, ज, ब.

9 Manuscripts corrupt; reconstructed.

मातुः संभवत्वात्। 'ब्रह्मणि' वेदे सति सर्वदेवतातृप्तिः परामृश्यते। 'ब्राह्मणकारणाभिभाविनां' ब्राह्मणं जगत्कारणं येऽभिभवन्ति तेषां तथा[1] ॥

पुनर्हारीतः[2]

सर्वात्मना तु देवा वै ब्राह्मणेषु व्यवस्थिताः।
[3]अग्निवच्च द्विजं प्राहुस्तस्माद्विप्रोऽधिदैवतम् ॥
यथाग्नौ संस्थिता देवास्तद्वद्विप्रेषु संस्थिताः।

[4]आपस्तम्बः—[२, ६, ३–२, ८, ४]

अग्निरिव ज्वलन्नतिथिरभ्यागच्छति[5]। धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति[6]। स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोऽतिथिर्भवति। तस्य पूजायां शान्तिः स्वर्गः पुष्टिश्च[7]। तमभिमुखोऽभ्यागम्य यथावयः समेत्य तस्यासनमाहारयेत्[8]। शक्तिविषये नाबहुपादमासनं भवतीत्येके[9]। तस्य पादौ [10]प्रक्षालयेच्छूद्रमिथुनावित्येके। अन्यतरोऽभिषेचने स्यात्।

1 'अनभ्युत्तिष्ठतः' अभ्युत्थानमकुर्वतः। 'प्राणैः' प्राणदेवताभिः अपक्रान्ताभिः हेतुभूताभिः पापीयान्। 'यातयामत्वं' जीर्णत्वम्—वी. मि. आ., ४५०.

2 'पुनर्हारीतः' इति नास्ति—ब, ज, ना, द.

3 श्लोकोऽयमधिकः—ब, ज, ना, द.

4 वी. मि. आ., ४४३–४४६.

5 अतिथिः अग्निरिव ज्वलन्नभ्यागच्छति। तस्मादसौ भोजनादिभिरवश्यं तर्पयितव्यः। निराशस्तु गतो गृहान् दहेदिति—हरदत्तः.

6 स्वशाखामधीत्य 'श्रोत्रियो' भवति, न तु प्रतिवेदमेकैकामधीत्य श्रोत्रियो भवतीति। लोकविरोधात्—हरदत्तः.

7 'शान्तिः स्वर्गश्च'—मु. आप.

8 'यथावयः' वयसोऽनुरूपं प्रत्युत्थानाभिवादनादिना समेयात् सङ्गच्छेत्—हरदत्तः.

9 आपस्तम्बमतं तु बहुपादमासनं देयमिति—हरदत्तः.

10 प्रक्षालयेच्छूद्रमिथुनमित्येके—ना.

तस्योदकमाहारयेन्मृन्मयेनेत्येके[1] । नोदकमाहारयेदसमावृत्तः[2] । [3]अध्ययनसांवृत्तिश्चात्राधिका । सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवरार्ध्येनेत्येव[4] । आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति[5] । [6]अन्नसंस्कर्तारमाहूय व्रीहीन् यवान् वा तदर्थान्निर्वपेत् । [7]उद्धृतान्यन्नान्यवेक्षेतेदं [8]भूयो नेदमिति । भूय उद्धरेत्येव ब्रूयात् । [9]द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांसमानस्य मीमांसितस्य वा । पाप्मानं हि स तस्य भक्षयतीति विज्ञायते ॥ स एष प्राजापत्यः कुटुम्बिनो यज्ञो [10]नित्यप्रततः । योऽतिथीनामग्निः[11] स आहवनीयो यः कुटुम्बे[12] स गार्हपत्यो यस्मिन् पच्यते सोऽन्वाहार्यपचनः । ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति[13] गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति । पय [14]उपसेचनमन्नमग्निष्टोमसंमितं [15]सर्पिषोक्थ्य-

1 आपस्तम्बमतं तु तैजसेन पात्रेण—हरदत्तः.

2 'असमावृत्तः' ब्रह्मचारी—हरदत्तः.

3 अध्ययनस्य सहनिष्पादनम् 'अध्ययनसंवृत्तिः'—हरदत्तः.

4 इति—मु. आप., इत्येव—वी. मि. आ ; इतिशब्दादेवमादिभिरन्यैरपि—हरदत्तः.

5 'इति'शब्दादन्यदप्यपेक्षितम्—हरदत्तः.

6 अत्र संस्कर्तारं—ब, द.

7 उद्धृतान्यवेक्षेतेदं—वी. मि. आ.

8 भूया३ इदा३ मिति—मु. आप.

9 द्विषतो for द्विषन् द्विषतो—वी. मि. आ.

10 नित्यव्रतः—ब, द ; नित्यः—ना ; यज्ञप्रततः—वी. मि. आ.

11 'अतिथीनामग्निः' जाठरोऽग्निः स आहवनीयः, तत्र हि हूयते—हरदत्तः.

12 कुटुम्बार्थे—ब, द.

13 अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥
वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥

14 उपसेचनमग्निष्टोमसम्मितं—ज.

15 सर्पिषा षोडश्युक्थ्यसंमितं—वी. मि. आ; अग्निष्टोमोक्थ्यातिरात्राः ज्योतिष्टोमस्य संस्थाविशेषाः—हरदत्तः.

संमितं [1]मधुनातिरात्रसंमितं, मांसेन द्वादशाहसंमितमुदकेन प्रजावृद्धिरायुषश्च[2]। [3]प्रिया अप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते। स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति। [4]यदनुतिष्ठत्युदवस्यत्येव तत्[5]। यत्सान्त्वयति[6] सा दक्षिणा प्रशंसा। यत्संसाधयति ते विष्णुक्रमाः[7]। यदुपावर्तते सोऽवभृथः[8]। [9]इति ब्राह्मणम्। [10]राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत्। [11]आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात्[12]। व्रात्य[13] क्वाऽवात्सीरिति। व्रात्यो-

1 मधुनातिरात्रसंमितं—omitted by वी. मि. आ.

2 आप्रजावृद्धिरायुश्च—वी. मि. आ.

3 प्रियाश्चातिथयः स्वर्गलोकं—ब, ना, द; 'प्रियाः' प्रसिद्धाः, 'अप्रियाः' उदासीनाः, द्विषतो निषिद्धत्वात्—हरदत्तः.

4 यदुत्तिष्ठति—वी. मि. आ.

5 उदवसानीया नाम यज्ञसमाप्तौ क्रियमाणेष्टिः। उदवसाय क्रियते इति उदवसानीया—हरदत्तः.

6 'सान्त्वयति' प्रशंसति, सा प्रशंसा दक्षिणा—हरदत्तः; 'प्रशस्ता' इति—ब, वी. मि. आ.

7 'संसाधनं' अनुव्रजनम्—हरदत्तः; 'विष्णुक्रमाः' दर्शपूर्णमासयोः यजमानकर्तव्यतया विहिताः—आप. श्रौ. सू., ४, १४, ६; पदप्रक्षेपः—चिन्नस्वामी.

8 "वारुणेनैककपालेनावभृथमवयन्ति" इति विहितसोमयागस्यान्ते क्रियमाणस्तदङ्गभूत इष्टिविशेषोऽवभृथः—चिन्नस्वामी.

9 इति हि ब्राह्मणम्—मु. आप.

10 राजा अभिषिक्तः क्षत्रियः—हरदत्तः; 'राजा इत्येतानभिषिक्तानाचक्षते'—ऐ. ब्रा., ८, १४, ६.

11 आहिताग्निश्चेत्—उ, वी. मि. आ; यद्याहिताग्निमुद्दिश्यातिथिरभ्यागच्छेत्तत एनमतिथिं स्वयमेवाभिमुख उपसर्पेत्। अत्र स्वयमिति वचनादनाहिताग्निरन्येन शिष्यादिना कारयन्नपि न दुष्यति—हरदत्तः.

12 स्वयमेत्य ब्रूयात्—वी. मि. आ.

13 व्रते साधुर्व्रात्यः स एव व्रात्य इति पूजनाभिधानम्—हरदत्तः; 'व्रात्य' इत्येतदारभ्य 'स्वयमेनमभ्युदेत्य ब्रूयात्' इत्यन्तो भागः नास्ति—ब.

दकमिति। [1]व्रात्य तर्पयंस्त्विति। पुराऽग्निहोत्रस्य होमादुपांशु जपेत्। व्रात्य यथा ते मनस्तथास्त्विति। व्रात्य यथा ते [2]वशस्तथास्त्विति। व्रात्य यथा ते प्रियं तथास्त्विति। व्रात्य यथा [3]ते निकामस्तथास्त्विति। [4]यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत् स्वयमेनमभ्युदेत्य ब्रूयात्। व्रात्यातिसृज होष्यामीत्यतिसृष्टेन होतव्यमनतिसृष्टश्चेज्जुहुयाद्दोषं ब्राह्मणमाह। एकरात्रं [5]चेदतिथीन् वासयेत् पार्थिवाँल्लोकानभिजयति द्वितीययाऽऽन्तरिक्षांस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति विज्ञायते। [6]असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव [7]दद्यादेवमस्य समृद्धं भवति॥ येन कृतावसथः स्यादतिथिर्न[8] तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः। शेषभोज्यतिथीनां स्यात्। न रसान् गृहे भुञ्जीतानवशेषमतिथिभ्यः। नाऽऽत्मार्थमभिरूपमन्नं[9] पाचयेत्॥

'स्वधर्मयुक्तः' स्ववर्णाश्रमाचारवान्। 'धर्मपुरस्कारः' तीर्थयात्रादिधर्मकृत्यपरः, प्रकारान्तरेण प्राणधारणसमर्थो वा, न पुनरन्नलोलुपः। 'यथावयः समेत्य' अन्यूनसमाधि-

1 व्रात्यं—वी. मि. आ.

2 यशस्तथास्त्विति—वी. मि. आ.

3 तेऽतिकाय—वी. मि. आ.

4 यस्योद्धृतेष्वग्निषु—वी. मि. आ.

5 चेदतिथिं—वी. मि. आ.

6 विद्यादिभी रहितः 'असमुदेतः'—हरदत्तः.

7 ब्रूयात्—ना ; ददामीत्येवं दद्यात्—वी. मि. आ.

8 अतिथिं न प्रत्युपतिष्ठेत्—ना.

9 'अभिरूपमन्नं' स्वाद्वपूपादि—हरदत्तः.

कवयोऽनुसारेणातिथिं यथायोग्यमुपसंग्रहणादिना मिलित्वा। 'अबहुपादं' द्विपादपीठादिः। 'शूद्रमिथुनौ' शूद्रद्वयं, तयोर्मध्ये[1]। एको 'अभिषेचने' पादप्रक्षालनार्थमुदकदाने व्याप्रियेत। 'तस्य' अतिथेः 'उदकम्' अर्घ्यार्थमाहरेत्। 'मृन्मयेन' पात्रेण। 'नोदकमाहारयेत्' मृन्मयेनेत्यनुषङ्गः[2]। 'असमावृत्तो' ब्रह्मचारी चेदतिथिरभ्यागच्छति तदा तस्यार्घ्यादिदानानन्तरम् 'अध्ययनसंवृत्तिः' कर्तव्या, मिलित्वा तेन सह पठनीयं किंचित्[3]। 'सान्त्वयित्वा' पाठादनन्तरमभिजनादिभिः स्तुतिं कृत्वा[4]। 'रसैर्भक्ष्यैरद्भिरवरार्ध्येनेत्येव[5]', 'अवरार्ध्येन' जघन्यकल्पेन। रसाद्यसंभवेऽद्भिरपि तर्पयेदित्यनुषङ्गः। 'उपरिशय्या' खट्वादिका। 'उपस्तरणं' तूलिकादि। 'उपधानं' गेन्दुकादि। 'अवस्तरणं' तूलिकोपरिपटः। 'अभ्यञ्जनं' तैलादि। 'व्रीहीन्यवान् वे'ति तृप्तिसाधनार्थोपलक्षणमिदम्। 'उद्धृतानि' भोजनपात्रे कृतानि। 'ब्रूयात्' पत्नीमिति शेषः। [6]'दोषेण मीमांसमानस्य' दोषत्वेन विचार्यमाणस्य। 'मीमांसितस्य' दोषत्वेनैव। 'आत्मनः श्रेयसीम्' आत्मनः उत्कृष्टाम् 'पूजाम्'। 'व्रात्य

1 शूद्रद्वयोर्मध्ये—ना.

2 अपि तु तैजसेनेति स्वयं मन्यते—वी. मि. आ.

3 केंचित्—ना, ज, द, उ.

4 वी. मि. आ., adds—तं तर्पयेत्.

5 अशक्तावद्भिरवरार्ध्येनेत्येव जघन्यकल्पेन—वी. मि. आ.

6 वी. मि. आ., adds here—'अवेक्षेतेदं भूयो नेदमिति' अस्मै भोक्त्रे इदं पर्याप्तं नेदं भूय इत्यनुषङ्गः। 'भूय उद्धरेत्येव ब्रूयात्', पुनः परिवेषयेत्येव ब्रूयात्। अन्नसंस्कर्तारमित्यनुषङ्गः। 'द्विषतो वा नान्नमश्नीयात्' स्वयं द्वेषकर्ता सन् द्वेषकर्मीभूतस्य द्वेषकर्तुर्वा स्वयं द्वेषकर्मीभूतः सन्नन्नं नाऽश्नीयात्। एवमेव दोषं स्तेयादि स्वस्मिन् मीमांसमानस्य etc.

कावात्सी'रिति प्रश्नमन्त्रः[1] । 'व्रात्योदकम्' इत्युदकदानमन्त्रः । अग्निहोत्रहोमात् प्रागागतेऽतिथावेते 'व्रात्य' इत्यादिमन्त्राः 'उपांशु' उच्चारणीयाः । 'उद्धृतेषु' कृतविहारेषु[2] । 'अतिसृष्टः' आदिष्टः । 'ब्राह्मणं' विधायको वेदभागः । 'असमुदेतः' अपकृष्टः । 'ब्रुवाणः' अतिथिरस्मीति वदन् । 'श्रोत्रियाय ददामीति' बुद्धिं कृत्वेति शेषः । 'येन' गृहेण । 'कृतावसथः' दत्तवासः । 'तं' गृहिणं दृष्ट्वासौ नाऽऽसनात् 'प्रत्युत्तिष्ठेत्', खट्वादिभ्यश्च 'न प्रत्यवरोहेत्' । 'अतिथिभ्य' आगतेभ्यः लवणक्षीरादीन् रसाननवस्थाप्य न साकल्येन भुञ्जीत ॥

[3]पुनरापस्तम्बः—[२, ८, १४; २, ९, १–४]

अतिथिं निराकृत्य यत्र गते भोजने स्मरेत्ततो विरम्योपोष्य ॥ श्वोभूते यथामनसं तर्पयित्वा संसाधयेत् । यानवन्तमायानात् । यावन्नानुजानीयादितरम्[4] । अप्रतिभायां सीम्नो निवर्तेत ॥

'अतिथिं निराकृत्य' अतिथिधर्मेण [5]धृतं केनचिद्विस्मरणादिना[6] भोजनाद्यकारयित्वा । 'यत्र गते भोजने' यावत्पर्यन्तं गते भोजने, किंचित्कृतेऽर्धकृते वा 'स्मरेत्', 'ततो' भोजनाद् 'विरम्य' सायंभोजनमकृत्वा [7]संस्था-

1 कुशलप्रश्नमन्त्रः—वी. मि. आ.

2 कृतविवाहेभ्यः—ज.

3 Text and commentary reproduced by वी. मि. आ., ४४८—४४९.

4 इतरः—इति काशीमुद्रितापस्तम्बपाठः.

5 आगतं for धृतं—वी. मि. आ.

6 विस्मरणादिना निमित्तेन भो—ब, ज, ना, द.

7 स्थातव्यम् for संस्थातव्यम्—ना, वी. मि. आ.

तव्यम्। 'यथामनसं' यत्र यत्रास्य रुचिर्भवति तेन 'तर्पयित्वा'। 'संसाधनं' अनुव्रजनम्। 'यानवन्तम्' अश्वादियानयुक्तमतिथिमनुव्रजेत्। 'इतरम्' अयानवन्तं यावदनुज्ञामनुव्रजेत्। यदि त्वतिथेरनुज्ञातुं 'प्रतिभा' न भवति तदा [1]ग्रामसीमान्तं गत्वाननुज्ञातोऽपि निवर्तेत॥

वसिष्ठः—[११, १३–१५]

[2]ब्राह्मणायाभ्यागतायाप आनयन्ति। विज्ञायते हि। वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्मादप आनयन्ति। अन्यत्र वर्षाभ्यः। तां च शान्तिं जना विदुरिति। [3]तं भोजयित्वोपासीत। ततो गच्छन्तमासीमान्तमनुव्रजेत्। अनुज्ञानाद्वा॥

'ब्राह्मणाय' अतिथिरूपायाभ्यागतायान्नदानात्प्रथमतः पानाद्यर्थमुदकमानयन्ति। अत्रैव कारणाभिधानं 'वैश्वानर' इत्यादिना। न चैतदर्थमुदकानयनं सर्वदा। किं तु 'अन्यत्र वर्षाभ्यः' वर्षासु नेत्यर्थः। यतः 'तां हि शान्तिं जना विदुरिति', तामुदकाहरणलक्षणं 'शान्तिं' शमनं प्रार्थनाजनितं ते 'जनाः सर्वे विदुरिति'। अनेन प्रसिद्धिः सूचितेति भर्तृयज्ञः॥

[4]गौतमः—[५, ३३–३८]

श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्च प्रकारयेत्।

1 ग्रामे—ना.

2 सर्वोपयोगेन पुनः पाको यदि निरुप्ते वैश्वदेवेऽतिथिरागच्छेद्विशेषेणास्मा अन्नं कारयेत्। विज्ञायते हि। वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहं तस्मादप आनयन्त्यन्न वर्षाभ्यस्तां हि शान्तिं जना विदुरिति—मुद्रितवासिष्ठधर्मशास्त्रपाठः.

3 गृ. र., २९०.

4 गृ. र., २९२–२९३; आनन्दाश्रममुद्रितपुस्तके हरदत्तमिताक्षरा, ५, ३०–३३. Our manuscripts are defective and corrupt. गृ. र. reads कारयेत् for

नित्यं वा संस्कारविशिष्टम्। [1]मध्यतोऽन्नदानमवैद्ये साधुवृत्ते। विपरीते तु तृणोदकभूमि। स्वागतमन्ततः। पूजानभ्यासश्च॥

'अन्नविशेषाः' चोष्यपेयलेह्यादयः। 'प्रकारयेत्' पाचयेत्। 'नित्यं वा' यदि त्वन्नविशेषाणां दाने न समर्थस्तदा नित्यमेव यद्गृहे पच्यते तदेव विशेषपूजापूर्वकं दद्यात्। 'मध्यतः' साधारणेन सत्कारेण। 'अवैद्ये' विद्यासंबन्धरहिते। 'विपरीते' विद्याहीने। 'अनभ्यासो' अनतिक्रमः॥

<u>मनुः</u>—[३, १०५–१०७]

अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्॥
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।
धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम्[2]॥
आसनावसथौ शय्यामनुव्रज्यामुपासनम्।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम्॥

'अप्रणोद्यः' अनिराकार्यः। 'सूर्योढः' सूर्येणास्तंगच्छता प्रापितः[3]। उत्तमाधममध्यमेष्वागतेषु न समं

प्रकारयेत्, सत्कार for संस्कार, अन्नपानं for अन्नदानं, अविद्ये for अवैद्ये, तृणोदके भूमि for तृणोदकभूमि and पूजनमननाभ्यासश्च for पूजाऽनत्याशश्च in the identical text of Maskarin and Haradatta. ब, ज. ना and द read 'सत्कार' and 'अनभ्यासश्च.' उ omits four sūtras but supplies the commentary thereon.

1 यस्त्वश्रोत्रियो ब्राह्मणः साधुवृत्तो भवति, तस्मिन् उपस्थिते मध्यमेन संस्कारेणान्वितं देयमन्नम्। अन्नमेव देयं न पाद्यादीनि। अश्रोत्रियत्वादेव संस्कारवियोगो मा भूदित्येवमर्थं दानग्रहणम्। 'अन्ततः' आपदि तृणोदकानामसंभवे सति सूनृतां वाचमुच्चारयेत्—मस्करी.

2 Jolly reads भोजनम्; Medhātithi and Kullūka read पूजनम्.

3 सूर्येणोढः प्रापितः, दैवोपनीतत्वादवश्यं पूजनीयः—मेधातिथिः.

**सर्वेषामासनादि, किं तु 'उत्तमेषूत्तमम्' इति। 'काले[1]' वैश्वदेवान्ते[2] ॥**

[3]**अतिथिमाशयेदित्यभिधाय—**

**विष्णुः—[६७, ३१–३२]**

**यथा वर्णानां ब्राह्मणः प्रभुर्यथा स्त्रीणां भर्ता तथा गृहस्थस्यातिथिः। तत्पूजायां स्वर्गमाप्नोति ॥**

**तथा—[६७, ४४]**

**स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा।**
**न चाप्नोति गृही लोकान्यथा त्वतिथिपूजनात् ॥**

**तथा[4]**

**ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्येते [5]गृहाश्रमात्।**
[6]**तस्मादभ्यागतमतिथिं गृहस्थो नावमानयेत्[7] ॥**

**पैठीनसिः[8]**

[9]**विशेषतोऽन्नमतिथये दद्यात्। पुत्रं जातमुदीक्षन्ते श्रोत्रियं भोजयिष्यतीति[10] पितरः पितमहाः प्रपितमहाश्च।**

1 'अकाले' सायंभोजने निवृत्तेऽपि—मेधातिथिः.

2 'धन्यं' इत्यादि, अर्थवादोऽयं नित्यत्वादतिथिभोजनस्य—मेधातिथिः.

3 'अनाशितमतिथिं गृहे न वासयेत्'—विष्णुः, ६७, ३०; वी. मि. आ., ४५१; गृ. र., २९५.

4 वी. मि. आ., ४५१; मुद्रितविष्णुस्मृतौ नास्ति.

5 गृहाश्रयात्—उ.

6 तस्माद्गृहागतमतिथिं—ना.

7 न विमानयेत्—उ.

8 Not cited by गृ. र. and वी. मि. आ.

9 "नमो भगवते वासुदेवाय नमो नारायणाय" is found prefixed to this citation in उ, क, मि and A. S. B.

10 वसन्ति—ब; वलन्ति—ज, ना.

स्वागतेनाग्निरासनेनेन्द्रः पितरः पाद्येनान्नाद्येन[1] प्रजापतिः। यो वा एकं ब्रह्मेति[2] व्याख्यातं जानाति। राजन्यो वाऽतिथिर्भवति नेति विभाषा। भवतीत्येव। यस्यैवं विद्वान् गृहमितो[3] भवति तस्य यथा प्रियं तथा कुर्वीत। व्रात्य या ते प्रियमिति भवति तस्य प्रियांश्चाऽप्रियांश्च देवान् मनसा मत्वा तांस्तान्परिचरेत्[4]। तस्य व्रात्यो व्रात्यब्रुव इति हविर्भवति। क्षीरप्रभृतयो यज्ञा व्याख्याताः। संवत्सरो वातिथिः। तस्याङ्गानि सर्वा देवताः। समानमर्थं परियन्ति देवा इति विज्ञायते। सर्वान् संवत्सरमवरुन्धीत। न त्वेव भूतिं काङ्क्षेत्। यथाशक्ति तान् तान् परिचरेदित्याह। अम्बुशाकफलादीन् दद्यात्तान्यविचारयन्। अनिन्दितानि[5] प्रतिपादयन्नृषीणां याति सलोकतामिति। तृणानि भूमिरुदकं कल्याणी वाक् चेति सतां नगरे न क्षीयन्ते। एवंवृत्तावनन्तलोको भवति। दम्पती शयनीयाभ्यञ्जनस्नानेषु[6] विशेषं कुर्याताम्। स्वर्गलोकं च गच्छतः[7]। तदहर्गृहित्वं भवति[8]। विशिष्टं हुतं चाग्निभ्यश्च॥

'विशेषतोऽन्नं' मृष्टमन्नम्। 'यो वा एकं ब्रह्मेति' उपनिषत्सु 'व्याख्यातं' ब्रह्म 'जानाति' तं भोजयिष्यती-

1 अन्नाद्येन प्रजापतिः—ज.

2 So, ज, ना, द, ब; उ, क, मि read यो व्यापकं ब्रह्मेति; ब्रह्मेति राजन्यो—ज.

3 यद्यहमितो भवतीति—ब, द.

4 परिचरेदित्याह अम्बुशाकफलादीन्—ज.

5 अनृतानि प्रतिपादयन्—ना.

6 स्थानेषु—ना.

7 गच्छति—ना.

8 तदहर्गृहीतं भवति—उ.

त्यर्थः[1]। 'विभाषा' विकल्पः। स च नाव्यवस्थितः, किं तु गुणवान् सोऽपि भवत्येवाऽतिथिः। 'भूतिं' संपदम्, अतिथिपूजनार्थमिति शेषः। 'विशेषम्' उत्कर्षरूपम्। 'स्वर्गलोकं गच्छतो' दम्पतीत्यन्वयः। 'तदहः' यस्मिन्नहन्यतिथिः पूज्यते। 'गृहित्वम्' अतिथिपूजनार्थमिति शेषः। 'विशिष्टं हुतं च' विशिष्टं भवति तदहरित्यर्थः॥

याज्ञवल्क्यः—[१, १०९]

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्[2]।

[3]वसिष्ठः—[४, ८]

अथापि ब्राह्मणाय वा राजन्याय वाभ्यागताय महोक्षाणं वा महाजं वा पचेदेवमस्याऽऽतिथ्यं कुर्वन्तीति॥

अत्र[4] यद्यपि गृहागतश्रोत्रियतृप्त्यर्थं गोवधः कर्तव्य इति प्रतीयते, तथापि कलियुगे[5] नायं धर्मः। किं तु युगान्तरे। तदुक्तं [6]ब्रह्मपुराणे

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।
गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः॥ इति

1 राजयिष्यतीत्यन्वयः—ब, द, ज.

2 उपकल्पनवचनात्तदनुज्ञापेक्षो महोक्षादिवधः—विश्वरूपः; महान्तमुक्षाणं धौरेयं महाजं वा श्रोत्रियायोक्तलक्षणायोपकल्पयेद्—'भवदर्थमयमस्माभिः परिकल्पित'—इति। तत्प्रीत्यर्थं न तु दानाय व्यापादनाय वा—विज्ञानेश्वरः.

3 गृ. र., २९४; वी. मि. आ., ४५१.

4 अतः—ज; अत्र च—ना.

5 युगस्य—ना.

6 वी. मि. आ., ४५१–४५२.

[1]**बौधायनः**—[२, ५, ११–१३]

**सायं प्रातर्यदन्नः[2] स्यात्तेनान्नेन वैश्वदेवं बलिमुपहृत्य [3]ब्राह्मणक्षत्रियविट्शूद्रानभ्यागतान् [4]यथाशक्ति पूजयेत्। यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्यात्। यो वा [5]प्रथममागतः स्यात्॥**

**'सायं प्रातर्यदन्नः' सायं प्रातर्यदन्नभुग्भवति तेनान्नेन। 'वैश्वदेवं' विश्वे अनेके देवता यत्र तं 'बलिम्' इत्यर्थः। 'बहूनां न शक्नुयात्' यदा बहूनां ब्राह्मणादीनां दातुं न शक्नुयात् तदा 'एकस्मै गुणवते दद्यात्'। युगपदागमने 'गुणवते' दद्यात्। क्रमागमने तु 'प्रथममागताये'ति व्यवस्थितो विकल्पः॥**

[6]**आपस्तम्बः**—[२, ४, १६–२१]

**ब्राह्मणायानधीयानायाऽऽसनमन्नमुदकमिति देयम्। न प्रत्युत्तिष्ठेत्। [7]अभिवादनायैवोपतिष्ठेदभिवाद्यश्चेत्। राजन्यवैश्यौ च[8]। शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात्। [9]अथास्मै**

1 वी. मि. आ., ४५२.

2 सायंप्रातयदशनीयं—मु. बो; यदशनीयमित्यनेनाहविष्यस्यापि ग्रहणं केचिदिच्छन्ति। तत्पुनर्युक्तायुक्ततया परामृश्यम्। वैश्वदेवं कृत्वा बलिं चोपहृत्येत्यध्याहारः—**गोविन्दस्वामी.**

3 ब्राह्मणक्षत्रियवैश्यशूद्रान्—ब, द.

4 यथाशक्त्या—उ.

5 प्रथममुपागतः—मु. बो.

6 गृ. र., १९३.

7 अभिवादनायैवोत्तिष्ठेद्—मु. आप; यदि पुनरसावनधीयानोऽपि 'दशवर्षं पौरसख्यं' (१, १४, १३) इत्यादिना अभिवाद्यो भवति तदा अभिवादनायैवोत्तिष्ठेत्—**हरदत्तः.**

8 वा—ब, ज, ना, द.

9 तथास्मै—उ.

दद्यात् । दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः[1] ॥

'अभिवाद्यः' वयोधिकत्वादिना । 'राजन्यवैश्यौ च' प्रति नोत्तिष्ठेदिति [2]सम्बन्धो योग्यत्वात् । यस्य गृहिणः शूद्रोऽतिथिरभ्यागतस्तस्य दासास्तं शूद्रमतिथिधर्मेण कुर्युरित्यन्वयः । 'राजकुलात्' निजस्वामिकुलात् ॥

[3]शङ्खलिखितौ

नाब्राह्मणोऽतिथिर्ब्राह्मणस्य । श्रोत्रियाय गुणवत आतिथ्यम् । [4]राजन्यवैश्याभ्यां मित्रवत् । शूद्रायाऽऽनृशंस्यार्थम् ॥

'आतिथ्यं' यथावत् कर्तव्यमिति शेषः । अन्येषां तु [5]'मित्रवद्' अन्नमात्रं देयमित्यर्थः । 'आनृशंस्यार्थम्' अक्रूरत्वार्थम् ॥

गौतमः—[५, ४२-४५]

कुशलानामयारोग्याणामनुप्रश्नोऽन्त्यं शूद्रस्य । ब्राह्मणस्यानतिथिरब्राह्मणोऽयज्ञे संवृतश्चेत् । भोजनं तु क्षत्रियस्योर्ध्वं ब्राह्मणेभ्यः । अन्यान् भृत्यैः सहानृशंस्यार्थम् ॥

'अनुप्रश्नः' [6]आनुपूर्व्येण वचनम् । 'अन्त्यम्' आरोग्यम् । 'अब्राह्मणः' क्षत्रियादिः । 'संवृतः' संकुचितो

1 अथवा ये अस्य गृहमेधिनो 'दासा'स्ते 'राजकुलादाहृत्य' तं 'शूद्रमतिथिवत् पूजयेयुः' । अत एव ज्ञायते शूद्राणामतिथीनां पूजार्थं व्रीह्यादिकं ग्रामेग्रामे राज्ञा स्थाप्यमिति—हरदत्तः.

2 अभिसंबन्धः—ब, ज, द.

3 वी. मि. आ., ४५२; गृ. र., २९३.

4 राजन्यवैश्यानां—ब, द.

5 मित्रवदन्नदानं देयं—ब, द.

6 अतिथिपूर्वेण वचनं—ब, द; आनुपूर्वेणातिथिः प्रष्टव्यः—मस्करी.

धनाद्यभावेन, दरिद्र इति यावत्। एतच्च विशेषणं गृहस्थस्य। 'अन्यान्' वैश्यशूद्रान्, भोजयेदिति शेषः ॥

[1]शातातपः

जन्मनैव महाभागो ब्राह्मणो नाम जायते।
नमस्यः सर्वभूतानां [2]जन्मश्रेष्ठः पिता गुरुः ॥
[3]नास्त्येषां पूजिनीयोऽन्यस्त्रिषु लोकेषु कश्चन।
तपोविद्याविशेषेण पूजयन्ति परस्परम् ॥
अन्योन्यं गुरवो विप्रा अन्योन्यातिथयः स्मृताः।
अन्योन्यमुपकुर्वन्तस्तारयन्ति तरन्ति च ॥
यो हि यां देवतामिच्छेदाराधयितुं कश्चन।
सर्वोपायप्रयत्नेन संतोषयति ब्राह्मणान् ॥
देवता [4]द्रव्यभूतेषु क्वचित्काश्चित्प्रतिष्ठिताः।
ब्राह्मणा देवताः सर्वा अतस्तान्पूजयेत्सदा ॥
आसनाशनशय्याभिरद्भिर्मूलफलेन वा।
[5]नास्य कश्चिद्वसेद्गेहे शक्तितो नार्चितोऽतिथिः ॥
पाखण्डिनो विकर्मस्थान् वैडालवृतिकान् शठान्।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥

'[6]पाखण्डिनः' वेदबाह्यागमानुष्ठातारः। 'विकर्मस्थाः' आश्रमस्था एवानापदि स्वाश्रमधर्मानुष्ठानरहिताः।

1 वी. मि. आ., ४५२–४५३ ; गृ. र., २९५.

2 वर्णश्रेष्ठः—ब, द, ज, ना.

3 नान्येषां पूजनं योन्यस्त्रिषु लोकेषु—ब, पु, द, ज ; न तेषां पूजनीयोऽस्ति—ना.

4 'द्रव्यभूतेषु' इति, ताम्रादिद्रव्यप्रभवेषु। 'क्वचित्' केषुचित्स्थानेषु 'काश्चित्' देवताः 'प्रतिष्ठिताः' इति संबन्धः—वी. मि. आ.

5 न त्वस्य कश्चिदुत्सङ्गे शक्तितो नार्चितो भुवि—ब, द.

6 Reproduced by वी. मि. आ., ४५३.

'बैडालवृतिकः' "[1]धर्मध्वजी सदा लुब्धः" इत्यादिना मनुनोक्तः। 'शठः' कर्मकरणसमर्थोऽपि व्याजेन धर्माननुष्ठायी। 'हैतुकाः' [2]वेदविरुद्धतर्कव्यवहारिणः। 'बकवृत्तयः' "[3]अधोदृष्टिः" इत्यादिना कथिताः। 'वाङ्मात्रेणापि नार्चयेदि'ति [4]सर्वप्रकारमर्चनं निषिध्यते। अन्नदानमात्रं तु न निषिध्यते ॥

[5]शातातपः पराशरश्च प्रथमे

> [6]प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
> [7]वैश्वदेवे तु संप्राप्ते सोऽतिथिः स्वर्गसंक्रमः ॥
> भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा।
> असंभवे सदा दद्यादुदपात्रमथापि वा ॥
> ग्रासमात्रा भवेद्भिक्षा पुष्कलं तु चतुर्गुणम्।
> पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः ॥

'प्रियः' जामातादिः। 'द्वेष्यः' शत्रुः। 'मूर्खः' अध्ययनरहितः। 'पण्डितः' यथास्वरूपं प्रमाणतो ज्ञात्वा दृष्टादृष्टफलदातृकर्मानुष्ठाता। 'स्वर्गसंक्रमः' नदीसंक्रमवत् प्राप्तिहेतुः ॥

1 धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः।
बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः ॥ मनुः, ४, १९५.

2 हेतुकाः वेदविरुद्धकर्मव्यवहारिणः—उ.

3 अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः।
शठो मिथ्याविनीतश्च बकव्रतपरो द्विजः ॥ मनुः, ४, १९६.

4 सर्वथार्चनं—ब, ज, द.

5 गृ. र., २९५–२९६; वी. मि. आ., ४३७–४३८ and ४३५.

6 पराशरस्मृतिः, १, ४०.

7 प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः—वी. मि. आ.

[1]दक्षः—[३, ५–८]

[2]सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ॥
अभ्युत्थानमिहागच्छ पूर्वालापः प्रियान्वितः ।
उपासनमनुव्रज्या कार्याण्येतानि यत्नतः ॥
[3]ईषद्वस्तूनि चान्यानि भूमिरापस्तृणानि च ।
पादशौचं तथाभ्यङ्गमाश्रयः शयनं तथा ॥
किंचिद्रात्रौ यथाशक्ति नास्यानश्नन् गृहे वसेत् ।
[4]मृज्जलं चार्थिने देयमेतान्यपि सदा गृहे[5] ॥

'[6]सुधावस्तूनि' अनायाससंपाद्यानि । 'उपासनं' समीपे स्थितिः । 'ईषद्वस्तूनि कार्याणी'ति संबन्धः । [7]ईषद्वस्तुत्वमल्पायाससाध्यत्वात् । 'शयनं किंचिदि'ति संबन्धः ॥

[8]यत्यधिकारे पुनर्दक्षः[9]—[७, ३९–४३]

तपोजपैः कृशीभूतो व्याधिनावसथार्हकः[10] ।
वृद्धो ग्रहगृहीतश्च यश्चान्धो विकलेन्द्रियः ॥
नीरुजश्च युवा चैव [11]भिक्षुर्नावसथार्हकः ।

1 गृ. र., २९९.
2 मुधावस्तूनि—उ ; स्वधावस्तूनि—ज.
3 इषद्व्ययानि—ब, द, ज ; ईषद्दानानि—ना.
4 मृज्जले चार्थिने—उ.
5 गृहे सताम्—ज.
6 मुधावस्तूनि—उ ; स्वधावस्तूनि—ज.
7 ईषद्वस्तूनि अप्रयत्नसाध्यानि । उपासनमन्तिके—गृ. र.
8 यत्यधिकारेषु पुनर्दक्षः—उ.
9 गृ. र., २९९–३००.
10 व्याधितोऽवसथार्हकः—उ, गृ. र.
11 'नीरुजश्च युवा चैव ब्रह्मचर्याद्विनश्यति'—इति पाठेन मध्यस्थितपादचतुष्टयं न लभ्यते आनन्दाश्रममुद्रितदक्षस्मृतौ, ८४.

स दूषयति तत्स्थानं वृद्धः पीडयतीति च ॥
नीरुजश्च युवा चैव ब्रह्मचर्याद्विनश्यति ।
ब्रह्मचर्याद्विनष्टस्तु कुलं गोत्रं च नाशयेत् ॥
वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते ।
तस्यावसथनाथस्य मूलान्यपि निकृन्तति ॥
[1]आश्रमे तु यतिर्यस्य विश्राम्यति मुहूर्तकम् ।
किं तस्यान्येन धर्मेण कृतकृत्यो हि स स्मृतः[2]॥
जन्मप्रभृति यत्पापं गृहस्थेन तु संचितम् ।
निर्मार्जयति [3]तत्सर्वमेकरात्रोषितो यतिः ॥

'आवसथार्हको' गृहे वासयितुं योग्यः । 'वृद्ध' इत्यसमर्थोपलक्षणम् । 'ग्रहगृहीतः' भूताभिभूतः ॥

[4]यमः

नाग्निहोत्रेण दानेन नोपवासोपलेपनैः ।
देवताः परितुष्यन्ति यथा चातिथिपूजनैः ॥
अतिथिः पूजितो यत्तु ध्यायेत मनसा शुभम् ।
[5]न तत् क्रतुशतैर्वापि तुल्यमाहुर्मनीषिणः ॥
[6]चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्तु सूनृताम् ।
उत्थाय चासनं दद्यात्स धर्मः पञ्चलक्षणः ॥
आसनं पादशौचं च दीपमन्नं प्रतिश्रयम् ।

1 वी. मि. आ., ४५३.

2 संस्मृतः—ज.

3 तत्पापं—ना.

4 गृ. र., ३००–३०१; (दक्षः इत्यनुवृत्तौ) तथा—वी. मि. आ., ४५३–४५४; मुद्रितदक्षस्मृतिषु नोपलभ्यन्तेऽधस्तनाः श्लोकाः.

5 तत्तु क्रतुशतैर्वापि—उ.

6 Omitted by गृ. र., ३००.

[1]दद्यादेतानि यः पञ्च स यज्ञः सर्वदक्षिणः ॥
अन्नदः प्राणदो ज्ञेयो [2]दीपदो वस्त्रदः स्मृतः ।
स हि सर्वप्रदो नाम यो ददाति प्रतिश्रयम् ॥
गृहस्थैरपि यद्भुक्तं स्नातकैर्वेदपारगैः ।
यतिना वापि यद्भुक्तं तच्छ्रेयो नेतरैस्तथा ॥
यत्किंचित्कुरुते ध्यायी [3]दातुरर्धं प्रयच्छति ।
तस्मान्महत्फलं दानं ध्यायिने स्नातके तथा[4] ॥
अश्वमेधसहस्रेण राजसूयशतेन च ।
पुण्डरीकसहस्रेण योगिष्वावसथो वरः[5] ॥
[6]श्रान्तायादृष्टपूर्वाय [7]प्रियायाध्वनि वर्तिने ।
ददाति योऽन्नमक्लिष्टं स यज्ञः सर्वदक्षिणः ॥

'प्रतिश्रयः' वासार्थं गृहम् । 'श्रेयः' अतिप्रशस्तम् । 'इतरैः' यथोक्तगृहस्थादन्यैः । 'पुण्डरीको' यज्ञविशेषः । 'अक्लिष्टं' [8]सत्कृतम् ॥

[9]<u>बृहस्पतिः</u>

आगतस्यासनं दद्याच्छ्रान्तस्य[10] शयनं तथा ॥
[11]तृषार्तस्य तु पानीयं क्षुधितस्य तु भोजनम् ।

1 ददात्येतानि यो भक्त्या—ब, द ; ददात्येतानि यः पञ्च—ज, ना.
2 रूपदो—ना.
3 दातुरर्थं—उ.
4 स्नातकेऽथवा—ज.
5 'वरः' श्रेयः अतिप्रशस्तम्—ना.
6 पात्रायादृष्टपूर्वाय—ज ; शान्तायादृष्टपूर्वाय—उ.
7 विप्रायाध्वनि वर्तिने—ब, द, ज.
8 उत्कृष्टम्—ब, ज, ना, द.
9 गृ. र., २९८–२९९.
10 दद्याच्छान्तस्य—उ.
11 तृषितस्य—ब, ज, ना, द.

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ॥
एष साधारणो धर्मश्चातुर्वर्ण्येऽब्रवीन्मनुः ।
[1]प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः ॥
पितरः पादशौचेन भोजनेन प्रजापतिः ।
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ॥
तावत्पुष्करपात्रेण पिबन्ति पितरो जलम् ।
यस्याध्वखिन्नाः पथिका गृहमायान्ति कर्षिताः ॥
पूज्यन्ते तृणभूम्याद्यैः पितरस्तेन पुत्रिणः ।

'कर्षिताः' पीडिताः ॥

'अतिथये दद्याद्' इत्यनुवृत्तौ—

[2]विष्णुः—[६७, ४६]

प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं [3]सदीपकम् ।
प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम् ॥

[4]यमः

येषामनश्नन्नतिथिर्विप्राणां प्रव्रजेद्गृहात्[5] ।
ते वै खरत्वमुष्ट्रत्वमश्वत्वमुपपेदिरे ॥
यस्य चैव वसेद्विप्रो गृहे कश्चिदभोजितः ।
न तस्य देवाः पितरो हव्यं कव्यं च भुञ्जते ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।

1 वी. मि. आ., ४३४.
2 गृ. र., ३०१.
3 प्रदीपकम्—ब, द.
4 गृ. र., ३०१–३०२.
5 विप्राणां वा व्रजेत् गृहात्—ब, द; विप्राणां व्रजते गृहात्—ज, ना.

[1]सुकृतं तस्य यत्किंचित् सर्वमादाय गच्छति ॥
अतिथिर्यत्र वै ग्रामे भिक्षमाणः प्रयत्नतः ।
शेते निरशनस्तत्र ब्रह्महत्या विधीयते ॥
[2]अपि शाकं पचानस्य शिलोञ्छेनापि जीवतः ।
स्वदेशे परदेशे वा नातिथिर्विमना भवेत् ॥
अग्नयोऽतिथिमिच्छन्ति सोऽतिथिः स्वर्गमिच्छति ।
स्वर्गोऽपीच्छति दातारं सम्यक् सुकृतकारिणम् ॥

[3]पराशरः—[१, ४५]

अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
[4]न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च ॥
[5]अग्निहोत्रं जरत्कन्या द्वारे च पशुबन्धनम् ।
अतिथिर्वैश्वदेवान्ते निर्दहन्त्यवमानिताः ॥

'जरत्' जरायुक्ता। 'द्वारे पशुबन्धनं' [6]काले यवसोदकाद्यदाने सति ॥

[7]देवलः

[8]न पृच्छेद्गोत्रचरणं स्वाध्यायं देशजन्मनी ।
भिक्षितो ब्राह्मणैरन्नं दद्यादेवाविचारयन् ॥
अतिथिर्गृहमभ्येत्य यस्य प्रतिनिवर्तते ।

1 सुकृतं यस्य यत्किंचित् पुण्यमादाय गच्छति—उ.
2 वी. मि. आ., ४५४.
3 गृ. र., ३०२.
4 पितरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च—ना.
5 Not found in the printed editions.
6 स्वकाले रसोदकाद्यदाने सति—ब, द; स्वकाले—ज, ना.
7 गृ. र., २९८.
8 न पृच्छेद्योनिचरणं—ना.

असंस्कृतो निराशश्च सद्यो [1]हन्ति च तत्कुलम् ॥

[2]**यमः**

अतिथिं पूजयेद्यस्तु [3]श्रान्तं चादृष्टपूर्वकम् ।
सवृषं गोशतं तेन दत्तं स्यादिति मे मतिः ॥
न पृच्छेद्गोत्रचरणं देशं नाम कुलं श्रुतम् ।
अध्वनोऽभ्यागतं विप्रं भोजनार्थमुपस्थितम् ॥
[4]देशं नाम कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति ।
न स तत्फलमाप्नोति दत्वा स्वर्गं न गच्छति ॥

[5]**पराशरशातातपौ**

[6]न पृच्छेद्गोत्रचरणं स्वाध्यायं जन्म चैव हि ।
[7]चित्तं हि भावयेत्तस्मिन्व्यासः स्वयमुपागतः ॥

[8]**यमः**

देशं गोत्रं कुलं विद्यामन्नार्थे यो निवेदयेत् ।
वैवस्वतेषु धर्मेषु वान्ताशी स निरुच्यते ॥

[9]**मनुः**—[३, १०८]

वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।

1 हन्तीति—उ.
2 गृ. र., २९७–२९८ ; वी. मि. आ., ४५४.
3 श्रान्तं वाऽदृष्टपूर्वकम्—उ.
4 स्मृत्यन्तरे—वी. मि. आ., ४३०.
5 पराशरः, १, ४८ ; वी. मि. आ., ४३०.
6 नपृच्छेज्जन्मचरणं स्वाध्यायं गोत्रमेव हि—ब, द ;
न पृच्छेद्गोत्रचरणे न स्वाध्यायं श्रुतं तथा ।
हृदये कल्पयेद्देवं सर्वदेवमयो हि सः ॥ इति मुद्रितपराशरपाठः.
7 स्वं चित्तं—वी. मि. आ.
8 गृ. र., २९८ ; वी. मि. आ., ४३०.
9 गृ. र., ३०२.

तस्मादन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

'[1]वैश्वदेवे' सर्वार्थपाके। 'निर्वृत्ते' कृतप्रयोजने, निःशेष इति यावत्। 'अतिथिः' अतिथिलक्षणोपेतः। 'बलिं हरेद्' इति मनुष्ययज्ञव्यतिरिक्तपाकयज्ञोपलक्षणम् ॥

[2]अथ याज्ञवल्क्यः—[१, १११]

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥

'अध्वनीनः' सततमध्वगामी। 'श्रोत्रियः' [3]एकशाखाध्याय्यपि।

[4]तथा च बौधायनः

[5]एकां शाखामधीत्य श्रोत्रियो भवति। इति

[6]मनुर्विष्णुः शातातपश्च द्वितीये

एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥
नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।

1 Reproduced by गृ. र., ३०२.

2 गृ. र., २९६; वी. मि. आ., ४५४.

3 एकशीर्षाध्याय्यपि—उ.

4 Not found in printed texts of Bodhāyana. But see Āpastamba-dharma sūtra, २, ६, ४., 'धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति।'

5 एकां शीर्षामधीत्य—उ.

6 वी. मि. आ., ४३८; गृ. र., २९६, २९७; मनुः, ३, १०२–१०३; विष्णुः, ६७, ३४–३५.

उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोपि वा ॥

अयमर्थः—एकां रात्रिं वसतोऽतिथित्वं, न ततः परम्। एकारात्रेरपि न क्षत्रियादेः। '[1]एकग्रामीणः' एकग्रामवासी। 'साङ्गतिकः' [2]यश्चित्रपरिहासकथादिभिः सर्वैः सह संगच्छेत्। एतौ च वैश्वदेवकालोपस्थितावपि नातिथी। 'गृहे' नित्यनिवासस्थाने। न केवलं गृह एवातिथिः। किं तु भार्यादिना प्रोषितस्य ग्रामान्तरे वने वा, भार्या अग्नयश्च यत्र भवन्ति तत्राप्युपस्थितमतिथिं विजानीयात् इति मेधातिथिः ॥

[3]यमः

तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुः ॥
व्रती यतिरेकरात्रं निवसन्नुच्यतेऽतिथिः।
यस्मान्नित्यं न वसति तस्मात्तमतिथिं विदुः ॥

'पर्वाणि' अमावास्यादीनि। 'उत्सवाः' विवाहादयः। 'तिथिः' तद्व्यतिरिक्ता दीपमालिकाप्रतिपदादिः[4]। एते धर्मपुरस्कारेणान्नविशेषप्राप्तिहेतवो 'येन त्यक्ताः' 'सोऽतिथिः'। "धर्मपुरस्कारो [5]नान्यप्रयोजनः सोऽतिथिः" इत्यापस्तम्ब-[२, ६, ५] वचनात् ॥

1 एक इत्यारभ्य उपलभ्यते—A. S. B.

2 यश्चित्रहासकथाभिः—ब, द; यश्चित्रपरिहासादिभिः सर्वैः—उ; यत्र यत्र परिहासकथाभिः सर्वैस्सह संगतः—ना.

3 गृ. र., २९७, २९६; वी. मि. आ., ४३८.

4 तद्व्यतिरिक्ता दीपालिकाप्रतिपदादि—ब, ज, द, ना.

5 वान्नप्रयोजनः—उ; नान्नप्रयोजनः—ना; नान्यप्रयोजनः—इति मुद्रितपाठः.

[1]गौतमः—[५, ४१]

असमानग्रामो वातिथिरेकरात्रिकोऽधिवृक्षसूर्योपस्थायी ॥

'एकरात्रिकः' एकरात्रवसनशीलः । '[2]अधिवृक्षसूर्य'शब्दः सायंकालपर इति मस्करिभर्तृयज्ञौ ॥

[3]पराशरः शातातपश्च प्रथमे

अचिन्तितमनाहूतं देशकाल उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥
क्षुधार्तस्तृषितः श्रान्तो दूरादध्वन आगतः ।
तं पूयजेत् प्रयत्नेन सोऽतिथिः स्वर्गसंक्रमः ॥

'[4]देशो' भार्याग्निसन्निहितः । 'कालो' वैश्वदेवान्तादिः ॥

[5]मनुविष्णू

इतरानपि सख्यादीन् संप्रीत्या गृहमागतान् ।
प्रकृत्यान्नं यथाशक्ति भोजयेत् सह भार्यया ॥

'सख्यादीन्' इत्यादिशब्देन संबन्धिबान्धवानामुपादानम् । 'प्रकृत्य' प्रकर्षेण [6]सत्कृत्य । 'सह भार्यया'

1 गृ. र., २९६.

2 अधिवृक्षसूर्यशब्देन सायंकाल उच्यते—इति मस्करी, १०५ ; This reference is helpful in determining the date of Maskarin. Many comments of Maskarin are identical with Laksmīdharā's comments. Haradatta's commentary is not known to Laksmīdhara and is probably later.

3 शातातपः—गृ. र., २९७ ; पराशरशातातपौ प्रथमे—ना.

4 Reproduced by गृ. र., २९७.

5 मनुः, ३, ११३ ; विष्णुः, ६७, ३८ ; गृ. र., ३०३.

6 संस्कृत्य—उ.

भार्यासहितो गृहस्थस्तान् 'भोजयेत्'। भार्यापि परिवेषणादि कुर्यादित्यर्थः ॥

[1]याज्ञवल्क्यः—[१, १०८]

[2]भोजयेच्चागतान्काले सखिसंबन्धिबान्धवान् ॥

[3]तथा—[१, ११३]

अहःशेषं [4]सहासीत शिष्टैरिष्टैश्च बन्धुभिः ॥

'काले' भोजनकाले ॥

आपस्तम्बः—[२, ८, ४-११]

समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसंगृह्य न बीभत्समान उदकमुपस्पृशेत्[5] पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत्। आसने शयने भक्ष्ये भोज्ये वाससि वा सन्निहिते निहीनतरवृत्तिः स्यात्। तिष्ठन् सव्येन पाणिनानुगृह्याऽऽचार्यमाचामयेत्। अन्यं वा समुदेतम्। स्थानासनचङ्क्रमणस्मितेष्वनुचिकीर्षन्। सन्निहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासनिष्ठीवनदन्तस्खलननिश्शृङ्खणभ्रुक्षेपणतालननिष्ठ्यानीति। दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत्। वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेत्। श्रेयसां च ॥

1 गृ. र., ३०३.

2 भोजयेत्स्वागतान् काले—गृ. र.

3 गृ. र., ३०३, omits **तथा** and reads both the lines as one verse.

4 समासीत—ब, द.

5 बीभत्समान उदकं संस्पृशेत्—उ ; बीभत्समान उदकमभिस्पृशेत—ना ; यद्यपि तस्य चण्डालादिस्पर्शः संभाव्येत तथापि न बीभत्समान उदकमुपस्पृशेत्, न स्नायात्। उपसंग्रहणे धूलिधूसरौ पादौ स्पृष्ट्वा न बीभत्समान उदकमुपस्पृशेत्—**हरदत्तः**.

'तस्योपसंगृह्य' पादाविति शेषः। 'न बीभत्समान उदकमुपस्पृशेत्' आचार्यस्य [1]चरणप्रक्षालने स्पर्शे घृणां कुर्वन् हस्तप्रक्षालनं न कुर्यात्। 'पुरस्कृत्य' चरणप्रक्षालनानुलेपनादिनाऽऽतिथ्यं कृत्वा। 'उपस्थाप्य' सर्वमेतद्धनशरीरादि भवदीयमिति निवेद्य। 'यथोपदेशं' यथाशास्त्रम्। 'सन्निहिते' गुरौ। 'तिष्ठन् आचार्यमाचामयेत्' नोपविष्टः। 'सव्येन पाणिनानुगृह्य' दक्षिणेन पाणिना गृहीतं जलपात्रं पश्चाद्वामेनापि गृहीत्वा। 'अन्यं वा समुदेतम्' आचामयेदित्यनुषङ्गः। [2]तच्चाचमनमाचार्यवदेव समुदेतस्याप्युक्तसत्कारादिपूर्वकं बोद्धव्यम्, तथाविधस्यैव प्रकृतत्वात्। 'अनुचिकीर्षन्' स्नानादिक्रियासु वर्तमाने आर्ये स्वयमपि पश्चात्तथा। 'सन्निहिते' आचार्य इति शेषः। 'दन्तस्खलनं' दन्तधावनम्। 'निश्शृङ्खणं' नासामलोत्सर्जनम्[3]। 'तालनं' हस्तवाद्यम्। 'निष्ठ्यं' विट्श्लेषः। 'आदि'शब्देन नृत्यगीतवाद्याद्युपसंग्रहः। 'प्रजायाम्' अपत्ये। 'उपस्पर्शनम्' अङ्गपरिष्वङ्गः। 'भाषा' संभाषणम्, [4]एतत्प्रणयपूर्वकं वर्जयेत्। 'श्रेयसां' श्रेष्ठपुरुषाणामप्यन्येषाम्, 'प्रतिघातं वर्जयेद्' इत्यन्वयः[5]॥

[6]<u>गौतमः</u>—[९, २७-३२]

[7]आचार्यपितृसखीनां तु निवेद्य वचनक्रिया। ऋत्वि-

1 चरणस्पर्शे घृणां—ज, ना.
2 तच्चाचमनमाचार्यस्येव समुदितस्याप्युक्तं—ब, द; तथाचमन—उ.
3 सिंहणिकोत्सर्गः—ना; सिंहलिकोत्सर्जनम्—ब, द.
4 एतत्प्रणवपूर्वकं—उ.
5 इत्यर्थः—ज.
6 वी. मि. आ., ४५४; गृ. र., ३०३-३०४.
7 आचार्यपितृव्यसखीनां—वी. मि. आ.

गाचार्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः। संवत्सरे पुनः। यज्ञविवाहयोरर्वाक्। राज्ञश्च श्रोत्रियस्य। अश्रोत्रियस्यासनोदके॥

'आचार्यपितृसखीनां' गृहागतानाम्। 'निवेद्य' सिद्धमन्नादि। 'वचनक्रिया' यत्ते ब्रुवते तत्करणम्। ऋत्विगादीनां तु 'उपस्थाने' गृहागमने[1] सति मधुपर्केण पूजा कर्तव्या। 'संवत्सरे पुनः' 'उपस्थाने मधुपर्क' इत्यन्वयः। 'यज्ञविवाहयोरर्वाग्' इति, यज्ञविवाहयोरुपस्थाने संवत्सरादर्वागपि मधुपर्को देय इत्यर्थः। 'राज्ञ' इति, श्रोत्रियस्य सतो राज्ञः संवत्सरादर्वागपि मधुपर्को देयः[2]। 'अश्रोत्रियस्य' [3]राज्ञ आसनोदके एव देये न मधुपर्कः॥

[4]<u>मनुः</u>—[३, ११९–१२०]

> राजर्त्विक्स्नातकगुरून् प्रियश्वशुरमातुलान्।
> [5]अर्हयेन्मधुपर्केण प्रतिसंवत्सरात्पुनः[6]॥
> राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ।
> मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः॥

1 गृहागते—उ.

2 ज्ञेयः—ना.

3 इतः परं A.S.B. कोशे ग्रन्थपातः.

4 वी. मि. आ., ४५४–४५५; गृ. र., ३०३.

5 अर्चयेन्मधुपर्केण—वी. मि. आ.

6 परिसंवत्सरात्पुनः—ब, द, कुल्लूकः; राज्याभिषिक्तः क्षत्रियो राजा, ऋत्विक् यज्ञे यस्यार्त्विज्यं कृतम्, स्नातको विद्याव्रताभ्याम्, प्रियो जामाता। राजादीनेतान् सप्त गृह्योक्तेन मधुपर्काख्येन कर्मणा पूजयेत्। परिसंवत्सरादिति संवत्सरं वर्जयित्वा तदूर्ध्वं गृहागतान् पुनर्मधुपर्केण पूजयेत्। 'पञ्चम्यपाङ्परिभिः' (२, ३, १०) इति सूत्रेण वर्जनार्थपरियोगेनेयं पञ्चमी। अत एवैतत्सूत्रव्याख्याने जयादित्येनोक्तम् 'अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणम्' इति। मेधातिथिस्तु 'परिसंवत्सरान्' इति पठित्वा परिगतो निष्क्रान्तः संवत्सरो येषां तान् पूजयेदिति व्याख्यातवान्। उभयत्रापि पाठे संवत्सरमध्यागमने न मधुपर्कार्हता—कुल्लूकः.

याज्ञवल्क्यः—[१, ११०]

प्रतिसंवत्सरं त्वर्घ्याः[1] स्नातकाचार्यपार्थिवाः ।
प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विजः पुनः ॥

बौधायनः—[२, ६, ३५–३७]

पूज्यान्पूजयेत् ।

ऋषिविद्वन्नृपवरमातुलश्वशुरर्त्विजः ।
एतेऽर्घ्याः शास्त्रविहिताः स्मृताः कालविभागशः[2] ॥
ऋषिविद्वन्नृपाः प्राप्ताः क्रियारम्भे वरर्त्विजौ ।
मातुलश्वशुरौ पूज्यौ संवत्सरगताविति[3] ॥

'[4]ऋषिः' मन्त्रदृक् । 'विद्वान्' वेदार्थवित् । 'नृपः' अभिषिक्तः क्षत्रियो धर्मेण प्रजापालकः । 'प्राप्ताः' गृहमिति शेषः । 'क्रियारम्भेषु' यज्ञविवाहादिषु ॥

[5]आपस्तम्बः—[२, ८, ५–९]

गोमधुपर्कार्हो वेदाध्यायः । आचार्य ऋत्विक् स्नातको राजा वा धर्मयुक्तः । आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च । दधि मधुसंसृष्टं मधुपर्कः पयो वा मधुसंसृष्टम् । अभाव उदकम् ॥

1 अच्र्याः—उ; एते स्नातकादयः प्रतिसंवत्सरं गृहमागता 'अर्घ्या' मधुपर्केण संपूज्या वन्दितव्याः । अर्घशब्दो मधुपर्कं लक्षयति । ऋत्विजश्चोक्तलक्षणाः संवत्सरादर्वागपि प्रतियज्ञं मधुपर्केण संपूज्याः—विज्ञानेश्वरः.

2 'अर्घ्याः' मधुपर्कार्हा इति शास्त्रेण वेदेन चोदिताः स्मृताश्च स्मृतिकर्तृभिर्मन्वादिभिरप्यनुमोदिताः । यद्वा कालविभागेन स्मृताः—गोविन्दस्वामी.

3 'प्राप्ताः' प्रवासादभ्यागताः । 'क्रियारम्भः' पुंसवनसोमयागादीनामारम्भः । 'संवत्सरपर्यागतौ' संवत्सरमुषित्वागतौ—गोविन्दस्वामी.

4 ऋषिः मनुसदृक् विद्वान्—ब, द; ऋषिः समदृक्—ना.

5 गृ. र., ३०४.

'वेदाध्यायः' अधीतवेदः। 'परिसंवत्सरात्' संवत्सरे संवत्सरे ॥

[1]पुनरापस्तम्बः—[२, ९, ५–६]

सर्वान्वैश्वदेवभागिनः कुर्वीताश्वचाण्डालेभ्यः। नानर्हद्भ्यो दद्यादित्येके ॥

[2]'सर्वान्' अन्नार्थिनः। 'वैश्वदेवभागिनः' वैश्वदेवान्नसंविभागिनः कुर्यात्। 'आश्वचाण्डालेभ्य' इत्याङभिविधौ। 'अनर्हद्भ्यः' श्वपाषण्डचण्डालादिभ्यः। अनर्हतामदाने नास्ति दोषः, दाने तु पुण्यमिति व्यवस्था ॥

[3]आपस्तम्बबौधायनौ

ये नित्या भक्तिकाः स्युस्तेषामनुपरोधेन संविभागो विहितः। काममात्मानं भार्यां पुत्रं चोपरुन्ध्यान्न त्वेव दासकर्मकरम्। तथा चात्मनोऽनुपरोधं च कुर्याद्यथा कर्मसु समर्थः स्यात् ॥

'भक्तिकाः' भक्तार्हाः ॥

मनुः—[४, ३२]

शक्तितोऽपचमानेभ्यो दातव्यं गृहमेधिनाम्।
संविभागश्च भूतानां कर्तव्योऽनुपरोधतः ॥

[4]यमः

अपचन्तमतिक्रम्य पचन्तं यस्तु भोजयेत्।

1 गृ. र., ३०५.
2 Reproduced by गृ. र., ३०५.
3 आपस्तम्बः, २, ९, १०-१२; बौधायनः, २, ५, १६.
4 गृ. र., ३०६.

शौण्डिकानां[1] व्रजेद्योनिं वर्षाणामधिकं शतम् ॥

[2]वसिष्ठो, मनुश्च द्वितीये श्लोके

महयेद्यथाशक्ति चान्नेन सर्वभूतानि ।
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
चतुर्णामाश्रमाणां तु गृहस्थश्च विशिष्यते ॥
[3]यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥
[4]यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः ॥

'महयेत्' पूजयेत् ॥

[5]मनुः—[३, ७८–७९]

यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थैरेव धार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी[6] ॥
स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता ।
सुखं चेहेच्छतात्यन्तं योऽधार्यो दुर्बलेन्द्रियैः ॥

'सः' गृहाश्रमः । 'दुर्बलेन्द्रियैः' असंयतेन्द्रियैः, 'अधार्यो' धारयितुमशक्यः । असंयतेन्द्रियाणां [7]स्वाधीन-

1 मूषिकाणां—गृ. र.

2 वसिष्ठस्मृतिः, ८, १२—१६; वसिष्ठः—इति गृ. र., ३०६; वी. मि. आ., ४५७.

3 मनुः, ६, ९०.

4 यथा वायुं समाश्रित्य—ना;
यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥ इति मनुः, ३, ७७.

5 गृ. र., ३०६; वी. मि. आ., ४५७.

6 तस्माच्छ्रेष्ठाश्रमी गृही—गृ. र; तस्माज्ज्येष्ठाश्रमो गृही—उ, मु. मनुः.

7 स्वाधीनविषयालाभे सति नियतधर्मानुष्ठानाभावात्—ज; स्वाधीनविषयलाभे सति नियतधर्मानुष्ठानाभावात्—ब, द; स्वाधीनविषयभावे सति नियत—ना.

विषयलाभे सति नियतधर्मानुष्ठानासंभवात्। [1]तस्माच्छ्रेष्ठो गृहाश्रमी ॥

[2]<u>बृहस्पतिः</u>

आश्रमाणां समुत्पत्तिर्वर्धनं पालनं तथा[3]।
गृहस्थाज्जायते सम्यक् तेन सोऽभ्यधिकः स्मृतः ॥

[4]<u>पैठीनसिः</u>

चत्वारो ह्याश्रमा ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुकश्चेति। सर्वे ते गृहस्थमूलास्तदुपजीविनः ॥

[5]<u>दक्षः</u>—[२, ५७–६०]

देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते।
गृहस्थः प्रत्यहं यस्मात्तस्माच्छ्रेष्ठो[6] गृहाश्रमी ॥
त्रयाणामाश्रमाणां च गृहस्थो योनिरुच्यते।
सीदमानेन तेनैव सीदन्तीहेतरे त्रयः[7] ॥
मूलं प्राणो भवेत्स्कन्धः स्कन्धाच्छाखाश्च पल्लवाः[8]।
मूलेनैव विनष्टेन सर्वमेव विनश्यति[9] ॥
तस्मात्सर्वप्रयत्नेन [10]रक्षणीयो गृही सदा।
राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्वदा ॥

1 तस्माज्ज्येष्ठो गृहाश्रमी—ना.
2 वी. मि. आ., ४५७.
3 त्वर्चनं पालनं तथा—उ, ब, द.
4 गृ. र., ३०६.
5 वी. मि. आ., ४५६ ; जाबालः for दक्षः—ना.
6 तस्माज्ज्येष्ठो—ज, ना.
7 सीदन्तीहैव ते त्रयः—वी. मि. आ.
8 स्कन्धाच्छाखेति पल्लवाः—उ, वी. मि. आ.
9 सर्वमेतद्विनश्यति—ब, द.
10 त्रिभिः पूज्यस्सदा गृही—ब, द ; रक्षणीयो गृहाश्रमी—मु. दक्षः

अथ गौतमः[1]—[५, २६]

भोजयेत्पूर्वमतिथिकुमारव्याधितगर्भिणी[2]स्ववासिनी-स्थविरान् जघन्यांश्च ॥

आत्मनः 'पूर्वम्' एतान् 'भोजयेत्'। 'कुमाराः' बालाः। '[3]स्ववासिन्यः' ऊढा दुहितरः। 'जघन्याः' भृत्याः॥

बुधः

[4]अतिथिं पूजयेत्। भृत्यान् बन्धून् पोष्यवर्गं च। श्ववायसादिभ्यो भूमौ दत्वा ब्राह्मणान् भोजयेत् पित्रर्थान् ॥

[5]याज्ञवल्क्यः—[१, १०५]

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः।
संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

देवलः

गर्भिण्यातुरवृद्धेषु बालश्रान्तातिथिष्वपि[6]।
अप्राशितेषु तत्पूर्वमनिवेद्य च नाश्नीयात् ॥

[7]मनुविष्णू—[३, ११४]

[8]सुवासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा।

1 वी. मि. आ., ४५५; गृ. र., ३०४.

2 सुवासिनी—ना, ब, ज, द, मु. गौतमः.

3 सुवासिन्यः कुलदुहितरः—उ; सुवासिनी ऊढा कन्या—गृ. र; स्ववासिन्योऽविवाहिता दुहितरः—वी. मि. आ.; सुवासिन्यो गर्भयुक्ता दुहितरः—मस्करी; परिणीता पितृगृहे स्थिता स्ववासिनी—विज्ञानेश्वरः.

4 अतिथीन्भोजयेत्। वृद्धान्बन्धून्पोष्यवर्गांश्च। वायसादौ भूमौ दत्वा—ब, द.

5 गृ. र., ३०९.

6 भृत्येषु बालेष्वार्तातिथिष्वपि—ना.

7 मनुः, ३, ११४–११५; विष्णुः, ६७, ३९–४०; वी. मि. आ., ४५५; गृ. र., ३०४.

8 सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः—कुल्लूकः; स्ववासिनीं कुमारीं च रोगिणीं गुर्विणीं तथा—मु. वि. स्मृ.

अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥
अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥

'अग्रे' प्रथमम् । अत्र च यद्गौतमादिस्मृतिष्वतिथिभोजनस्य बालादिभोजनात् प्राथम्यप्रतिपादनम्, तदतिथेरभ्यर्हितत्वप्रतिपादनार्थम् । मनावप्यतिथिबालादीनां भोजने परस्परं पौर्वापर्यमविवक्षितम् । किं तु दम्पत्योस्तच्छेषभोजनमभिमतम्[1] ।

'अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः'

इत्येकवाक्यतयैतेषु भुक्तवत्सु स्वयं भुञ्जीतेत्यत्र तात्पर्यम् ॥

बौधायनः—[२, १३, ८]

अग्रे भोजयेदतिथीनन्तर्वत्नीरनन्तरम्[2] ।
बालान् वृद्धांस्तथा दीनान् व्याधितांश्च विशेषतः ॥

'दीनाः' दुःखिताः[3] ॥

[4]यमः

विद्वानग्निपरो नित्यमर्चयेत्पितृदेवताः ।
गुरूनतिथिबालांश्च तर्पयेत्पूर्वमेव तु ॥
आत्मानं तर्पयेत्पश्चान्नियतो वाग्यतः[5] शुचिः ।

1 तच्छेषभोजनमभिहितम्—ब, द.
2 'अन्तर्वत्नी' गर्भिणी—गोविन्दस्वामी.
3 दीनान् दुःखितान्—ना.
4 वी. मि. आ., ४५५.
5 नान्यतः—उ.

[1]स्त्रीशूद्रं तर्पयेत्पश्चादेष धर्मः सनातनः ॥

'गुरवः' पित्रादयः ॥

भोजयेदित्यनुवृत्तौ [2]वसिष्ठः—[११, ५-९]

[3]स्वगृह्यानां कुमारीबालवृद्धतरुणप्रजातास्ततोऽपरान् गृह्यान्। श्वचाण्डालपतितवायसेभ्यो भूमौ बलिं निर्वपेत्। शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात्। शेषं दम्पती भुञ्जीयाताम्। सर्वोपयोगे तु पुनः पाकः कार्यः ॥

'[4]तरुणप्रजाताः' नवप्रसूता नार्यः। 'गृह्याः' गृहभवाः परिचारका इति यावत्। अयं चोच्छिष्टानुच्छिष्टदानविकल्प आश्रितानाश्रितशूद्रविषयः सदसच्छूद्रविषयो वा। '[5]सर्वोपयोगे' सर्वस्यान्नस्यातिथिभोजने कृते यदान्यत् प्रयोजनमस्ति तदा तदर्थं 'पुनः पाकः' कर्तव्यः। न पुनर्वैश्वदेवादि कार्यम् ॥

[6]मनुः—[३, ११६-११८]

भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि।
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥
देवानृषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः[7]।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥

1 स्त्रीशूद्रौ—ज.
2 गृ. र., ३०८.
3 स्वगृह्याः—गृ. र.
4 Reproduced by गृ. र., ३०८.
5 Quoted by गृ. र., ३०८.
6 वी. मि. आ., ४५६.
7 पितॄनाशाश्च देवताः—वी. मि. आ.

[1]अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।
यज्ञशिष्टाशनं ह्येव[2] सतामन्नं विधीयते ॥

'ऋषि'पूजा ब्रह्मयज्ञेन ॥

तथा—[३, २८५]

विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।
[3]विघसो भृत्यशेषं तु यज्ञशेषमथामृतम् ॥

'भृत्यः' अवश्यपोषणीयः ॥

बौधायनः—[२, १३, ७]

देवताऽतिथिभृत्यानां मातापित्रोस्तथा गुरोः ।
मौनी विघसमश्नीयादेवं धर्मो न हीयते[4] ॥

[5]यमः

अमृताशी भवेन्नित्यं विघसाशी तु वा पुनः[6] ।
अमृतं यज्ञशेषं तु हविष्यं भोजनं स्मृतम् ।
भृत्यशेषं तु योऽश्नीयात्तमाहुर्विघसाशिनम् ॥

[7]देवलः

स्नात्वा प्रक्षाल्य पादौ च स्रग्गन्धालंकृतो शुचिः ।
पञ्चयज्ञावशिष्टं च यो भुङ्क्ते सोऽमृताशनः ॥

1 वी. मि. आ., ४५७.
2 ह्येतत्सतामन्नं—ना, मु. मनुः.
3 विघसो भुक्तशेषं तु—कुल्लूकः; विप्रादिभुक्तशेषं विघस उच्यते इति च व्याख्यातम्.
4 विधीयते—ना ;
पितृदैवतभृत्यानां मातापित्रोर्गुरोस्तथा ।
वाग्यतो विघसमश्नीयादेवं धर्मो विधीयते ॥ इति काशीमुद्रितबौधायनपाठः.
5 वी. मि. आ., ४५६.
6 इतः प्रभृत्युपलभ्यते—A. S. B.
7 गृ. र., ३१० ; वी. मि. आ., ४६०.

हारीतः

हुतं निवाप्याहुतप्रहुतप्राशितावशिष्टममृतं [1]प्राहुर्य-मश्नुवन्तो गृहस्थवानप्रस्थादेव सायुज्यमाप्नुवन्ति ॥

[2]यमपैठीनसी

नात्मार्थं पाचयेदन्नं नात्मार्थं पाचयेत् पशून् ।
देवार्थे ब्राह्मणार्थे वा पचमानो न लिप्यते ॥

[3]यमः

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।
इन्द्रियप्रीतिजननं वृथापाकं विवर्जयेत् ॥

शङ्खलिखितौ

देवान्भृत्यातिथींश्चैव पितॄनात्मानमेव च ।
[4]प्रकृतान्नावमन्येत तेषां शिष्टं समश्नुयात् ॥

[5]मार्कण्डेयपुराणे—[२९, ३९–४०]

कुटुम्बिनो भोजनीयाः स्वसमं विभवे सति[6] ।
[7]श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ॥
सीदता यत्कृतं तेन तत्पापं स समश्नुते ।

'स्वसमम्' आत्मभोज्यतुल्यभोज्यं तानपि भोजये-दित्यर्थः ॥

1 अमृतसंनिभं प्राहुः—ज ; अमृतं स्मृतं प्राहुः—ब, द.

2 वी. मि. आ., ४५७.

3 वी. मि. आ., ४५७ ; गृ. र., ३०७.

4 प्रकृत्या नावमन्येत तेषां शिष्टं समश्नुते—ना, द, ज.

5 गृ. र., ३०५.

6 'सामर्थ्याद्विभवे सति' इति पठित्वा 'स्वसामर्थ्यभोज्यतुल्यं भोज्यम्' इति व्याख्यातम्—गृ. र., ३०५–३०६.

7 Line omitted by गृ. र.

[1]भविष्यपुराणे

अकृत्वा वैश्वदेवं तु ये भुञ्जन्त्यबुधाः खग ।
तथा विना तु साक्ष्येण मृगयोनिं व्रजन्ति ते ॥

[2]बौधायनः—[२, ५, १७–१८]

[3]न चैव क्वचिददत्वा भुञ्जीत । अथाप्यत्रान्नगीतौ श्लोकावुदाहरन्ति ।

यो मामदत्वा पितृदेवताभ्यो
भृत्यातिथीनां स्वसुहृज्जनस्य ।
संपन्नमश्नन् विषमत्ति मोहात्
तमद्म्यहं तस्य च मृत्युरस्मि ॥
हुताग्निहोत्रः कृतवैश्वदेवो
[4]भुक्तातिथिर्भृत्यजनावशिष्टम् ।
तुष्टः शुचिः श्रद्दधदत्ति यो मां
तस्यामृतं स्यां स च मां भुनक्ति ॥ इति[5] ।

1 गृ. र., ३०७.

2 गृ. र., ३०७–३०८.

3 न त्वेव कदाचिदत्वा—ना, मु. बो.

4 पूज्यातिथीन्—मु. बो., गृ. र.

5 अदत्वा भोजने सति दोषगुरुत्वख्यापनार्थो निपातद्वयप्रयोगः । अन्नाभिमानिन्या देवतया गीतावेतौ श्लोकौ निन्दास्तुतिरूपौ । अनयोः पूर्वं निन्दारूपः, उत्तरः स्तुतिरूपः । पितृदेवताभ्योऽन्नदानं, वैश्वदेवबलिहरणं पञ्चमहायज्ञे । अतिथीनां सुहृज्जनस्येति चतुर्थ्यर्थे षष्ठी । एतेभ्योऽन्नमदत्वा संपन्नं मृष्टं अत्ति, तमद्म्यहं तस्य च मृत्युरस्मि दारिद्र्यं व्याधिं चोत्पादयामीत्यर्थः । अग्निहोत्रशब्दः सायंप्रातःकर्तव्यहोमोपलक्षणार्थः । तुष्टोऽतिथिभोजनेनाननुतापी । शुचिः पादप्रक्षालनादिना । श्रद्दधत् भक्ष्यभोज्यादिनातीव रुचिमान् । यद्वा श्रद्दधत् अतिथीन् पूजयेदिति संबन्धः । मां भुनक्ति अवति । अन्यथा 'भुजोऽनवन' इत्यात्मनेपदमेव स्यात् । तस्माद्यथाशक्ति दत्वैव भुञ्जीतेति श्लोकद्वयस्यार्थः—**गोविन्दस्वामी**,

[1]दक्षः—[२, ६१–६२]

गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत् ।
न चैव पुत्रदारेण स्वकर्मपरिवर्जितः ॥
अस्नात्वा चाप्यहुत्वा चाप्यदत्वा ये तु भुञ्जते ।
देवादीनामृणी भूत्वा नरकं ते व्रजन्त्यधः ॥

तथा—[२, ६५–६६]

एको हि भुङ्क्ते ह्यशनमपरोऽन्नेन भुज्यते ।
न भुज्यते [2]स एवैको यो भुङ्क्ते च ससाक्षिकम् ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ।

'साक्षिणः' अतिथिभृत्यादयः ।

यमशातातपौ

[3]अदत्वा वैश्वदेवं तु भुञ्जते ये [4]द्विजाधमाः ।
वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते ॥

[5]आपस्तम्बः—[२, १५, १३]

यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥

'यस्य' अन्नस्य[6] ॥

[7]जाबालिः

अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।

1 गृ. र., ३०७.
2 स वै एको—ना.
3 अकृत्वा—ना.
4 द्विजातयः—ना.
5 गृ. र., ३०७.
6 यस्यान्नस्यैकदेशोऽग्नौ न क्रियते न हूयते, यस्मादुद्धृत्याग्रं न दीयते न तद्भोक्तव्यम्—हरदत्तः.
7 जाबालः—गृ. र., ३०७; वी. मि. आ., ४५७–४५८.

[1]अहुत्वा तु कृमीन् भुङ्क्ते अदत्वा विषभोजनम् ॥

[2]याज्ञवल्क्यः—[१, १२१]

भार्यारतिः शुचिर्भृत्यभर्ता श्राद्धक्रियारतः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्[3] ॥

[4]पराशरः—[१, ३८]

षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ।
हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति ॥

'षट्कर्माणि' यजनादीनि[5] वक्ष्यमाणानि ॥

[6]इति भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्डेऽतिथिपूजा ॥

1 अदत्वा—ब, द, गृ. र.

2 गृ. र., ३०९.

3 भार्यायामेव न साधारणस्त्रीषु परस्त्रीषु वा रतिरभिगमनं यस्य स तथोक्तः । शुचिः बाह्याभ्यन्तरशौचयुक्तः द्विजवत् । भृत्यादिभर्ता । श्राद्धक्रियारतः श्राद्धानि नित्यनैमित्तिककाम्यानि, क्रियाः स्नातकव्रतान्यविरुद्धानि, तेषु रतः । नम इत्यनेन मन्त्रेण पूर्वोक्तान् पञ्चमहायज्ञानहरहर्न हापयेदनुतिष्ठेत् । नमस्कारमन्त्रं केचित्—'देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः' । इति वर्णयन्ति । नम इत्यन्ये—विज्ञानेश्वरः.

4 गृ. र., ३०९.

5 यज्ञादीनि—ब, ज, द ; षट्कर्माणि यज्ञादीनि—गृ. र.

6 इति श्रीभट्टहृदय—ना ; इति कृत्यकल्पतरौ नियतकालकृत्यकाण्डे पञ्चमहायज्ञाः—द.

॥ ७ ॥

# अथ भोजनविधिः

[1]तत्र दक्षः—[२, ५६–६८]

पञ्चमे च तथा भागे संविभागो यथार्हतः।
देवपितृमनुष्याणां कीटानां चोपदिश्यते ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्।
'[2]संविभागः' संविभज्य प्रतिपादनम् ॥

[3]देवलः

स्नात्वा प्रक्षाल्य पादौ च स्रग्गन्धालंकृतः[4] शुचिः।
पञ्चयज्ञावशिष्टं तु भुङ्क्ते यः सोऽमृताशनः[5] ॥
उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य [6]वाग्यतः।
प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः [7]पीठमधिष्ठितः ॥

1 वी. मि. आ., ४५९; गृ. र., ३०९.
2 संविभागो विभज्य प्रतिपत्तिः,—गृ. र.
3 वी. मि. आ., ४६०: गृ. र., ३१०.
4 स्रग्वस्त्रालंकृतः—गृ. र.
5 यो भुङ्क्ते सोऽमृताशनः—ना, गृ. र.
6 यत्नतः—गृ. र.
7 पीठमवस्थितः—गृ. र.

[1]बौधायनः—[२, ५, २१ ; २, ६, १–२]

सुप्रक्षालितपाणिपादोऽप आचम्य शुचौ[2] [3]संवृते देशेऽन्नमुपहृतमुपसंगृह्य[4] कामक्रोधद्रोहलोभमोहानपहत्य[5] सर्वाभिरङ्गुलीभिः शब्दमकुर्वन् प्राश्नीयात् ॥ न पिण्डशेषं पात्र्यामुत्सृजेत् । मांसमत्स्यतिलमधुसंसृष्टं प्राश्याप[6] उपस्पृश्याग्निमभिस्पृशेत्[7] ॥

'संवृते' वस्त्रादिना परिवेष्टिते, उपविश्येति शेषः । 'उपहृतम्' उपनीतम् । 'उपसंगृह्य' समीपस्थे पात्रे प्रीतिपूर्वकं सम्यग्गृहीत्वा । 'शब्दमकुर्वन्' भक्षणे क्रियमाणे सीत्कारादिध्वनिमकुर्वन् । 'पिण्डशेषम्' अशितुं गृहीतस्य शेषम् ॥

[8]ब्रह्मपुराणे

[9]विशेद्भोजनभूमिं तु[10] सुप्रक्षालितपाणिमान् ।
आसनस्थस्तु यो दर्पात् पङ्क्तिमध्य उपस्पृशेत्[11] ॥
स सर्वेषां तु यत्पापं तद्गृह्णाति नराधमः ।

1 वी. मि. आ., ४५९—४६० ; गृ. र., ३१०.

2 सुप्रक्षालितपादपाणिराचान्तः शुचौ—मु. बो ; प्रक्षालितपाणिपादोऽप आचम्य शुचौ—गृ. र.

3 संस्कृते—ज.

4 अन्नमुपसंगृह्य—ना, मु. बो.

5 मोहानपहृत्य—गृ. र.

6 मांसमत्स्यतिलसंसृष्टप्राशनेऽप—मु. बो.

7 अभिसंस्पृशेत्—ना ; अभिमृशेत्—मु. बो ; उपस्पृशेत्—गृ. र.

8 वी. मि. आ., ४६० ; गृ. र., ३११.

9 आसनस्थस्तु यो दर्पात्पङ्क्तिमध्यमुपस्पृशेत् ।
विशेद्भोजनभूमिं च अप्रक्षालितपाणिमान् ॥—गृ. र.

10 च—ब, ज, द, गृ. र.

11 पङ्क्तिमध्यमुपस्पृशेत्—ना, गृ. र.

तस्माद्बहिरुपस्पृश्य स्वाचान्तः[1] प्रविशेद्गृहम् ॥
[2]उपलिप्ते समे स्थाने शुचौ श्लक्ष्णासनान्विते[3] ।
चतुरस्रं त्रिकोणं तु वर्तुलं चार्धचन्द्रकम् ॥
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ।
ब्रह्मरुद्रेन्द्रचन्द्रार्का वसवो मण्डलान्तरात् ॥
निवेदितं नरैरन्नं [4]यस्माद्गृह्णन्ति नान्यथा ।
अकृत्वा मण्डलं ये तु भुञ्जतेऽधममयोनयः ॥
तेषां तु यक्षरक्षांसि हरन्त्यन्नस्य तद्बलम्[5] ॥

[6]मनुः—[२, ५२]

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥

'आयुष्यम्' आयुषे हितम् । 'यशस्यं' यशसे हितम् । 'श्रियम्' 'ऋतम्' इत्यत्रोभयत्र कामयमान इत्यध्याहारेण परिसमाप्तिः । 'ऋतं' सत्यं यज्ञं वा ॥

हारीतः

प्राङ्मुख आयुःकामोऽश्नीयात् । यशोर्थी दक्षिणामुखः । श्रीकामः प्रत्यङ्मुखः । [7]नोदङ्मुखः । [8]नाधिशयने

1 आचान्तः—उ, वी. मि. आ., गृ. र.
2 उपविश्य—ब, द ; उपलिप्य—वी. मि. आ.
3 श्लक्ष्णान्वितासने—ब, द ; श्लक्ष्णसमन्विते—ना ; शुद्धासनान्विते—गृ. र.
4 तस्माद्गृह्णन्ति—वी. मि. आ.
5 यद्बलम्—ना ; तद्बलात्—गृ. र.
6 गृ. र., ३११–३१२ ; वी. मि. आ., ४६१.
7 गृ. र., ३१२ ; नोदङ्मुख इति निषेध ऋतमवाञ्छताम्—गृ. र.
8 वी. मि. आ., ४६१–४६२.

नासने वाश्नीयात्। न कार्ष्णायासे। न मृत्पात्रे। न भिन्नावकीर्णे॥

'अधिशयने' उपरिशयने खट्वादौ। 'आसने' पीठादौ, [1]अन्नपात्रं निधायेति शेषः। 'कार्ष्णायसे' लोहपात्रे। 'मृत्पात्रे' शरावादौ। 'भिन्ने' स्फुटिते। '[2]अवकीर्णे' दुर्ब्राह्मणादिभोजनादिनाऽपवित्रीकृते॥

[3]वामनपुराणे

भुञ्जीत नैवेह च दक्षिणामुखो
न च प्रतीचीमभिभोजनीयम्[4]।

अयं च प्रत्यङ्मुखोदङ्मुखनिषेधो निष्कामविषयः। सकामस्य—

"[5]श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः॥"

इति मुखद्वयभोजनस्य विधानात्। दक्षिणामुखभोजननिषेधो जीवन्मातृकविषयः। तथा च पुष्टिकामाधिकारे—

[6]आपस्तम्बः—[२, १९, १–२]

वाग्यतो दक्षिणामुखो भुञ्जीत। अनायुष्यं त्वेवंमुखस्य भोजनं मातुरुपदिशन्ति॥ इति

1 अन्नं वा पात्रं वा—ज, ना; अन्नं प्रकृत्येति शेषः—वी. मि. आ.;

2 'अवकीर्णे' अब्राह्मणादिना अपवित्रीकृते—ब, द; 'अवकीर्णे' शूद्रभोजनादिनाऽपवित्रिते—वी. मि. आ

3 वी. मि. आ., ४६१; गृ. र., ३१२.

4 भोजनीयः—वी. मि. आ.

5 मनुः, २, ५२.

6 गृ. र., ३१२; Quoted by वी. मि. आ., ४६१.

[1]विष्णुपुराणे—[३, ११, ७९–८०]

नैकवस्त्रधरो नार्द्रपाणिपादो नरेश्वर ।
विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः ॥
प्राङ्मुखोदङ्मुखो वापि न चैवान्यमना नरः ।

'विदिङ्मुखः' [2]आग्नेयादिकोणाभिमुखः। 'प्राङ्मुखो उदङ्मुखो वे'त्यत्र 'भुञ्जीते'त्यन्वयः ॥

[3]यमः

प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः ।
भुञ्जीत ह्यार्द्रपादस्तु नार्द्रपादः स्वपेन्निशि ॥
आर्द्रपादस्तु भुञ्जानः [4]शतवर्षाणि जीवति ।

'पञ्चार्द्रः' करचरणवदनार्द्रः । 'पञ्चार्द्र' इत्यभिधाय 'आर्द्रपाद' इति पुनरभिधानमार्द्रपादताया आदरातिशयार्थम् ॥

[5]विष्णुपुराणे

स्नातो यथावत् कृत्वा च देवर्षिपितृतर्पणम् ॥
प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ।
कृतवापो हुते चाग्नौ शुद्धवस्त्रधरो नृप ॥

'प्रशस्तरत्नानि' गारुडादीनि । 'कृतवापः' देवाद्यर्थे कृतनिर्वापः ॥

1 वी. मि. आ., ४६१ ; गृ. र., ३१२.
2 आग्नेयादिदिगभिमुखः—ना.
3 वी. मि. आ., ४६२ ; गृ. र., ३१३.
4 शतं—ना, गृ. र.
5 वी. मि. आ., ४६२ ; गृ. र., ३१३.

[1]मनुः

सायंप्रातर्मनुष्याणामशनं देवनिर्मितम् ।
नान्तरा भोजनं कार्यमग्निहोत्रसमो विधिः ॥
'सायंप्रातः'शब्दावत्र रात्रिदिवसपरौ ॥

[2]तथा च छन्दोगपरिशिष्टे कात्यायनः—[२, ३३]

मुनिभिर्द्विरशनमुक्तं[3]
विप्राणां मर्त्यलोकवासिनां नित्यम् ।
अहनि च तथा तमस्वि-
न्यां सार्धप्रहरयामान्तः ॥

अत्राप्यहःशब्दो दक्षानुसारात् पञ्चमाह्नभागपरः । 'तमस्विनी' रात्रिः । 'सार्धप्रहरयामान्तः' सार्धप्रथमप्रहरमध्ये ॥

[4]ब्रह्मपुराणे

[5]पात्रेष्वर्थानुरूपेषु पुत्रभृत्यात्मजैः सह ।
भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नं तु भोजयेत्[6] ॥
पवित्रपाणिः पुण्यं च लभेत्तत्राघमर्षणम् ।

'[7]अर्थानुरूपेषु' स्वविभवानुसारेण सौवर्णराजतादिषु । 'अघमर्षणम्' अघमर्षणजन्यं पुण्यम् ॥

1 This verse is found in brackets in the printed editions of Manu and is read after II, 52 and is numbered 6; वी. मि. आ., ४६२; गृ. र., ३१३.

2 वी. मि. आ., ४६२; गृ. र., ३१३.

3 प्रोक्तं—गृ. र; ऋषिभिर्द्विरशमुक्तं(युक्तं) विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्याः सार्धप्रथमयामान्तः ॥—इति मुद्रितगोभिलस्मृतिपाठः.

4 वी. मि. आ., ४६३; गृ. र., ३११.

5 पात्रेष्वन्नानुरूपेषु पुत्रभृत्यानुजैः सह—ब, द, वी. मि. आ., गृ. र.

6 भक्षयेत्—ना.

7 अन्नानुरूपेषु—वी. मि. आ., गृ. र.

[1]मनुः—[२, ५४–५५]

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्चाप्यभिनन्देच्च सर्वशः[2] ॥
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।
अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम्[3] ॥

[4]ब्रह्मपुराणे

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्या च वन्दयेत्[5] ॥
अन्नं विष्णुं स्वयं प्राह नित्यमेव जनार्दनः ।
यो मां ददाति प्राणाय भुञ्जानः शास्त्रविद्द्विजः ॥
[6]प्राणार्थं मां सदा ध्यायेत् स मां संपूजयेत्सदा ।
[7]वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम् ॥
तेजोसीति जपंस्त्वन्नं [8]प्रणमेदमृतं च तत् ।

[9]मार्कण्डेयपुराणे—[३४, २८]

उपघाताहृते दोषं नान्नस्योदीरयेद्बुधः ।

1 गृ. र., ३१४.

2 प्रतिनन्देच्च सर्वशः—कुल्लूकः; 'प्रतिनन्देत्' नित्यमस्माकमेतदस्त्वित्यभिधाय वन्दनं प्रतिनन्दनम् । 'सर्वशः' सर्वमन्नम्—इति व्याख्यातं च.

3 यस्मात्पूजितमन्नं सामर्थ्यं वीर्यं च ददाति । अपूजितं पुनरेतदुभयं नाशयति । तस्मात्सर्वदान्नं पूजयेदिति पूर्वेणैकवाक्यतापन्नमिदं फलश्रवणम्—कुल्लूकः.

4 गृ. र., ३१४.

5 प्रवन्दते—गृ. र.

6 प्राणान्नं—गृ. र.

7 वी. मि. आ., ४६३.

8 प्रणमेतामृतं च तत्—व, द; प्रणमेतोदितं च तत्—वी. मि. आ.

9 वी. मि. आ., ४६३; गृ. र., ३१४.

'[1]उपघातः' श्वकाकादिस्पर्शः ॥

[2]वृद्धशातातपः

परिधानमपोशानं [3]पूर्वमाच्छादनं परम् ।
भवत्यन्नमनग्नं हि सोत्तरीयं तथामृतम् ॥

पूर्वं यद् 'अपोशानं' तत् 'परिधानम्', परम् 'अपोशानम्' 'आच्छादनम्' ॥

[4]याज्ञवल्क्यः—[१, १०६]

[5]अपोशानेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना[6] ॥

[7]ब्रह्मपुराणे

[8]अपोशानं च गृह्णीयात् सर्वतीर्थमयं च तत् ।
अमृतोपस्तरणमसीति विष्णोरन्नमयस्य च ॥
हस्तेन लङ्घयेन्नान्नं सोदकेन कदाचन ।
दम्भाद्यो लङ्घयेद्भुञ्जंस्तेनान्नं निहितं भवेत् ॥
हतं चान्नमभक्ष्यत्वं तस्य याति दुरात्मनः ।
पञ्चग्रासांस्तु भुक्त्वादौ कश्चिद्वेश्मनि सङ्कटे[9] ॥

1 अभिघात:—उ, ब, द ; उपघातः श्वकाकादिस्पर्शरजस्वलादिदर्शनादिः—वी.मि.आ.

2 गृ. र., ३१४.

3 आपोशानं—गृ. र., पूर्वं यदापोशानं तत्परिधानं, तेन तदन्नमनग्नं भवत्यमृतं च—गृ. र.

4 गृ. र., ३१५.

5 आपोशानेन—गृ. र., आपोशनेन—विज्ञानेश्वरः.

6 भुञ्जानेन द्विजन्मना उपरिष्टादधस्ताच्चापोशनाख्येन कर्मणान्नमनग्नममृतं च कार्यम्—विज्ञानेश्वरः.

7 वी. मि. आ., ४६३ ; गृ. र., ३१५.

8 आपोशानं—गृ. र.

9 संकटे—ज.

पात्रमुद्धृत्य शेषं तु भक्षयेत्सांकराद्भयात् ।
[1]पित्र्ये कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत् ॥

[2]तथा

प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणवसंयुताः ।
पञ्चाहुतीस्तु जुहुयात्प्रलयाग्निनिभेषु च ॥

विष्णुपुराणे—[३, ११, ८९]

पञ्चग्रासान्महामौनं प्राणाद्याप्यायनाय तत् ।
'महामौन'ग्रहणात् सर्वथा ध्वनिनिवृत्तिरभिमता ॥

[3]ब्रह्मपुराणे

प्राणे तृप्ते तु तृप्यन्ते नित्यं [4]स्वर्गार्कचक्षुषः ।
व्याने तृप्ते तु तृप्यन्ते [5]श्रोत्रे त्वक्ककुभस्तथा ॥
अपाने तृप्ते तृप्यन्ते [6]वह्निवाग्भूमयः सदा ।
समाने तृप्ते तृप्यन्ते मनःपर्जन्यविद्युतः ॥
उदाने तृप्ते तृप्यन्ते वाय्वाकाशौ च सर्वदा ।
तृप्तेष्वेतेषु तृप्तं स्याज्जगत् सदसदात्मकम् ॥
प्रजाढ्यो ब्रह्मचारी स्यात् पश्वन्नैर्वर्धते च सः ।
प्राणाग्निहोत्रविद्विप्रो दाता च स्यात्समृद्धिमान् ॥

[7]तथा

भुक्त्वामृतापिधानार्थं पिबेत्तोयं सकृत्सकृत् ।

1 वी. मि. आ., ४६४.
2 वी. मि. आ., ४६४; गृ. र., ३१५.
3 विष्णुपुराणे—गृ. र., ३१५–३१६.
4 भुक्त्वार्कचक्षुषः—गृ. र.
5 श्रोत्रेन्दुककुभस्तथा—ब, द, ज; श्रोत्रे द्वे ककुभस्तथा—गृ. र.
6 बुद्धिर्वाग्विभवस्तथा—गृ. र.
7 तथा—omitted by गृ. र.

येनान्नं न भवेन्नग्नं [1]जीवभूतं जगत्त्रये ॥

एवं भुञ्जन्सदा विप्रो ज्ञातिप्राधान्यमाप्नुयात् ।

शङ्खलिखितौ

श्रुतिस्मृतिसमापन्नं देवद्रव्यगुणान्वितम् ।

देवतोयैर्यथाक्लृप्तं प्रोक्षितं शिष्टभोजनम् ॥

'श्रुतिस्मृतिसमापन्नं' श्रुतिस्मृतिभ्यामवगतम्। 'देवद्रव्यगुणान्वितं' यज्ञियम् । 'देवतोयैर्यथाक्लृप्तं' येन प्रकारेण क्लृप्तं तत्प्रकारकमेव [2]भोजनम् ॥

[3]हारीतः

अथ ब्राह्मणानां भोजनविधिं [4]प्रवक्ष्याम्यहम् । स्नातोऽहतवासाः[5] पवित्रात्मा प्राङ्मुख आसीनः पाणी प्रक्षाल्य दशहोतारं निगद्येन्द्रं गच्छ स्वाहेति[6] ध्यायेदव्यक्तं पुरुषम् । [7]ॐ तेजोऽसीत्यन्नाद्यमाह्रियमाणमभिमन्त्रयेत् । द्यौस्त्वा ददात्विति [8]दीयमानम् । भूस्त्वा प्रतिगृह्णात्विति प्रतिगृह्य ।

"[9]अग्निरस्मि जन्मना जातवेदा[10]

घृतं मे[11] चक्षुरमृतं म आसन् ।

1 जीवद्भूतं—गृ. र.

2 बोद्धव्यम्—ना.

3 वी. मि. आ., ४६६–४६७; गृ. र., ३१६–३१८.

4 वक्ष्याम्यहम्—गृ. र.

5 स्नातोऽहतवासा: शुक्लवासा: शुचि: पवित्रात्मा—गृ. र.; स्नातोऽहतवासाः शुक्लवासा वा पवित्रात्मा—ब, ज, ना, द, A. S. B.

6 मैत्रा. सं., १. ९. १: १३१. ३; १. ९. ३: १३२. २०; इन्द्र गच्छ स्वाहेति—गृ. र.

7 ततेजोसीत्यन्नमाह्रियमाणम्—गृ. र.

8 नीयमानम्—गृ. र., ब, द, ज.

9 मैत्रा. सं., ४. १२. ५: १९२. ९.

10 अग्निरश्मिजन्मना जातवेदो—गृ. र.

11 मे—omitted by गृ. र.

[1]अर्कस्त्रिधातू रजसो विमानो-
ऽजस्रो घर्मो हविरस्मि नाम ॥
[2]अहमस्मि प्रथमजा ऋतस्य
पूर्वं देवेभ्यो अमृतस्य [3]नाभिः ।
[4]यो मा ददाति स इ देवमावाः
अहमन्नमन्नमदन्तमद्मि ॥"

इत्यन्नमभिमन्त्रयेत् ।

"[5]अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
[6]त्वं यज्ञस्त्वं वषट्कारस्त्वं विष्णोः परमं पदम् ॥
[7]आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् ।"

[8]अमृतोपस्तरणमसीत्यपः प्राश्य प्राणाय स्वाहेत्येकैकयाहुत्या सर्वान् प्राणान् प्रीणाति । [9]समस्ता निगिरेत् । [10]अथ मैत्रायणेर्मतम् । आयुषे स्वाहेति[11] दशैताः[12] प्राणाहुती-

1 अर्कः त्रिधाभूजसो विमानोऽजस्रो घर्मो हविरश्मिनाहरस्मि प्रथमजो ऋतस्य—गृ. र.

2 तै. ब्रा., २. ८. ८. १.

3 नाम—गृ. र.

4 यो मां ददाति इह देवमावहदिदमन्नं मदर्थमसि—गृ. र.

5 महा. ना. उ., १५. ६ ; अन्तश्चरसि भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वं रुद्रस्त्वं ब्रह्म त्वं प्रजापतिः । अमृतोपस्तरणमसि—इति महानारायणोपनिषत्पाठः, अन्तश्चरति इति—तै. आ., १०. ३१. १.

6 त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥ ब्रह्म भूर्भुवः स्वरोम्—वी.मि.आ.

7 महा. ना. उ., १३. १ ; तै. आ., १०. १५. १ ; २८. १.

8 महा. ना. उ., १५. ७ ; तै. आ., १०. ३२. १.

9 समस्तानपि पिबेदथ—गृ. र.

10 अथ मैत्रायमाणे मतिम्—वी. मि. आ.

11 मैत्रा. सं., ३. १२. ९ : १६३. ७—"[1]आयुषे स्वाहा [2]प्राणाय स्वाहापानाय स्वाहा[3] [4]व्यानाय स्वाहा [5]समानाय स्वाहोदानाय स्वाहा[6] [7]चक्षुषे स्वाहा [8]श्रोत्राय स्वाहा [9]मनसे स्वाहा [10]वाचे स्वाहा".

12 दर्शिताः—ब, द, गृ. र.

रायुष्कामो[1] [2]भुञ्जीतेत्येवं ह्याह। यथाकामं समश्नुते[3]। अन्तश्चरसीत्यभिधायेदममृतयोनौ सत्ये [4]ज्योतिषि परमात्मनि जुहोमि स्वाहेति [5]प्रीणात्यात्मानम्। तेन [6]प्राणानाप्यायस्वेति हृदयदेशमालभ्य जपति। [7]प्राणानां ग्रन्थिरसीति प्राणदेशम्। [8]विष्णोर्जठरमसीति नाभिदेशम्। "[9]यो देवानामसि श्रेष्ठ उग्र तन्ति चरो वृषामृतत्वमस्मभ्यं रुद्रैतदस्तु हुतं तव स्वाहे"ति पुनरपि हृदयदेशमालभ्य [10]जपति। सावित्रीं चानुभाष्य [11]त्रिरपो वसाना बहूनां रसभुक् समस्तान्नपाककर्मेष्टिः प्रीयतां विश्वभुगिति ध्यायेदव्यक्तं पुरुषम्। मूत्रपुरीषे रथ्यामाक्रम्य[12] श्मशानं वाचान्तः[13] पुनराचामेत्। एवं[14] यो ब्राह्मणो भुङ्क्ते सः पुण्यतमो भवति। पङ्क्तिपावनो भवति। उभयतः

1 आयुष्कामं—गृ. र.

2 भुञ्जीतैवं यथा ह्याह—वी. मि. आ.

3 यथाकाममश्नुते—गृ. र.

4 ज्योतिष्मति जुहोमि—गृ. र.; ज्योतिष्मति परमात्मनि जुहोमि—उ.

5 प्राणा ह्यात्मानं—उ; प्राणा आत्मानं—वी. मि. आ.; प्राणाद्यात्मानम्—गृ. र.

6 प्राणाय स्वाहेति—गृ. र.

7 महा. ना. उ., १६. २.

8 मानवश्रौतसूत्रम्—२. ३. ७. १; ५. २. १५. २१.

9 मानवश्रौतसूत्रम्, १. ३. ४. ३. यो देवानामसि श्रेष्ठ उग्रस्तं पितरो मृषामृतमस्मभ्यं रुद्रैतदस्तु हुतं ततः स्वाहा—वी. मि. आ.; देवानामसि श्रेष्ठ उग्रस्तं पितरो वृषामृतत्वमस्मभ्यं रुद्रे तदस्तु हुतं ततः स्वाहा—गृ. र.

10 जपति—omitted by गृ. र.

11 त्रिरापो रसानां बहूनां रसभुक्—गृ. र.; त्रिरापो वसाना बहूनां च स भुक् सकर्मानुत्राककर्मेषु—वी. मि. आ.

12 रथ्यामात्रस्य—वी. मि. आ.

13 श्मशानं चान्तः—गृ. र.

14 एवं च—गृ. र.

पक्षाणि[1] तर्पयति[2]। देवांश्च तर्पयति। पितॄंश्च तर्पयति। मनुष्यांश्च तर्पयति। [3]अभोज्यस्यान्नं पुनाति। ब्रह्मणः सायुज्यं गच्छतीत्येवं ह्याहेति॥

'[4]दशहोता' "चित्तिः स्रुक् चित्तमाज्यम्[5]" इत्यादिको मन्त्रः। 'इन्द्रं गच्छ स्वाहे'ति मन्त्रान्तेन 'चित्तिः स्रुग्' इत्यादि दशहोतृमन्त्रप्रदर्शनम्, [6]एवं मन्त्रमुच्चार्य। 'अव्यक्तं पुरुषं' जगत्कारणम्। 'प्राणान्' इति प्राणापानव्यानोदानसमानानां ग्रहणम्। 'आहुति'ग्रहणमनामिकाङ्गुष्ठमात्रग्राह्यान्नग्रहणार्थम्। तथा[7] छन्दोगोपनिषदि वाक्यकारः—'समां[8] प्रथमाहुतिमित्याहुतिधर्मप्रज्ञप्तिः [9]स्तोकेन गृहीतैः' इति। एतच्च वृद्धद्रविडविवरणकारेण व्याख्यातम्। 'स्तोकता निर्दिश्यते, अनामिकाङ्गुष्ठेन च यावद्गृह्यते तावत्। कुतस्तद्गृहीतैः। तथा ह्याहुतिर्गृह्यमाणा दृश्यते' इति जयस्वामी। क्षिप्तामाहुतिं 'निगिरेत्' न दन्तभिन्नां कुर्यात्। अपरा दशाहुतयः 'आयुषे स्वाहे'त्यादयः काम्याः। 'यथाकामम्' इत्यनेनैतदुक्तम्। शेषाहुतिषु [10]निगरणे नियमो नास्ति। 'अन्तश्चरसीत्यभिधाय' 'अन्त-

1 उभयपक्षाणि—ब, द.

2 तर्पयति। मनुष्यांश्च तर्पयति—ब, द, वी. मि. आ.

3 भोज्यस्यान्नं—ब, द, गृ. र.

4 Reproduced by वी. मि. आ., ४६७ and गृ. र., ३१७–३१८.

5 मैत्रा. सं., १. ९. १ : १३१. ३ ; १. ९. ३ : १३२. २०.

6 एतं—वी. मि. आ., गृ. र.

7 Quotation missing in वी. मि. आ.

8 समं—गृ. र.

9 स्तोकगृहीतैः—गृ. र.

10 निगिरणनियमो—गृ. र. ; निगरणनियमो—वी. मि. आ.

श्चरसी 'त्यादिना [1]'ऽमृतापिधानमसी 'त्यूहितान्तेनाभिधाय, जुहोत्यप इति शेषः। 'सावित्रीं' 'त्रिः' उच्चार्य '[2]अपो वसाना' इत्यादिमन्त्रेण 'अव्यक्तं पुरुषं ध्यायेत्'। एवंभूतेतिकर्तव्यताकभोजने वैश्वानरविद्याविदोऽधिकारः। [3]अयं चार्थः 'पुण्यतमे 'त्याद्यन्ते 'ऽन्नम्' इत्यनुवादेन[4] सूचितः॥

[5]बौधायनः—[२, १२, १-४; ७-१६; २, १३, १-४]

अथ शालीनयायावराणामात्मयाजिनां [6]प्राणाहुतीर्व्याख्यास्यामः। [7]सर्वावश्यकावसाने [8]संमृष्टोपलिप्ते देशे प्राङ्मुख [9]उपविश्योद्धृतमाह्रियमाणं भूर्भुवःसुवरोमित्युपस्थाय वाचं यच्छेत्। [10]न्यस्तं महाव्याहृतिभिः प्रदक्षिणमन्नमुदकं परिषिच्य सव्येन पाणिनाविमुञ्चन्नमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पश्चान्नेन प्राणाहुतीर्जुहोति।

1 अमृताभिधारणमसीति—उ; अमृताभिस्तरणमसीति—गृ. र.

2 आपो रसानाम्—गृ. र.

3 अयं चार्थः प्राणा ह्यात्मा ते अन्नमित्यनुवादेन द्योत्यते—गृ. र.; अयं चार्थः पुण्याद्यात्मान्ते अन्तमित्यनुवादेन सूचितः—उ.

4 अन्नमित्यर्थवादेन—ना.

5 वी. मि. आ., ४७०-४७२; गृ. र., ३१८-३१९.

6 प्राणदेवत्या आहुतयः प्राणाहुतयः। प्राणशब्दोऽपानादीनामुपलक्षणाय।—गोविन्दस्वामी.

7 सर्वावश्यकावसानेषु प्रक्षालितपाणिपादोऽप आचम्य संमृष्टोपलिप्ते शुचौ संवृते देशे प्राङ्मुख उपविश्य ध्रुवा द्यौरिति जपन् पृथिवीमावाहयेत् घृतवतीमिति भूम्यां पात्रं प्रतिष्ठाप्य मूर्धानं दिव इति उद्धृतमाह्रियमाणं भूर्भुवःसुवरोमित्युपस्थाय वाचं यच्छेत्—वी. मि. आ; अवश्यं भाव्यावश्यकम्, तन्नियोगतोऽहरहः कर्तव्यम्। सर्वावश्यकपरिसमाप्तिर्मध्यंदिनात्प्रागेव 'पूर्वाह्णे वै देवानां मध्यंदिने मनुष्याणामपराह्णे पितॄणाम्' इति श्रुतेः।—गोविन्दस्वामी.

8 संसृष्टोपलिप्ते—उ, गृ. र.

9 उपविश्य यद्धृतमाह्रियमाणं—उ.

10 न्यस्तमन्नं महाव्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य—गृ. र., मु. बो; 'न्यस्तं' भाजने प्रक्षिप्तम् 'अन्नं' 'महाव्याहृतिभिः' "भूरग्नये पृथिव्यै च" इत्यादिभिः 'प्रदक्षिणमुदक परिषिच्य' 'सव्येन पाणिना' भोजनपात्रं 'अविमुञ्चन्' अविसृजन् 'अमृतोपस्तरणमसि' इत्यपः पिबेत्।—गोविन्दस्वामी.

"प्राणे निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाप्रदाहाय प्राणाय स्वाहा[1]। अपाने निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाप्रदाहायापानाय स्वाहा। व्याने निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाप्रदाहाय व्यानाय स्वाहा। उदाने निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाप्रदाहायोदानाय स्वाहा। समाने निविष्टोऽमृतं जुहोमि शिवो माऽऽविशाप्रदाहाय समानाय स्वाहा।" इति पञ्चान्नेन प्राणाहुतीर्हुत्वा [2]तूष्णींभूतो भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्। [3]अथाप्युदाहरन्ति।

[4]आसीनः प्राङ्मुखोऽश्नीयाद्वाग्यतोऽन्नमकुत्सयन्।
अस्कन्दयंस्तन्मनाश्च भुक्त्वा चाग्निमुपस्पृशेत्॥ इति। ·

सर्वभक्ष्यापूपकन्दमूलफलमांसादीनि[5] दन्तैर्नावद्येत्[6]।

1 प्राणाय स्वाहेति। पञ्चान्नेन प्राणाहुतीर्हुत्वा etc.—मु. बो ; प्राणे निविष्टः इत्यन्तेन जुहोतीति संबन्धः। प्राणे प्राणार्थमभिनिविष्टोऽहममृतमन्नं जुहोमि मय्येव। मां च शिवः सुखहेतुः आविश अप्रदाहाय च भव। स्वाहेति प्रदानप्रतिपादकः, प्रयच्छामीति यावत्। एवमुत्तरेष्वपि यथासंभवं योजनीयम्॥—**गोविन्दस्वामी.**

2 तूष्णीं भूयो व्रतयेत्-ब, द, ज, वी॰ मि. आ., मु. बो ; तूष्णीभूय व्रतयेत्—गृ. र.

3 नान्तरा वाचं विसृजेद्यदन्तरा वाचं विसृजेद्भूर्भुवःसुवरोमिति जपित्वा पुनरेव भुञ्जीत। त्वक्केशनखकीटाखुपुरीषाणि दृष्ट्वा तं देशं पिण्डमुद्धृत्याद्भिरभ्युक्ष्य भस्मावकीर्य पुनरद्भिः प्रोक्ष्य वाचा च प्रशस्तमुपयुञ्जीत।" The above two sūtras of Bodhāyana (२, १२, ५–६) are omitted in all manuscripts of the *Kalpataru* and in the *Gṛhastharatnākara* of Candesvara. But Mitra Misra cites them (वी॰ मि. आ., ४७१.)

4 आसनप्राङ्मुखत्वयोः पुनरुपादानं पञ्चप्राणाहुत्यन्ते तयोः पर्यवसानं मा भूदिति। वाग्यतोऽन्नं व्रतयेत्। तूष्णींग्रहणनैव सिद्धत्वादनुवादः। अकुत्सयन् अगर्हयन् अपक्वतुषपर्णपातादिदोषैः।—**गोविन्दस्वामी.**

5 मांसानां—उ, वी. मि. आ., गृ. र.

6 दन्तैर्न छिद्येत्—उ.

नातिसुहितः[1] । [2]अमृतापिधानमसीत्युपरिष्टादपः पीत्वाऽऽचान्तो हृदयदेशमभिमृशति "प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वे"ति । पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणी [3]निःस्रावयति—

"अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य[4] जगतः प्रभुः प्रीणाति विश्वभुक्[5] ॥" इति ।

[6]हुतानुमन्त्रणमूर्ध्वहस्तश्च समाचरेत् । "[7]श्रद्धायां प्राणे निविश्यामृतं हुतं शिवो माऽऽविश । प्राणमन्नेनाऽऽप्यायस्व । श्रद्धायामपाने निविश्यामृतं हुतं शिवो माऽऽविश । अपानमन्नेनाऽऽप्यायस्व । श्रद्धायां व्याने निविश्यामृतं हुतं शिवो माऽऽविश । व्यानमन्नेनाऽऽप्यायस्व । श्रद्धायामुदाने निविश्यामृतं हुतं शिवो माऽऽविश । उदानमन्नेनाऽऽप्यायस्व । श्रद्धायां समाने निविश्यामृतं हुतं शिवो माऽऽविश । समानमन्नेनाऽऽप्यायस्व ।" इति पञ्चभिः ।

1 अत्यशनं वर्जयेत्—गोविन्दस्वामी.

2 अमृतस्यापिधानमुपरि प्रच्छादनं उदकं तत्त्वमसीति मन्त्रार्थः । हृदयं जीवायतनं तत्रस्थो जीव आमन्त्र्यते । ग्रन्थिः बन्धनं प्राणायतनं असि रुद्रः अन्तकः अन्तकरः सन् मा अन्तः विश अन्तको मा भूरित्यर्थः । यज्जीवितं मम तेनान्नेन मां आप्यायस्व वर्धय । —गोविन्दस्वामी.

3 निश्रावयति—वी. मि. आ.

4 A. S. B. ends here abruptly.

5 अथ परमात्मा स्मृतः पुरुषः पुरि शेत इति व्युत्पत्त्या । आह च कृष्णद्वैपायनः सावित्र्युपाख्याने—'अङ्गुष्ठमात्रं पुरुषं विचकर्ष यमो बलात्' इति । तत्परिमाणश्च तदाश्रयश्चासावीश्वरः जगतो जङ्गमस्य सर्वशब्दात् स्थावरस्य शास्ता प्रभुः प्रभूतं प्रियतमं विश्वं भुनक्ति भुङ्क्त इति वा विश्वभुक् ।—गोविन्दस्वामी.

6 पञ्चैते मन्त्राः हुतानुमन्त्रणं तत्साधनं हुतस्य भुक्तस्यानुमन्त्रणमन्वीक्ष्य वदनं तदूर्ध्वहस्तः समाचरेत् ।—गोविन्दस्वामी.

7 "श्रद्धायां प्राणे निविश्यामृतं हुतम् । प्राणमन्नेनाऽऽप्यायस्वे"ति पञ्च । "ब्रह्मणि म आत्माऽमृतत्वायेत्यात्मानम् । अक्षरेण चात्मानं योजयेत् ।—मु. बो.

"[1]ब्रह्मणि म आत्माऽमृतत्वाये"त्यक्षरेण चात्मानं योजयेत्। सर्वक्रतुयाजिनामात्मयाजी विशिष्यते[2]। अथाप्युदाहरन्ति।

यथा हि तूलमैषीकमग्नौ प्रोतं प्रदीप्यते।
तद्वत्सर्वाणि पापानि दह्यन्ते ह्यात्मयाजिनः[3] ॥

केवलाघो भवति केवलादी। मोघमन्नं विन्दत इति[4]। स एवमेव वाहरहः सायंप्रातर्जुहुयात्[5]। अद्भिर्वा सायम् ॥

'[6]शालीनाः' शालानिवासशीलाः। 'यायावरा'श्च सर्वदाटनशीलाः साग्नयो गृहस्थविशेषाः। '[7]आत्मयाजी' योऽग्निमेवससाधनं परमात्मबुध्या उपासते। 'आवश्यकं' स्नानादिपञ्चयज्ञान्तम्। 'संमृष्टं' संमार्जन्यादिना शोधितम्। 'उपलिप्ते' गोमयोदकाभ्याम्। '[8]उद्धृतम्' अन्नमिति शेषः।

1 स्वशरीरमनुमन्त्रयत इति शेषः। जीवपरमात्मानावेकीभावयेदिति मन्त्रार्थः—**गोविन्दस्वामी.**

2 विदुषः प्रशंसैषा। तथा च श्रुतिः—'स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात्' इति।—**गोविन्दस्वामी.**

3 इषीकं तृणविशेषः। तूलमग्रं शुष्कमिति शेषः। 'आत्मयाजी' यथाविधि भुञ्जानः। 'सर्वाणि' इह जन्मनि जन्मान्तरे च कृतानि। श्रुतिरपि—'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति' इति।—**गोविन्दस्वामी.**

4 तै. ब्रा., २. ८. ८. ३; एवमविदुषो निन्दया विदुषः प्रशंसा। अघं पापम्। इतरथा केवलाघो भवेत्। कोऽसौ केवलादी केवलहारीत्यर्थः। स एव मोघमन्नं विन्दते। इत्यनया ऋचा निन्द्यत इति शेषः। अन्नदानप्रशंसा। मोघं वृथा अन्नमदनीयं विन्दते भुङ्क्ते अप्रचेताः अविद्वानित्येतत। नो सखायं नाप्यभ्यागतं पूजयति स एव केवलाघो भवति केवलादित्वात्।—**गोविन्दस्वामी.**

5 अत एतद्गम्यते—'सर्वावश्यकावसाने' इत्यस्य दिवसे कर्तव्यानामन्ते दिवाभोजिन एवमेव रात्रावित्यर्थ इति—**गोविन्दस्वामी.**

6 Reproduced by वी. मि. आ., ४७२–४७३ and गृ. र., ३२०–३२१.

7 आत्मयाजी पुनः 'जीर्णस्स्यात् तस्याग्निहोत्रचेष्टायाम्' इत्यनेन विधानेनात्मनि समारूढाग्निः—**गोविन्दस्वामी.**

8 क्वचित् भूतमिति पाठः। तत्र भूतं सिद्धमित्यर्थः—वी. मि. आ.

'उपस्थानं' तत्संमुखत्वेन नम्रीभावः। 'न्यस्तं' पात्रे निहितम्। 'प्रदक्षिणमन्नमुदकम्' इति, तस्यायमर्थः—उदकं गृहीत्वा सर्वतोदिक्कं प्रदक्षिणमुदकेन सेचनमन्नस्य तत्र कुर्यादिति। 'पञ्च प्राणाहुतीः' इत्यन्वयः। 'वाचं यच्छेद्' इत्यभिधाय पुन'स्तूष्णीं'ग्रहणं वाग्यमस्य पञ्चाहुतिमात्रविषयतानिवारणार्थम्। 'अस्कन्दयन्' अन्नमवकिरन्। एतेषां शालीनादीनां तिलादिसंसृष्टान्नभक्षणं विनापि भोजनान्तेऽग्नेरुपस्पर्शनं नित्यवदङ्गमित्युक्तम् 'अग्निमुपस्पृशेद्' इति। 'कन्दानि' सूरणादीनि। 'मूलानि' मूलकादीनि। 'सर्वभक्ष्य'ग्रहणादेवापूपादिप्राप्तेस्तद्ग्रहणं दोषातिशयार्थम्। 'दन्तैर्नावद्येत्[1]' दन्तैः खण्डयित्वा शेषा न पुनर्भक्षणीया इत्यर्थः। 'पञ्चभिः' उक्तमन्त्रैरिति शेषः। 'ब्रह्मणि म आत्माऽमृतत्वाय' इत्यनेन मन्त्रेण 'अक्षरेण' परब्रह्मणा 'आत्मानं' जीवं 'योजयेद्' एकतया चिन्तयेदित्यर्थः। 'अद्भिर्वा सायम्' इति, सायंभोजनासंभवेऽद्भिरेव प्राणाहुत्यादिकं सर्वं संपादनीयम्॥

[2]<u>आपस्तम्बः</u>—[२, १, १–३]

पाणिग्रहणादधि गृहमेधिनोर्व्रतम्। कालयोर्भोजनम्। अतृप्तिश्चान्नस्य॥

'पाणिग्रहणादधि' विवाहादूर्ध्वम्। 'गृहमेधिनोः' गृह-

1 दन्तैर्न छिद्येत्—उ; दन्तैः खण्डयित्वा न भक्षयेदित्यर्थः—वी. मि. आ., गृ. र; दन्तैर्नावद्येत् न खण्डयेत् दन्तखण्डितावशिष्टं पुनर्भक्षणाय नादद्यादित्यर्थः—गोविन्दस्वामी.

2 वी. मि. आ., ४७३; ब, ज, द, MSS. read आपस्तम्बः after बौधायनः, pp. 237.

स्थयोर्दम्पत्योः। 'कालयोः' सायंप्रातःकालयोः 'भोजनम्'। 'अन्नस्य' अन्नेनेत्यर्थः। सुहितार्थयोगे षष्ठी[1] ॥

गौतमः—[९, ५९]

सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत[2] ॥

[3]बौधायनः—[२, १३, १०–१४]

गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत्।
प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः[4] ॥

अन्यत्र प्रायश्चित्तात्प्रायश्चित्ते तदेव विधानम्। अथाप्युदाहरन्ति।

अन्तरा प्रातराशं च सायमाशं तथैव च।
सदोपवासी भवति यो न भुङ्क्ते कदाचन[5] ॥
प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत्।
त्रेताग्निहोत्रमन्त्रान्वै द्रव्यालाभे यथा जपेत् ॥ इति।
[6]स एवमेवाचरंस्तु ब्रह्मभूयाय कल्पते।

'[7]गृहस्थो'ऽत्राऽऽहिताग्निः। 'अनश्नन्' उपवासं कुर्वन्। 'अवकीर्णी' अवकीर्णिविहितप्रायश्चित्तार्हः। 'अन्यत्र प्राय-

1 सुहितार्थयोगे करणे षष्ठी भवति 'पूरणगुणसुहितार्थ'[२-२-११] इति ज्ञापनात्। अन्नेन तृप्तिं न गच्छेयाताम्। यावत्तृप्तिर्न भोक्तव्यम्।—हरदत्तः.

2 अन्तरा भोजनप्रतिषेधार्थोऽयमारम्भः, अर्थप्राप्तत्वात्। तुशब्दो विशेषवाची, अन्नविशेषस्य विप्रतिषेधो न मोदकानामपीति। अभिपूजितं नमस्कारः। अनिन्दन् कदन्नत्वादिदोषेणाकुत्सयन् भुञ्जीत।—मस्करी.

3 वी. मि. आ., ४७३–४७४; गृ. र., ३२१–३२२.

4 अनशननिन्दैषा—गोविन्दस्वामी.

5 कालयोरन्तराऽनशनं तदुपवासफलं भवेत्। अतश्च नान्तरा भोजनं कर्तव्यम्।—गोविन्दस्वामी.

6 'एवमेवाचरन्' इति 'उत्तम एवमेवाचरन्' इति च—मु. बो. पाठौ.

7 Reproduced by वी. मि. आ. and गृ. र.

श्चित्तात्' उपवासयुक्तात्प्रायश्चित्तादन्यत्र । अत्रैव हेतुः—'प्रायश्चित्ते तदेव विधानम्' अनशनमेव विशेषविहितम् । अनेनेदमुक्तं भवति—यत्राहिताग्न्युद्देशेन विशेषविहित उपवासविधिस्तत्रैवोपवासकर्मणि तस्याधिकारो नान्यत्रेति । एवं ब्रह्मचारिणोऽपि । 'अन्तरा प्रातराशम्' इत्यादि—'अन्तरा' मध्ये [1]अशनम् 'आशो' भोजनम् । 'उपवासी' उपवासफलभाक् । निरुद्धे भोजनार्हत्वे सत्यन्नाद्यसंभवादेव भोजननिवृत्तौ । त्रयोऽग्नयः 'त्रेता' गार्हपत्यादयः । 'द्रव्यालाभे' अग्निहोत्रहवनीयद्रव्यालाभे ॥

[2]पुष्टिकामाधिकारे आपस्तम्बः—[२, १९, ३–१२]

औदुम्बरश्चमसः सुवर्णनाभः प्रशस्तः[3] । न चान्येनापि भोक्तव्यम् । यावद्ग्रासं न सन्नयन्नस्कन्दयन्नापजिहीतापजिहीत वा कृत्स्नं ग्रासं ग्रसेत् सहाङ्गुष्ठम् । न च मुखशब्दं कुर्यात् । पाणिं च नावधुनुयात् । आचम्योर्ध्वौ पाणी धारयेदाप्रोदकीभावात् । ततोऽग्निमुपस्पृशेत् । दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः । स्थालीपाकानुद्देश्यानि च वर्जयेत् । सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥

'[4]औदुम्बरः' ताम्रमयः । 'न चान्येनापी'त्यादिना [5]तत्पुत्रेणापि तत्र पात्रे [6]न भोक्तव्यमित्युक्तम् । 'यावद्ग्रासं'

1 मध्ये प्रातराशो भोजनं—ब, ज, द ; मध्ये आशो भोजनम्—ना.

2 वी. मि. आ., ४७५ ; गृ. र., ३२२–३२३.

3 प्रशास्तः—मु. आप. ; चमु भक्षणे, यत्र चम्यते स चमसो भोजनपात्रम् । सुवर्णनाभः सुवर्णेन मध्ये अलङ्कृतः स प्रशास्तः प्रशस्तो भोजने ॥—हरदत्तः.

4 Reproduced by वी. मि. आ. and गृ. र.

5 तत्पित्रादिनापि—ज ; न चान्येन कर्तुः पित्रापि तत्र पात्रे भोक्तव्यम्—हरदत्तः.

6 न भोक्तव्यमित्यर्थः—उ.

यावद्ग्रसितुं शक्यमित्यर्थः। 'नापजिहीत' सव्येन पाणिना पात्रं न विमुञ्चेत्, अथवा 'अपजिहीत'। अयं च पात्रधारणाधारणविकल्पः षोडशिग्रहणाग्रहणवद्व्यवस्थितः। यदि प्रथमं पात्रधारणपूर्वकं भोजनमुपक्रान्तं तदा धारणमेव। [1]यदि प्रथममधृत्वैव भोजनमुपक्रान्तं तदाऽधारणमेवेति कपर्दी[2]। '[3]प्रोदकीभावः' प्रचुरोदकसंबन्धित्वम्। एतच्चा'ग्न्युस्पर्शनं' तिलमांसादिसंसृष्टान्नभोजनविषयम्। 'दिवा न भुञ्जीत' पुनरितिशेषः। 'स्थालीपाकः' पक्षादिचरुः। 'अनुद्देश्यानि' देवपित्राद्युद्देशेनासंकल्पितानि। स्वयमेव 'यज्ञोपवीती' 'सोत्तराछादनः' सोपरिवस्त्र एव 'भुञ्जीत'। नोत्तरीयं वासोऽव्यतिरेकेण भोजनकाले [4]सूत्रादिना कार्यमिति कपर्दिभाष्यम्॥

[5]वसिष्ठः—[१२, १५–१७]

प्राङ्मुखोऽन्नानि भुञ्जीत। तूष्णीं साङ्गुष्ठं कृत्स्नं ग्रासं ग्रसेत्। न च मुखशब्दं कुर्यात्॥

'अन्न'ग्रहणात्ताम्बूलादौ प्राङ्मुखत्वादिनियमो नास्तीति सूचितम्। 'तूष्णीं'ग्रहणेनैव मौने प्राप्ते पुन'र्मुखशब्द'निषेधो भाषणव्यतिरिक्तसीत्कारादिध्वनिनिवृत्त्यर्थः॥

1 अथवा प्रथममन्यथैव भोजनमुपक्रान्तं तदा—ब, द.

2 Quoted by वी. मि. आ., ४७५.

3 प्रोदकीभावः प्रचुरोदकत्वम्। बहुनोदकेनौष्ठादिप्रक्षालनं कुर्यादित्यर्थः—वी. मि. आ; आप्रोदकीभावात् यावत्प्रचुरजलसंबन्धम्—गृ. र.; भुक्त्वाचम्य पाणी ऊर्ध्वं धारयेत् यावत्प्रगतोदकौ शुष्कौ भवतः।—हरदत्तः.

4 सूत्रादिनापि कर्तव्यमिति—ना.

5 गृ. र., ३२३.

[1]मनुः—[४, ६२]

न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ।
नातिप्रगे नातिसायं न सायं प्रातराशितः ॥

'उद्धृतस्नेहं' पिण्याकादि । 'अतिप्रगे' अचिरोदित एव सूर्ये । 'अतिसायं' सूर्यास्तमनसमीपे । 'प्रातराशितः' प्रातस्तृप्तः 'सायं' न भुञ्जीत[2] ॥

[3]विष्णुः—[६८, ४८]

न तृतीयमथाश्नीयान्नापथ्यं च कदाचन[4] ।
नातिप्रगे नातिसायं न सायं प्रातराशितः ॥

[5]विष्णुपुराणे—[३, ११, ८७]

अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्[6] ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा[7] ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनः ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥

[8]ब्रह्मपुराणे

सर्वाङ्गुलीभिरश्नीयान्नावधूयेत्करं क्वचित् ।
कुर्यात्क्षीरान्नमाहारं[9] न च पश्चात्पिबेद्दधि ॥

1 गृ. र., ३२३–३२४ ; वी. मि. आ., ४७६.
2 भुञ्जीत । तेन प्रातः साकांक्षमशितव्यम्—ना.
3 वी. मि. आ., ४७५–४७६ ; गृ. र., ३२४.
4 न चापथ्यं कथंचन—वी. मि. आ., मु. विष्णुः
5 वी. मि. आ., ४७७ ; गृ. र ; ३२४.
6 समम्—उ.
7 ततः—ब, ज, द.
8 वी. मि. आ., ४७७ ; गृ. र., ३२४ ; पद्मपुराणे—ब, द, ज.
9 वी. मि. आ., ४७७ ; गृ. र., ३२४.

जठरं पूरयेदर्धमन्नैर्भागं जलेन च।
वायोः संचारणार्थाय चतुर्थमवशेषयेत् ॥

[1]देवलः

न भुञ्जीताघृतं नित्यं गृहस्थो भोजनं स्वयम्।
पवित्रमथ हृद्यं च सर्पिराहुरघापहम् ॥

मनुः—[४, ५५]

नाश्नीयात्संधिवेलायाम् ॥

[2]आपस्तम्बः—[१, १७, ६–८]

न नावि भुञ्जीत तथा प्रासादे कृतभूमौ च भुञ्जीत ॥

'नावि' आसीन इति शेषः। 'प्रासादे' प्रासादस्योपरीत्यर्थः। 'कृतभूमौ' मृत्तिकाप्रक्षेपेण संपादितभूमौ[2] ॥

[3]ब्रह्मपुराणे

यस्तु पाणितले भुङ्क्ते यस्तु फूत्कारसंयुतम्।
प्रसृताङ्गुलिभिर्यश्च[4] तस्य गोमांसवच्च[5] तत् ॥
नाजीर्णे भोजनं कुर्यात् स्याच्च नातिबुभुक्षितः।
[6]हस्त्यश्वरथयानोष्ट्रप्रासादस्थो न भक्षयेत्[7] ॥

1 वी. मि. आ., ४७७; गृ. र., ३२४.

2 प्रासादो दारुमयो मञ्चः। तत्रापि न भुञ्जीत। भूमावपि भुञ्जानः कृतायां गोमयादिना संस्कृतायां भुञ्जीत। अपर आह—प्रासादोऽपि यदा कृतभूमिर्भवति न केवलं दारुमयः, तदा तत्रापि भुञ्जीतैवेति—हरदत्तः.

3 वी. मि. आ., ४७६–४७७; गृ. र., ३२४–३२५.

4 भिश्चैव—ना; भिर्यस्तु—गृ. र.

5 तु—वी. मि. आ.

6 हस्त्यश्वरथयानेषु —उ;

7 भोजयेत्—उ.

[1]श्मशानान्तर्गतो वापि देवालयगतोऽपि वा ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥
न संध्ययोर्न मध्याह्ने नार्धरात्रे कदाचन ।
नार्द्रवासा नार्द्रशिरा न चायज्ञोपवीतवान् ॥
न प्रसारितपादस्तु पादारोपितपाणिमान् ।
नावसक्थिकसंस्थश्च न च पर्यङ्किकास्थितः ॥
न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ॥
न चर्मोपरिसंस्थश्च चर्मवेष्टितपार्श्ववान् ।
अन्नस्य जन्मकालुष्यं दुष्पङ्क्तिं च न कुत्सयेत् ॥
ग्रासशेषं तु नाश्नीयात् पीतशेषं पिबेन्न तु[2] ।
शाकमूलफलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ॥
संचयेन्नान्नमन्नेन विक्षिप्तं पात्रसंस्थितम् ।
बहूनां भुञ्जतां[3] मध्ये न चाश्नीयात्त्वरान्वितः ॥
वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद्व्रजेत् ।
[4]न स्पृशेत्स्वशिरो विप्रः सोच्छिष्टेनैव पाणिना ॥
[5]तिलकल्कं जलं क्षीरं दधिक्षौद्रघृतानि तु ।
न त्यजेदर्धजग्धानि सक्तूंश्चाथ कदाचन ॥

'[6]प्रसृताङ्गुलिभिः' असङ्कुचिताभिरङ्गुलीभिः । 'स्याच्च नातिबुभुक्षितः' अतिशयेन बुभुक्षयाऽऽत्मानं न

1 न श्मशानान्तरगतः—ना ; श्मशानाभ्यन्तरगतो—वी. मि. आ ; श्मशानान्तर्गतो नैव—गृ. र.

2 च—वी. मि. आ.

3 बहूनामश्नतां—वी. मि. आ.

4 न स्पृशेत शिरो—उ ; न स्पृशेच्च शिरो—गृ. र.

5 तिलकल्कं घृतक्षीरं दधिक्षौद्रजलानि च—उ, ब, द ; तिलकल्के—वी. मि. आ.

6 Reproduced by वी. मि. आ., ४७७ and गृ. र., ३२५–३२६.

पीडयेदित्यर्थः। 'यानं' दोलादि। 'पर्यङ्किका' मञ्चिका। 'दुष्टाः' पतितादयः। 'चर्मवेष्टितपार्श्ववान्' कृतसन्नाहादिः। 'जन्मकालुष्यं दुष्पङ्क्तिं च न कुत्सयेत्' 'जन्मकुत्सनं' निन्दितदेशोत्पत्त्या, 'कालुष्यं' मलिनत्वम्, 'दुष्पङ्क्तिः' निन्दितपाकः[1]। 'पीतशेषं' [2]पानपात्रावशिष्टमेव। 'दन्तच्छेदैः' दन्तैश्छित्वा। 'अन्नेन' अपूपादिना पात्रे विकीर्णमन्नं न राशीकुर्यादित्यर्थः। 'उच्छिष्टेन पाणिना' उच्छिष्टान्नलिप्तेन पाणिना, 'स्वशिरो न स्पृशेत्' इत्यर्थः। 'अर्धजग्धानि' किंचिद्भुक्तानि॥

[3]महाभारते

पानीयं पायसं सर्पिर्मधुशेषं दधीत्यपि।
निरस्यं शेषमेतेषां न प्रदेयं तु कस्यचित्॥
'निरस्यम्' अत्याज्यम्॥

[4]ब्रह्मपुराणे

अप्येकपङ्क्त्यां नाश्नीयात् [5]संयुतः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं [6]भवेत्॥
भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिं च भेदयेत्।

[7]विष्णुपुराणे—[३, ११, ८३, ८६]

न चासन्दीस्थिते पात्रे नादेशे च नरेश्वर।

1 मन्दपाकः—गृ. र.
2 पानपात्र एवावशिष्टं—ब, द, ना.
3 गृ. र., ३२६.
4 गृ. र., ३२६.
5 संबन्धिस्वजनैः सह—ना; संवृतः स्वजनैरपि—गृ. र.
6 महत्—ज, ना.
7 गृ. र., ३२६; ब्रह्मपुराणे—इति वी. मि. आ., ४७८.

नाकाले नातिसंकीर्णेऽदत्वाग्रं न नरो ग्रसेत्[1] ॥
नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते ।
[2]मण्डाम्बुदधिसर्पिर्भ्यः सक्तुभ्यश्च विवेकवान् ॥

'आसन्दी' वेत्रादिनिर्मिता । 'अदेशे' रथ्यादौ । 'अकाले' संध्यादौ । 'मण्डः'—

"सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः ।
[3]नातिद्रवा नातिसान्द्रा मण्ड इत्यभिधीयते ॥"

इति चरकः[4] ॥

[5]शङ्खलिखितौ

न भोजनार्थं[6] पाकशालां प्रविशेत् । न वृथापाकं [7]पचेत् । न वृथापाकमश्नीयात् ॥

[8]हारीतः

न क्रुद्धो नान्यमना नाभिभाषमाणोऽश्नीयात् । न शिशून् भर्त्सयन् । नाप्रदाय प्रेक्षमाणेभ्यः । न च तदश्नीयाद्येन देवपितृमनुष्यार्थं न कुर्यात् । एवं ह्याह—

आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् ।
वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य [9]जीवितम् ॥

1 न दत्वाग्रं नरो ग्रसेत्—ब, द, ज ; दत्वाग्रं च नरो ग्रसेत्—ना, गृ. र. ; नादत्वाग्रं नरो ग्रसेत्—वी मि. आ.

2 मध्वन्नदधिसर्पिर्भ्यः—वी. मि. आ.

3 नातिसान्द्रा न चात्यच्छा मण्ड—द, ब, गृ. र.

4 इति चरकोक्तः—ब, द, गृ. र., ३२७.

5 गृ. र., ३२७.

6 भोजनार्थी—ना, गृ. र.

7 चरेत्—ना ; पाचयेत्—गृ. र.

8 वी. मि. आ., ४७८ ; गृ. र., ३२७.

9 जीवनम्—ज.

[1]यद्भुङ्क्ते[2] वेष्टितशिरा [3]यच्च भुङ्क्त उदङ्मुखः ।
सोपानत्कश्च [4]यद्भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥

'प्रेक्षमाणेभ्यः' प्रकर्षेण साभिलाषमीक्षमाणेभ्यो बालादन्येभ्यः । 'देवपितृमनुष्यार्थम्' इति पञ्चयज्ञोपलक्षणम् । भुज्यत इति 'भोजनं' भोज्यमन्नम् ॥

[5]यमः

अश्नाति यो भृत्यजनस्य मध्ये
[6]मिष्टान्नमेको रसगृध्नुबुद्धिः ।
दीनैः कटाक्षैरपि वीक्ष्यमाणो[7]
व्यक्तं विषं हालहलं स भुङ्क्ते ॥

'रसगृध्नुबुद्धिः' रसे गृध्नुर्बुद्धिर्यस्य, यस्य रसकाङ्क्षिणी मतिरित्यर्थः ॥

[8]विष्णुः—[६८, ४-४७]

न गोब्राह्मणोपरागे चाश्नीयात् । न राजन्यव्यसने[9] । प्रवसितश्चाग्निहोत्री यदाग्निहोत्रं [10]हुतं मन्येत तदाश्नीयात् । यदा कृतं मन्येत वैश्वदेवमपि । पर्वणि च पर्व यदा कृतं

1 गृ. र., ३२७.
2 यो भुङ्क्ते—ब, ज, द, गृ. र.
3 यश्च—गृ. र.
4 यो भुङ्क्ते—गृ. र.
5 गृ. र., ३२७.
6 श्रेष्ठान्नमेको—उ.
7 कटाक्षैरभिवीक्ष्यमाणो—ना, गृ. र.
8 गृ. र., ३२८.
9 न राजव्यसने—ना, गृ, र; न राज्ञो व्यसने—मु. विष्णुः.
10 कृतं—मु. विष्णुः, गृ. र.

मन्येत[1]। [2]नाश्नीयाच्चाजीर्णे। नार्धरात्रे। न मध्याह्ने। न संध्ययोः। नार्द्रवासाः। नैकवासाः। न नग्नः। [3]नोदके। नोत्कुडुकः। न च भिन्नासनगतः। न च शयनगतः। न भिन्नभाजने। नोत्सङ्गे। न भुवि। [4]न पाणौ। लवणं च यत्र दद्यान्न तदश्नीयात्। न बालकं निर्भर्त्सयन्। नैको मृष्टम्[5]। नोद्धृतस्नेहम्। न दिवा धानाः। न रात्रौ तिलसंबन्धम्[6]। न दधिसक्तून्। न कोविदारवटपिप्पलशणशाकम्। नादत्वा। नाहुत्वा। नानार्द्रपादः। नानार्द्रकरमुखश्च। नोच्छिष्टो[7] घृतमादद्यात्। न चन्द्रार्कतारका[8] निरीक्षेत। न मूर्धानं स्पृशेत्। न ब्रह्म कीर्तयेत्। प्राङ्मुखोऽश्नीयात्। दक्षिणाभिमुखो वा। अभिनन्द्यान्नम्[9]। सुमनाः [10]स्रग्व्यनुलिप्तश्च। न निःशेषकृत्स्यात्। अन्यत्र दधिमधुसर्पिःपयःसक्तुपललोदनेभ्यः[11]॥

नाश्नीयाद्भार्यया साकं नाकाशे न तथोत्थितः।
बहूनां प्रेक्षमाणानां नैकस्मिन्बहवस्तथा॥

1 पर्वणि च यदा कृतं मन्येत—गृ. र; पर्वणि च यदा कृतं मन्येत पर्व—मु. विष्णुः.

2 पर्वणि नाश्नीयाच्चार्धरात्रे—गृ. र.

3 Omitted by उ; न जलस्थः—गृ. र.

4 वी. मि. आ. ४७९-४८०—यत्तु पाणौ दद्यान्न तदश्नीयात्। न बालकं etc; न पाणौ। लवणं च यत्र दद्यान्न—मु. विष्णुः.

5 नैको मिष्टम्—वी. मि. आ; नैकान्तोष्णम्—गृ. र.

6 तिलसंबद्धम्—वी. मि. आ.

7 नोच्छिष्टे—उ, गृ. र.

8 तारकादि—ना; न चार्कतारकं—गृ. र.

9 अभिपूज्यान्नम्—मु. विष्णुः.

10 स्रग्गन्धलिप्तश्च—गृ. र.

11 सक्तुपलमोदकेभ्यः—वी. मि. आ., मु. विष्णुः; सक्तूपलमोदकेभ्यः and सक्तूपलनौदनेभ्यः—गृ. र.

[1]शून्यालये वह्निगृहे देवागारे कथंचन ।
पिबेन्नाञ्जलिना तोयं नातिसौहित्यमाचरेत् ॥

'गोब्राह्मणोपरागे' गोब्राह्मणयोर्व्यसने । 'प्रवसितः' अग्निहोत्रदेशं त्यक्त्वा ग्रामान्तरं गतः । 'नोत्कुटुकः' नोत्कटासनः । 'भिन्नं' स्फुटितम् । 'न भुवि' कृत्वेति शेषः । 'पाणौ' स्थितमिति शेषः । 'दद्याद्' देवादिभ्य इति शेषः । 'नादत्वे'त्यनेन ब्राह्मणादिभ्यो दानमकृत्वा [2]नाश्नीयादित्युक्तम् । 'यन्न दद्याद्' इत्यनेनान्यजातीयं [3]दत्वाप्यन्यन्नाश्नीयादिति । 'निःशेषकृत्' सर्वभोजी । आकाशे निराधारे भोजनासंभवादासन्दिकादौ प्रतिषेधो 'नाकाश' इति । 'एकस्मिन्' [4]प्रेक्षमाण इति शेषः ॥

[5]<u>तथा</u>—[६८–४९]

न भावदुष्टमश्नीयान्न भाण्डे भावदूषिते ।
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ॥
'भावदुष्टम्' अशुचित्वेन शङ्कितम् ॥

[6]<u>मनुः</u>

एकवस्त्रो न भुञ्जीत कपाटमपिधाय च ।
भूमौ चानन्तरीकृत्य[7] भिन्नपात्रे न चाशनम् ॥

1 Reproduced by गृ. र., ३२९.

2 नाश्नीयादित्यर्थः—ब, द.

3 दत्वापि नाप्यन्नमश्नीयादित्यर्थः—ब, द.

4 प्रेक्ष्यमाणे इति संबन्धः—ब, ज, द.

5 गृ. र., ३२९.

6 गृ. र., ३२९–३३० ; गृ. र., omits **तथा**. Not found in printed editions of *Manu*.

7 भूमौ वावान्तरीकृत्य—उ; भूमौ देवान्तरीकृत्य—गृ. र.

तथा

नाहारमुपभुञ्जीत तिष्ठन्गच्छन् हसन्नपि ।

[1]तथा

स्वग्रामे ग्रामतो वापि संनिकृष्टे मृते सति ।
न भुञ्जीताशनं धीमानधर्म्यं शोककारणात् ॥

'भिन्नपात्रे न चाशनम्' इत्यत्र न कुर्यादिति शेषः । 'स्वग्रामे' स्वग्रामीणे । 'ग्रामतः संनिकृष्टे' संनिकृष्टग्रामीणे । 'अधर्म्यम्' अधर्मसाधनम् ॥

[2]बृहस्पतिः

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥

भुञ्जीतेत्यनुवृत्तौ—उशना

नानाचान्तः खट्वारूढो न चोत्तानः कदाचन ॥

[3]गौतमः—[९, ५६–५७]

न भक्ष्यानुत्सङ्गे भक्षयेत् । न रात्रौ प्रेष्याहृतम् ॥

'रात्रौ' 'प्रेष्येण' दासादिना आनीतं किंचिदपि न भक्षयितव्यमिति मस्करी[4] ॥

[5]याज्ञवल्क्यः—[१, १३१]

न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥

1 वी. मि. आ., ४७८.
2 गृ. र., ३३०.
3 गृ. र., ३३०.
4 रात्रौ प्रेष्येण शूद्रादिना आहृतं यत्किंचिन्न भक्षयेत्—इति मुद्रितमस्करिपाठः.
5 वी. मि. आ., ४७९.

'भार्यादर्शने' पश्यन्त्यां भार्यायाम्[1] ॥

[2]मनुः—[४, ४३]

नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् ।
'अश्नतीं' [3]भुञ्जानाम् ॥

[4]वसिष्ठः—[१२, २९]

भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते ॥

[5]अङ्गिराः

ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।
न तस्य दोषं मन्यन्ते नित्यमेव मनीषिणः ॥
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद्ब्राह्मणः क्वचित् ।
प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढचेतनः ॥

'ब्राह्मणी'ग्रहणं भर्तृसवर्णोपलक्षणार्थम् । ब्राह्मण्यापि सह कदाचिद्भोजनमध्वन्येव ।

तथा च ब्रह्मपुराणे[6]

ब्राह्मण्या भार्यया सार्धं क्वचिद्भुञ्जीत वाध्वनि ।
असवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् ॥ इति ।

1 Quoted by वी. मि. आ., ४७९.
2 वी. मि. आ., ४७९; गृ. र., ३३०.
3 भक्ष्यमाणाम्—ब, द.
4 गृ. र., ३३०.
5 गृ. र., ३३०–३३१; वी. मि. आ., ४७९.
6 गृ. र., ३३१; वी. मि. आ., ४७९.

[1]ब्रह्मपुराणे

विप्रस्त्वेवमुपस्पृश्य पादाङ्गुष्ठे च दक्षिणे ।
हस्ताभ्यां मन्त्रवद्दद्याद्विधिवच्चावनेजनम् ॥
[2]संमार्ज्य बाहू जानू[3] च गोप्रदानफलं लभेत् ।
भुक्त्वा [4]चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ॥
आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते मही ॥

[5]विष्णुपुराणे—[३, ११, ९०–९८]

भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽथवा[6] ।
आचान्तः पुनराचामेत्पाणी प्रक्षाल्य मूलतः ॥
स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानां तु कुर्वीत स्मरणं ततः[7] ॥
अग्निराप्यायतां धातून् पार्थिवान् पवनेरितः ।
दत्तावकाशो नभसा [8]जरयत्वस्तु मे सुखम् ॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ।
भवत्वेतत्परिणतौ ममास्त्वव्याहतं सुखम् ॥
प्राणापानसमानानामुदानव्यानयोस्तथा ।
अन्नं पुष्टिकरं चास्तु ममास्त्वव्याहतं सुखम् ॥

1 गृ. र., ३३१ ; वी. मि. आ., ४८४.
2 ब, द and वी. मि. आ., add तथा before this line.
3 बाहुं जानुं—वी. मि. आ.
4 नैव for चैव—वीं. मि. आ.
5 गृ. र., ३३२–३३३ ; वी. मि. आ., ४८४–४८५.
6 अपि वा for अथ वा—ना, गृ. र and वी. मि. आ.
7 नरः—ब, ज, ना, द, गृ. र., वी. मि. आ.
8 जरयंस्त्वस्तु—ब, द ; जरयन्नस्तु—वी. मि. आ.

अगस्तिरग्निर्वडवानलश्च
भुक्तं मयान्नं जरयत्वशेषम् ।
सुखं च मे तत्परिणामसंभवं
यच्छत्वरोगं मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेही प्रधानभूतो भगवान्यथैकः ।
सत्येन तेनान्नमशेषमेतदारोग्यदं मे परिणाममेतु ॥
विष्णुरत्ता[1] तथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन यद्भुक्तं[2] जीर्यत्वन्नमिदं तथा ॥
इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

[3]आपस्तम्बः—[२, ४, २४]

यत्र भुज्यते देशे[4] तत् समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपात् संकृष्याद्भिः [5]संमृज्योत्तरतः शुचौ देशे रुद्राय निनयेत् । एवं वास्तु शिवं भवति ॥

'समूहनं' वर्धन्यादिना शोधनम् । 'निर्हरणं' समूहस्योच्छिष्टस्यापनयनम् । 'अवोक्ष्य' प्रसिच्य, समाचाराद्गोमयोदकेन[6] । 'अमत्राणि' पाकभाण्डान्यत्र । 'उत्तरतो' गृहात् । 'वास्तु' गृहम् । 'शिवम्' भद्रम् ॥

[7]हारीतः

पश्चात्पत्नी शेषं बलिं हरेत् ॥

1 विष्णुर्यथा—गृ. र.
2 मद्भुक्तं—गृ. र.
3 गृ. र., ३३३; वी. मि. आ., ४८५.
4 देशे समूह्य—मु. आप.
5 संसृज्य—मु. आप.; संसिच्य—गृ. र.; संश्रित्य—वी. मि. आ.
6 Quoted by वी. मि. आ., ४८५.
7 वी. मि. आ., ४८५; गृ. र., ३३३.

एतच्च पाकभाण्डशिष्टेनाऽन्नेन रौद्रबलिहरणं कर्तव्यमिति जयस्वामी[1] ॥

## अथ भोज्याभोज्यानि

[2]तत्र गौतमः—[१७, १]

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत ॥

'प्रशस्तानां' सम्यक् स्वकर्मनिष्ठत्वेन स्तुतिविषयाणाम्। 'द्विजातीनां' त्रैवर्णिकानाम्[3] ॥

[4]यमः, हारीतजमदग्नी प्रथमद्वितीययोः, पैठीनसिश्च तृतीये

ब्राह्मणस्य सदाश्नीयात् क्षत्रियस्य च पर्वसु ।
[5]प्रकृतेषु च वैश्यस्य शूद्रस्य न कदाचन ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ।
ब्राह्मणान्नं क्षत्रियान्नं वैश्यानां शौद्रमेव च ॥
तां तां योनिं व्रजेद्विप्रो भुक्त्वान्नं यस्य वै मृतः ।

'पर्वसु' पौर्णमास्यादिषु। 'प्रकृतेषु' प्रक्रमविशेषेषु गोमङ्गलादिषु। 'यस्य' ब्राह्मणादेः। शूद्रान्ननिषेधश्चासच्छूद्रान्नविषयः, [6]गवादिप्राप्त्यसंभवे सच्छूद्रान्नविषयश्च। तथा च ब्रह्मपुराणे[7]

1 Quoted by वी. मि. आ.

2 वी. मि. आ., ४८८; गृ. र. ३३४.

3 प्रकर्षेण स्तुतानां 'स्वकर्मसु' न क्षत्रियादिकर्मसु, अर्थकामपरित्यागेन मुख्यकर्मानुष्ठानरतानामित्यर्थः, तेषां द्विजातीनां उपनीतानाम्। भोजनस्यार्थप्राप्तत्वात्परिसंख्यार्थमिदं वचनम्। ब्राह्मणग्रहणं द्विजातिप्रदर्शनार्थम्।—मस्करी.

4 यमः—वी. मि. आ., ४८८; गृ. र., ३३४.

5 प्राकृतेषु—वी. मि. आ.

6 सच्छूद्राद्गवादिप्राप्त्यसंभवे तदन्नविषयश्च—ब, द, ज.

7 वी. मि. आ., ४८८; गृ. र., ३३४.

राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवाम् ।
गोभूमिरत्नहेमार्थं सच्छूद्रस्य गृहे तथा ॥

'अश्नीयाद्' इत्यन्वयः ॥

[1]आपस्तम्बः—[१, १८, ९–१३]

त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यम्[2] । प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यम्[3] । यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति[4] । चरितनिर्वेषस्य भोक्तव्यम्[5] । सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ॥

'समावृत्त'ग्रहणाद्ब्रह्मचारिणः सर्ववर्णेषु भिक्षाचरणं न निषिद्धम् । 'प्रकृत्या' स्वाभाविक्या, स्वधर्मपरतया स्थितस्येति शेषः । 'कारणाद्' उपपातकादियोगात् । 'अप्रायश्चित्तं' प्रायश्चित्तादितरन्नित्यनैमित्तकं कर्म । इदं च 'प्रकृत्ये'त्यनेनैवोक्तम् । 'प्रायश्चित्तवति' प्रायश्चित्तहेतुपापसद्भावे । 'चरितनिर्वेषस्य' कृतप्रायश्चित्तस्य[6] । इदं च धर्मनिष्ठक्षत्रियवैश्यान्नभोजनानुज्ञानं यमवचनानुसारात् पर्वमङ्गलविषयम् ॥

1 वी. मि. आ., ४८८–४८९ ; गृ. र., ३३४.

2 समावृत्तो द्विजातिः क्षत्रियादीनां त्रयाणां वर्णानां गृहे न भुञ्जीत—हरदत्तः.

3 ब्राह्मणस्य त्वन्नं प्रकृत्या स्वभावेनैव भोक्तव्यम् । कारणादेव त्वभोज्यम् । कारणमाह—हरदत्तः.

4 यत्र यदाग्निहोत्रवैश्वदेवादि नित्यमाभ्युदयिकं वा अप्रायश्चित्तं कर्मासेवते तात्पर्येण करोति । प्रायश्चित्तवत्यात्मनि चोदितं प्रायश्चित्तं प्राणायामोपवासपथिकृदादि न करोति तदा एतस्मादेव कारणाद्ब्राह्मणस्यान्नमभोज्यमिति ॥—हरदत्तः.

5 चरितो निर्वेषः प्रायश्चित्तं येन तस्यान्नं भोक्तव्यम् । तद्भोजने न दोषः ।—हरदत्तः.

6 Quoted by वी. मि. आ., ४८९.

[1]मनुः—[४, २२३]

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥

'अश्राद्धिनः' नित्यश्राद्धमकुर्वतः। 'अवृत्तौ' आपदि। 'एकरात्रिकम्' एकदिवसनिर्वाहयोग्यमन्नम् ॥

[2]हारीतः

शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वं चोपगच्छति ॥

[3]वसिष्ठः [६, २६; २५; २७]

शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः ।
स भवेत्सूकरो ग्राम्यस्तस्य वा जायते कुले ॥
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः ।
जुह्वन्वापि जपन्वापि गतिमूर्ध्वां[4] न गच्छति[5] ॥
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति ।
यस्यान्नं तस्य वै पुत्रा न च स्वर्गार्हको भवेत्[6] ॥

[7]यमः

शूद्रान्नेनोदरस्थेन ब्राह्मणो यस्त्यजेत्तनुम्[8] ।

1 वी. मि. आ., ४९०; गृ. र., ३३४-३३५.

2 वी. मि. आ., ४९०; गृ. र., ३३५.

3 वी. मि. आ., ४९०; गृ. र., ३३५; Verses under वसिष्ठः are omitted by ब and द.

4 गतिमिष्टां—गृ. र.

5 विन्दति—ना, गृ. र., वी. मि. आ.

6 'यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते' इत्यपरार्कपाठः—वी. मि. आ.; स्वर्गं तस्य विनश्यति—ब, द; न स्वर्गार्हो भवेत्तु वै—ज, ना.

7 वी. मि. आ., ४९०-४९१; गृ. र., ३३५.

8 यस्तनुं त्यजेत्—गृ. र.

आहिताग्निस्तथा यज्वा स शूद्रगतिमाप्नुयात् ॥
यश्चाहिताग्निर्विप्रस्तु शूद्रान्नान्न निवर्तते[1] ।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म[2] त्रयोऽग्नयः ॥

[3]**अङ्गिराः**

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स च जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते[4] ॥

[5]**पैठीनसिः**

गृहमेधी न शूद्रान्नमश्नीयादायुर्बलं तेज इत्यपक्रामति ॥

[6]**विष्णुपुराणे**

[7]सम्यक् प्रोक्ष्य तु गृह्णीयाच्छूद्रान्नं गृहमागतम्[8]।

[9]**भविष्यपुराणे**

उपक्षेपणधर्मेण[10] शूद्रान्नं यः पचेद्द्विजः ।
अभोज्यं तद्भवेदन्नं स च विप्रः पुरोहितः ॥
अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥

1 शूद्रान्नेनाभिवर्तते—गृ. र.
2 व्रतं for ब्रह्म—गृ. र.
3 वी. मि. आ., ४९१ ; गृ. र., ३३५.
4 श्वा चैव जायते—ब, द, ज, गृ. र., वी. मि. आ.
5 वी. मि. आ., ४९१ ; गृ. र., ३३५.
6 गृ. र., ३३६ ; वी. मि. आ., ४९२.
7 संप्रोक्ष्य चैव—ब, द ; संप्रक्षाल्यैव—ना ; संप्रोक्ष्यैव तु—गृ. र
8 शूद्रस्यान्नं गृहागतम्—ब, द.
9 वी. मि. आ., ४९१ ; गृ. र., ३३६.
10 उपक्षेपेण धर्मेण—गृ. र.

शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम् ।
शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥

'उपक्षेपणधर्मः' शूद्रस्वामिकस्यान्नस्य पाकार्थं ब्राह्मणगृहे समर्पणम् । [1]यत्तु—

यथा यतस्ततोऽप्यापः शुद्धिं यान्ति नदीं गताः ।
शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं च सदा शुचि ॥

इत्यङ्गिरोवचनम्, तच्छूद्राद्ब्राह्मणेन प्रतिग्रहादिना यल्लब्धमन्नं तद्विषयम्[2] ॥

[3]याज्ञवल्क्यः—[१, १६६]

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

'गोपालः' यस्य गाः पालयति तस्यैव भोज्यान्न इति भर्तृयज्ञः । 'कुलमित्रम्' कुलक्रमादायाता येन सह मैत्री । 'अर्धसीरी' मिलित्वा कर्षकः । 'नापितः' क्षुरकर्मोपजीवी, सोऽपि स्वकीय एव । 'आत्मनिवेदनं' कुलतः शीलतो दृष्टादृष्टप्रयोजनेनोपचारविशेषेण च स्वाभिप्रायकथनपूर्वकं तदाश्रयणम् ।

तथा च मनुः—[४, २५४]

यादृशोऽस्य भवेदात्मा यादृशं च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥ इति ।

1 वी. मि. आ., ४९१–४९२ ; गृ. र., ३३६.
2 Quoted by गृ. र.
3 वी. मि. आ., ४९२ ; गृ. र., ३३६.

[1]देवलः

स्वदासो नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः ॥

'कृषीवलो'ऽत्र याज्ञवल्क्यवचनानुसारादर्धसीरी । तेषामाममन्नमनापद्यपि ग्राह्यम् । आपदि त्वेतेषां पक्वान्नमपि ग्राह्यम् ॥

[2]शूद्राधिकारे गौतमः—[१७, ६–७]

पशुपालक्षेत्रकर्षककुलसंगतकारयितृप्रतिचारका[3] भोज्यान्नाः । वणिक् चाशिल्पी ॥

'कारयिता' नापित इति मस्करिभाष्यम्[4] । यः शूद्रो 'वणिक्' स चेद् 'अशिल्पी' तक्षादि न भवति तदा भोज्यान्नः ॥

[5]शूद्राधिकारे आपस्तम्बः—[१, १८, ६–८]

[6]एतस्यापि धर्मोपनतस्य सुवर्णं दत्वा पशुं वा भुञ्जीत । [7]नात्यन्तमन्ववस्येत् । [8]वृत्तिं प्राप्य विरमेत् ॥

'सुवर्णं वा दत्वा' 'पशुं वा दत्वा' धर्मेणोपनतस्य शूद्रस्यापि भुञ्जीतेत्यर्थः । 'नात्यन्तमन्ववस्येत्' वृत्त्यन्तरालाभेऽप्येतदीयान्नभोजनरतिर्न स्यादित्यर्थः ॥

1 वी. मि. आ., ४९२–४९३ ; गृ. र., ३३७.
2 वी. मि. आ., ४९३ ; गृ. र. ३३७.
3 परिचारकाः—मु. गौ ; प्रचारकाः—वी. मि. आ., गृ. र.
4 Quoted by वी. मि. आ., ४९३.
5 वी. मि. आ., ४८९–४९०.
6 स्वयमप्यवृत्तौ सुवर्णं दत्वा—मु. आप. ; तस्यापि धर्मोपनतस्य—वी. मि. आ.
7 नात्यन्तमध्यवस्येत्—वी. मि. आ.
8 यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत्—हरदत्तः.

[1]अङ्गिराः

गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च ।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् ॥
'पयसा कृतं' किलाटादि[2] ॥

[3]हारीतः

कन्दुपक्वं स्नेहपक्वं पायसं दधि सक्तवः ।
एतान्यशूद्रान्नभुजो[4] भोज्यानि मनुरब्रवीत् ॥

[5]पराशरः

तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजाग्रकरसंस्पृष्टं[6] सर्वं तद्धविरुच्यते ॥

[7]यमः

यथा जलं निर्गमनेष्वपेयं
नदीगतं तत्पुनरेव पेयम् ।
तथान्नपानं विधिपूर्वमागतं
द्विजातिपात्रान्तरितं न दुष्यति ॥

1 वी. मि. आ., ४९३–४९४ ; गृ. र., ३३७.

2 'गोरसं' दुग्धम् । 'सक्तवो' भृष्टयवचूर्णम् । 'पिण्याकं' तिलखलिः । 'अपूपा' अस्नेहपक्वगोधूमादिविकारः । अत्र यच्चान्यदिति श्रवणादपूपाः पयसा कृता एव ग्राह्याः । अन्यथा 'अन्यद्' इत्यस्य वैयर्थ्यापत्तेः । 'पयसा' दुग्धेन 'कृतं' किलाटचूर्णिकादीति ॥—वी. मि. आ ; 'पयसा' दुग्धेन 'कृतं' लड्डुकादि—गृ. र.

3 वी. मि. आ., ४९४ ; गृ. र., ३३७.

4 एतानि शूद्रान्नभुजो—वी. मि. आ. ; अत्र च 'शूद्रान्नभुज' इति वचनादेतानि शूद्रान्नादनिवृत्तेनैव भोज्यानि । क्वचित्तु 'अशूद्रान्नभुज' इति पाठः । तत्र शूद्रस्य जलाग्निपक्वं यो नाश्नाति तेनापि भोज्यमित्यर्थः ॥—वी. मि. आ., ४९४.

5 गृ. र., ३३८ ; वी. मि. आ., ४९२.

6 द्विजातिकरसंस्पृष्टं—ना ; द्विजाग्निकरसंस्पृष्टं—उ.

7 गृ. र., ३३८ ; वी. मि. आ., ४९२.

'निर्गमनानि' [1]रथ्यादिपतितवारिप्रवाहप्रदेशाः ॥

[2]मनुः—[४, २०५–२०८]

नाश्रोत्रियतते[3] यज्ञे ग्रामयाजिहुते[4] तथा ।
स्त्रिया क्लीबेन च [4]हुते भुञ्जीत ब्राह्मणः क्वचित् ॥
अश्लीकमेतत्साधूनां यत्र जुह्वत्यमी हविः ।
प्रतीपमेतद्देवानां तस्मात्तत्परिवर्जयेत् ॥
मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।

'[5]अश्रोत्रियः' अध्ययनरहितः, ऋत्विग्यजमानो वा। 'तते' वितते प्रारब्ध इत्यर्थः। 'ग्रामयाजी' बहूनां याजयिता। 'यश्चोपनयते बहून्' इति वाक्यपर्यालोचनया बहूनामुपनेतेति विश्वरूपाचार्यः[6]। स यस्य होमकर्ता तस्यान्नं न भोक्तव्यम्। 'स्त्रिया हुते' [7]स्त्रिया यत्र प्रातर्वैश्वदेवादि कृतम्। 'अश्लीकं' अश्रीकरम्। 'प्रतीपं' प्रतिकूलम् ॥

[8]तथा—[४, २०९–२१७]

गवा चान्नमुपाघ्रातं घुष्टान्नं च विशेषतः ।
गणान्नं गणिकान्नं च विदुषा च जुगुप्सितम् ॥
स्तेनगायनयोश्चैव तक्ष्णो वार्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥

1 वाप्यादि for रथ्यादि—गृ. र.
2 वी. मि. आ., ४९४; गृ. र., ३३८.
3 कृते for तते—वी. मि. आ.
4 कृते for हुते—ब, द, कुल्लूकः.
5 Reproduced by गृ. र., ३३८ and वी. मि. आ., ४९५.
6 ग्रामयाजी वैश्वदेविक इति मालवानां प्रसिद्धः—विश्वरूपः, १, १६२; ग्रामयाजी ग्रामस्य शान्त्यादिकर्ता बहूनामुपनेता वा—विज्ञानेश्वरः, १, १६३.
7 'स्त्रिया हुते' स्त्रिया होमे कृते, स्त्रिया यत्र etc.—ब, ज, द, गृ. र.
8 वी. मि. आ., ४९५–४९६; गृ. र., ३३९–३४०.

अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च ।
शुक्तं पर्युषितं चैव शूद्रस्योच्छिष्टमेव च ॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ।
उग्रान्नं सूतिकान्नं च पर्याचन्तमनिर्दशम् ॥
समासमाभ्यां विप्राभ्यां विषमं सममेव च ।
पूजान्ते दीयमानं च न ग्राह्यं देयमेव च ॥[1]
अनर्चितं वृथामांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतम् ॥
पिशुनानृतिनोश्चान्नं क्रतुविक्रयिकस्य च ।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥
कर्मारस्य निषादस्य रङ्गावतरकस्य च ।
सुवर्णकर्तुर्वैणस्य शस्त्रविक्रयिणस्तथा ॥
श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च ।
रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥
मृष्यन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।
अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥

'[2]घुष्टान्नं' [3]भुज्यतामन्नं ये केचिद्भोजनार्थिनः इत्याद्याघुष्य यदन्नं दीयते । 'गणः' संघः । 'गणिका' वेश्या । 'विदुषा' वेदार्थविदा मध्यस्थेन । 'जुगुप्सितं' निन्दितम् । [4]जुगुप्सात एव तत्राहष्टदोषानुमानम् । 'गायनो' गायनेन यो जीवति । 'कदर्यः' कृपणः । 'बद्धस्य' रज्ज्वादिना

1 Verse not found in printed *Manusmṛties*.

2 Reproduced by गृ. र., ३४०–३४१ ; वी. मि. आ., ४९६–४९९.

3 अन्यस्मै प्रतिश्रुत्य यदन्यस्मै दीयते तद्वा घुष्टान्नमिति मेधातिथिः—वी. मि. आ., ४९६.

4 जुगुप्सित एव वा तत्र दृष्टदोषानुमानम् —गृ. र.

यन्त्रितस्य । 'निगडस्य' निगडवतः, मत्वर्थलक्षणया । अथवा निगडेन बद्धस्येत्यर्थः । तृतीयार्थे षष्ठी । 'पुंश्चली' व्यभिचारिणी । 'शुक्तं' यदन्यरसं द्रव्यान्तरसंबन्धादम्लतां गतम् । तच्चात्यम्लं वर्जनीयम् । "अत्यम्लं शुक्तमाख्यातम्" इति [1]वृद्धबृहस्पतिवचनानुसारात् । 'शूद्रोच्छिष्टं' शूद्रं भोजयित्वा यदुद्धृतम् । 'क्रूरो' अनृजुप्रकृतिः । 'उच्छिष्टभोजी' निषिद्धोच्छिष्टभोजी । 'उग्रः' दारुणकर्मा । 'उग्रो राजे'ति मञ्जरीकारः । 'सूतिकान्नं' सूतिकामुद्दिश्य यत् क्रियते तदन्नं तत्कुलैरपि न भोक्तव्यम् । 'पर्याचान्तम्' इतरानेकपङ्क्तिस्थान् परिभूय यत्रान्ने भुज्यमाने केनाप्याचम्यते तदन्नं पर्याचान्तम् । 'अनिर्दशं' सूतकयन्नम् । विद्यादिना तुल्ययोर्विप्रयोर्विषमपूजायां दीयमानमन्नमभोज्यम् । एवं विद्यादिना विषमयोः समपूजयां दीयमानमन्नमभोज्यम् । दात्रापि न तथा दातव्यमित्यर्थः । 'अनर्चितम्' अर्चार्हस्य यदवज्ञया दीयते । 'वृथामांसं' देवपित्राद्युद्देशेन यन्न कृतम् । 'अवीरा' पतिपुत्ररहिता । 'नगरी' नगरस्वामी । 'पिशुनः' परोक्षे परापवादभाषणपरः । 'अनृती' अतिशयेनानृतवादी कूटसाक्ष्यादिः । 'क्रतुविक्रयिकः' मदीययागात्तव फलमस्त्वित्यभिधाय यो धनं गृह्णाति । 'शैलूषो' नटः । 'तुन्नवायः' सौचिकः । 'कृतघ्नः' कृतं यो न मन्यते । 'कर्मकारो' लोहकारः । 'निषादो' जातितः । 'रङ्गावतरकः' नटगायनाद्यतिरिक्तो रङ्गावतरणकर्मजीवी । 'वेणो' वेणुच्छेदनेन यो जीवति । 'बुरुड' इति विश्वरूपः[2] । 'श्ववतः' आखेटकार्थं

1 बृहस्पति for वृद्धबृहस्पति—ब, द.

2 वेनो नटः-विश्वरूपः, १, १६० ; वेणुच्छेदजीवी वैणः-विज्ञानेश्वरः, १, १६१.

पशूनां पोषकः। 'शौण्डिको' मद्यविक्रेता। 'नृशंसो' निर्दयः। 'स्त्रीजितानां' भार्यावशवर्तिनाम्। 'सर्वशः' सर्वव्यवहारेषु। 'अनिर्दशं' दशाहाभ्यन्तरे प्रेतमुद्दिश्य यद्दीयते तदसूतकिनोऽप्यन्नं न भोक्तव्यमिति ॥

[1]याज्ञवल्क्यः—[१, १६३]

क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥

'व्रात्यः' पतितसावित्रीकः ॥

तथैव पुनर्याज्ञवल्क्यः[2]—[१, १६४]

नृशंसराजरजककृतघ्नवधजीविनाम्।

'वधजीवी' प्राणिवधेन यो जीवति ॥

[3]तथा—[१, १६५]

पिशुनानृतिनोश्चैव तथा चक्रिकबन्दिनाम्।
[4]तेषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥

'चक्रिकः' शकटोपजीवी।

[5]यमः

नटनर्तकतक्षाणश्चर्मकारः सुवर्णकृत्।
स्थाणुकाषण्ढगणिका[6] अभोज्यान्नाः प्रकीर्तिताः ॥

1 वी. मि. आ., ४९९ ; गृ. र., ३४१.

2 वी. मि. आ., ४९९ ; गृ. र., ३४१.

3 वी. मि. आ, ४९९ ; गृ. र. ३४१ ; Udaipur MS. reads this verse in the reverse order reading the first line after the second line.

4 एषामन्नं—ज, वी. मि. आ., गृ. र.

5 वी. मि. आ., ४९९–५०० ; गृ. र., ३४१–३४२.

6 स्थाणुपाषण्डगणिका:—गृ. र. ; 'स्थाणुका' अभ्रातृमतीति कल्पतरुः। 'स्थाणुपाषण्डगणिकाः' इति पाठे तु स्थाणुपाषण्डाः पाशुपताः शिवसंबन्धिवेदबाह्यलिङ्गधारिण इत्यर्थः ॥ —वी. मि. आ., ५००.

गान्धर्वो लोहकारश्च सूचिकस्तन्तुवायकः[1] ।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा ॥
ध्वजी मानोपजीवी[2] च शूद्राध्यापकयाजकौ ।
कुलालश्चित्रकर्मा च वार्धुषी चर्मविक्रयी ॥

'कुलालो' ऽत्रास्वकीयः, 'शूद्रस्यास्वभूतस्ये'ति [3]वसिष्ठवचनानुसारात्। यत्तु देवलेन कुम्भकारो भोज्यान्न इत्युक्तः सः स्वकीयो बोद्धव्यः[4] ॥

[5]सुमन्तुः

अभिशस्तपतितपौनर्भवभ्रूणहपुंश्चल्यस्त्रविशस्त्रकार-तैलिकचक्रिकध्वजिसुवर्णकारलेखकषण्ढबन्धकीगणकगणि-कान्नानि चाभोज्यानि। सौकरिकव्याधनिष्पचरजकरङ्ग-कारवरुडचर्मकारा अभोज्यान्ना अप्रतिग्राह्याः ॥

'पौनर्भवः' पुनर्भूपुत्रः। 'अस्त्रं' धनुः। 'विशस्त्रं' विविधप्रकारं खड्गादि। 'ध्वजी' मद्यविक्रयी। 'लेखकः' चित्रकारः। 'षण्ढको' नपुंसकः। 'बन्धकी' अभिसारिणी। 'सौकरिकः' सौकरोपजीवी। 'निष्पचो' यः पाकं न करोति, यतिर्ब्रह्मचारी च[6] ॥

1 तुन्नवायकः—गृ. र.

2 माल्योपजीवी च—गृ. र.; गानोपजीवी च—उ; मालोपजीवी च—ब, द; 'मानोपजीवी' धान्यादिमानेन यो जीवति—वी. मि. आ.

3 वसिष्ठः, १४, ४.

4 रसाश्रयावस्थानुकृतिरूपनाट्यकर्ता 'नटः'। भावाश्रयावस्थानुकृतिकर्ता 'नर्तकः'। 'गान्धर्वः' गान्धर्वशास्त्रोपजीवी। 'सौनिकः' प्राणिवधकर्ता। 'चक्रोपजीवी' शकटोपजीवी। 'कितवो' द्यूतकृत्। 'ध्वजी' शौण्डिकः।—वी. मि. आ., ५००.

5 वी. मि. आ., ५००; गृ. र., ३४०.

6 'निष्पचो' यः पाकं न करोति यतिर्ब्रह्मचारी चेति कल्पतरुः। तन्न। "द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा। मुनेरन्नमभोज्यं स्यात्सर्वेषां लिङ्गिनां तथा" ॥ इत्यपरार्कधृतापस्तम्बवचनविरोधात्। भोज्यौ भोज्यान्नौ। यथाश्रुतार्थत्वे मुनेरभोजनीयतापत्तेः। अतश्चैतद्वचनानुसारान्निष्पचपदं यतिपरमेव।—वी. मि. आ., ५००,

अन्नं नाद्यमित्यनुवृत्तौ—

[1]वसिष्ठः—[१४, ४–११]

शूद्रस्य वास्वभूतस्य। उपपतेर्यश्चोपपतिं मन्यते। यश्च गृहान् दहेत्। यश्च वधार्हेणोपहन्यात्। को भोज्यत इति चाभिक्रुष्टम्[2]। गणान्नं गणिकान्नं च। अथाप्युदाहरन्ति।

नाश्नन्ति श्ववतो देवा नाश्नन्ति वृषलीपतेः।
भार्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे॥

'वधार्हेण' विषादिना॥

[3]गौतमः—[१७, १५–१७]

उत्सृष्टपुंश्चल्यभिशस्तानपदेश्यदाण्डिकतक्षकदर्यबन्धनिकचिकित्सकमृगय्वनिषुचार्युच्छिष्टभोजिगणविद्विषाणाम्। अपाङ्क्त्यानां प्राग्दुर्वालात्। वृथान्नाचमनोत्थानव्यपेतानि॥

'उत्सृष्टम्' अस्वामिकम्। 'अनपदेश्यः' अविज्ञातकुलाचारः। 'दाण्डिकः' पापकृन्निग्रहाधिकृतः। 'बन्धनिकः' कारागाराध्यक्षः। 'चिकित्सकः' चिकित्सा जीविका यस्य। 'मृगयुः' लुब्धकः। स चेद् 'अनिषुचारी' भवति। 'अनिषुचारी' पाशिकः। 'प्राग्दुर्वालात्' प्राग्ये श्राद्धप्रकरणे

1 वी. मि. आ., ५००–५०१; गृ. र., ३४२–३४३.

2 शूद्रस्य चान्नभृतश्चोपपत्ते(ते)र्यश्चोपपत्तिं(तिं) मन्यते, यश्च गृहान् दहेत्, यश्च वधार्हं नोपहन्यात को भक्ष्यत इति। वाचाभिघुष्टं गणान्नं गणिकान्नं च।—इत्यानन्दाश्रममुद्रितवसिष्ठस्मृतिपाठः; शूद्रस्य च। अन्नभृतश्च। उपपतेर्यश्चोपपतिं मन्यते। यश्च गृहान् दहेत्। यश्च वधार्हं नोपहन्यात्। को भोक्ष्यत इति वाचाभिक्रुष्टम्।—इति मुम्बयीमुद्रितवासिष्ठधर्मशास्त्रपाठः.

3 वी. मि. आ., ५०१; गृ. र., ३४३.

**अपाङ्क्तेया उक्ताः [1]स्तेनादयस्त्यक्तात्मपर्यन्तास्तेषामकृतप्रायश्चित्तानामन्नमभोज्यमित्यर्थः। 'दुर्वालो' हीनप्रजननकोशः। 'वृथान्नं' यद्देवाद्यनुद्देशेन केवलमात्मार्थं पच्यते। 'आचमनव्यपेतं' यत्रार्धभुक्त आचमनं कृतम्। 'उत्थानव्यपेतं' यत्रार्धभुक्त उत्थानं कृतम्॥**

**अन्नमभोज्यमित्यनुवृत्तौ—**

**[2]आपस्तम्बः—[१, १८, १८-३३; १, १९, १]**

**सर्वेषां च [3]शिल्पजीविनाम्। ये च शस्त्रमाजीवन्ति। ये चाधिम्। भिषक्। वार्धुषिकः। दीक्षितोऽक्रीतराजकः[4]। अग्नीषोमीयसंस्थायामेव। हुतायां वा वपायां दीक्षितस्य भोक्तव्यम्। यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम्। क्लीबः। राज्ञां प्रैषकरः। अहविर्याजी। चारी। अविधिना च प्रव्रजितः। यश्चाग्नीनपास्यति। यश्च सर्वान् वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः॥ मत्त उन्मत्तो [5]बद्ध ऋणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम्॥**

1 न भोजयेत् स्तेनक्लीबपतितनास्तिकतद्वृत्तिवीरहाग्रेदिधिषूदिधिषूपतिस्त्रीग्रामयाजकाजपालोत्सृष्टाग्निमद्यपकुचरकूटसाक्षिप्रातिहारिकान्। उपपतिर्यस्य च सः। कुण्डाशिसोमविक्रय्यगारदाहिगरदावकीर्णिगणप्रेष्यागम्यागामिहिंस्रपरिवित्तिपरिवेत्तृपर्याहितपर्याधातृत्यक्तात्मदुर्वाल० etc.—**गौतमधर्मसूत्रम्, १५, १५-१७.**

2 वी. मि. आ., ५०३-५०४; गृ. र., ३४४-३४५.

3 शिल्पाजीवानाम्—मु. आप.; चित्रकर्म चित्रनिर्माणादिकं शिल्पं ये आजीवन्ति तेषां सर्वेषामपि ब्राह्मणानामन्नमभोज्यम्—**हरदत्तः.**

4 दीक्षितो दीक्षणीयेष्ट्या संस्कृतः। सोऽपि यावत्क्रीतराजको न भवति सोमक्रयणं न करोति तावदभोज्यान्नः—**हरदत्तः.**

5 बद्धोणिकः—इति **हरदत्तपाठः**; बद्धो निगलितः। अणिकः पुत्राचार्य इति शास्त्रेषु निन्दितः—इति च व्याख्यातम्; बद्धोऽर्णिकः—उ.

'आधिं' बन्धकम्, आजीवन्तीत्यनुषङ्गः। 'वार्धुषिकः' "[1]समर्घं धान्यमादाय महार्घं यः प्रयच्छति" इत्यादिनाभिहितः। 'अक्रीतराजकः' अक्रीतसोमः। 'अग्नीषोमीयसंस्था' अग्नीषोमीयपशुयागसमाप्तिः। 'हुतायां वा वपायां' अग्नीषोमीयपशोरेव। 'निर्दिष्टम्' उद्दिष्टम्। प्रेषणमेव 'प्रैषम्'। 'अहविर्याजी' नररुधिरादिनाभिचारादिकर्मसु यो जुहोति। 'चारी' चरः। 'अविधिना' शास्त्रोक्तविधिमन्तरेण। 'अपास्यति' अविधिनेति शेषः। 'सर्वान्' अनिन्द्यानपि। 'निराकृतिः' अधीतवेदोऽप्यध्यापनब्रह्मयज्ञादिरहितः। '[2]ऋणिकः' उत्तमर्णः। स चेत् 'प्रत्युपविष्टो' अधमर्णं प्रति धनग्रहणार्थमनश्नन्नुपविष्टो भवति तावत्कालमभोज्यान्नः। 'यश्च प्रत्युपवेशयते' यश्चाधमर्ण उत्तमर्णमदानेन प्रत्युपवेशयेत्॥

[3]पुनरापस्तम्बः—[१, १९, ९-१०]

पुण्यस्येप्सतो भोक्तव्यम्। पुण्यस्याप्यनीप्सतो न भोक्तव्यम्[4]॥

'पुण्यस्य' धार्मिकस्य। 'ईप्सतो' याचमानस्य॥

[5]शङ्खलिखितौ

भीतरुदिताक्रन्दितावक्रुष्टक्षुतपरिभुक्तविस्मितोन्मत्तावधूतराजपुरोहितान्नानि वर्जयेत्॥

1 समर्घं धनमादाय महार्घं यः प्रयच्छति। स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः॥" वसिष्ठस्मृतिः, २, ४१.

2 अर्णिकः—उ.

3 वी. मि. आ., ५०४; गृ. र., ३४५.

4 यः प्रार्थितोऽपि नेत्यसकृदुक्त्वा कथंचिदापादितेप्सः सोऽनीप्सन्नित्युच्यते। तस्य पुण्यस्याप्यभोज्यमिति। अपर आह—अनीप्सत इति कर्तरि षष्ठी। पुण्यस्याप्यन्नं न भोज्यमिति, यदि भिक्षमाणः पूर्ववैरादिना स्वयमीप्सन्न भवतीति॥—हरदत्तः.

5 वी. मि. आ., ५०४; गृ. र., ३४३-३४४.

'भीतः' त्रस्तः । 'रुदितः' अश्रुपातवान् । 'आक्रन्दितः' आक्रन्दो दुःखितया संततशब्दकरणं, तद्वान् । 'अवक्रुष्टः' जुगुप्सितः । 'क्षुतः' छिक्कावान् । 'परिभुक्तः' सर्वतोभावेन भुक्तं शेषीकृतमन्नं येन[1] । 'विस्मितो' विस्मितवान् । 'अवधूतः' साधुभिर्बहिष्कृतः । सर्वत्रादिकर्मणि क्तः[2] । तेन भयादयो वर्तमाना एव निमित्तमिति बोद्धव्यम् । 'राजा' जनपदेश्वरः । 'पुरोहितः' यस्य कस्यचित् । एतेषामन्नं न भोक्तव्यम् ॥

[3]पुनः शङ्खलिखितौ

विद्विषाणस्य नाश्नीयाद्ब्रह्मच्छित्पापकारिणाम्[4] ।
श्राद्धसूतगणान्नानि परिभूतानि यानि च ॥

'विद्विषाणः' विद्वेषशीलः[5] । 'श्राद्धं' प्रेतश्राद्धाशी । 'सूतः' ब्राह्मण्यां क्षत्रियाज्जातः । 'परिभूतानि' तिरस्कृतानि ॥

[6]देवलः

पतितान्नमभोज्यान्नमपाङ्क्तेयान्नमेव च ।
शूद्रान्नं कुत्सितान्नं च दूषितं परिवर्जयेत् ॥

'अभोज्याः' पुंश्चल्यभिशस्तादयः स्मृत्यन्तरप्रसिद्धाः । 'दूषितं' केशकीटादिभिः ॥

1 निःशेषान्नभोजनशील इति यावत्—वी. मि. आ.

2 "आदिकर्मणि क्तः कर्तरि च", ३-४-७१.

3 वी. मि. आ., ५०४ ; गृ. र., ३४४.

4 ब्रह्मविद्यापकारिणाम्—ड ; ब्रह्मच्छित्पापकर्मणाम्—गृ. र. ; ब्रह्म वेदस्तं छिनत्ति नाशयतीति ब्रह्मच्छित् ।—वी. मि. आ.

5 'विद्विषाणस्य' विद्वेषणशीलस्य—ज.

6 वी. मि. आ., ५०५ ; गृ. र., ३४६.

[1]वसिष्ठः—[४, ३१–३२]

अशौचे यस्तु शूद्रस्य सूतके वापि भुक्तवान् ।
स गच्छेन्नरकं घोरं तिर्यग्योनौ च जायते ॥
अनिर्दशाहे परशवे नियोगाद्भुक्तवान् द्विजः ।
कृमिर्भूत्वा स देहान्ते तां विष्ठां समुपाश्नुते ॥

'परशवे' यदीयमाशौचं यस्य नास्ति तस्य सः परः, परस्य 'शवे' मृतकाशौचाभ्यन्तरे ॥

[2]यमः

यस्तु प्राणान् विमुञ्चेत भुक्त्वा श्राद्धं नवं द्विजः ।
अयाज्यासु च घोरासु तिर्यग्योनिषु जायते ॥
यस्तु प्रजायते गर्भो भुक्त्वा श्राद्धं नवं द्विजः ।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥

'अयाज्याः' याज्याश्छागादयस्तेभ्योऽन्ये ॥

[3]शङ्खः—[१९, २४]

[4]पराशौचे च यो भुङ्क्ते कृमियोनौ प्रजायते[5] ।
भुक्त्वान्नं म्रियते यस्य तस्य जातौ प्रजायते ॥

[6]आपस्तम्बः—[१, १६, १८–२०]

यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यम् । तथानुत्थितायां सूतिकायाम् । अन्तःशवे च ॥

1 वी. मि. आ., ५०५; गृ. र., ३४५–३४६.
2 वी. मि. आ., ५०५; गृ. र., ३४६.
3 वी. मि. आ., ५०५.
4 पराशौचे नरो भुक्त्वा—ब, ज, द, मु. शङ्खः.
5 च जायते—ज.
6 वी. मि. आ., ५०५–५०६; गृ. र., ३४५.

'अन्तःशवे' अशौचानधिकारिणोऽपि यस्य गृहमध्ये शवस्तद्गृहे यदन्नम्[1] ॥

[2]अङ्गिराः

जन्मप्रभृतिसंस्कारे बालस्यान्नस्य भोजने ।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः ॥

'बालस्य' 'जन्मप्रभृतिसंस्कार' इत्यन्वयः ॥

[3]भविष्यपुराणे

योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

[4]शातातपः

यत्र नाश्नन्ति वै देवाः पितरश्च तथातिथिः ।
वृथापाकः स विज्ञेयो न तस्याद्यात् कथंचन ॥

[5]अङ्गिराः

अप्रजानां तु नारीणां नाश्नीयाज्जातु तद्गृहे ।
मोहाद्वा यस्तु भुञ्जीत स पूयनरकं व्रजेत् ॥

'अप्रजाः' अनपत्याः ॥

[6]यमः

अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् विशेषतः ।

1 यावद्ग्रामान्न ह्रियते शवस्तावत्तत्र न भोक्तव्यम्—हरदत्तः.
2 वी. मि. आ., ५०६ ; गृ. र., ३४७.
3 वी. मि. आ., ५०६ ; गृ. र., ३४८.
4 वी. मि. आ., ५०६ ; गृ. र., ३४८.
5 वी. मि. आ , ५०६ ; गृ. र., ३४८.
6 वी. मि. आ., ५०६–५०७ ; गृ. र., ३४६.

नरेन्द्रस्य गृहे भुक्त्वा कृमियोनौ प्रजायते ॥
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ।
वैश्यान्नं सूतिकान्नं च लोकेभ्यः परिकृन्तति ॥
[1]तथा राजभृतस्यान्नं चौरस्यान्नं तथैव च ।
सूतके मृतके चान्नं स्वर्गस्थमपि पातयेत् ॥

[2]हारीतः

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
गणान्नं गणिकान्नं च लोकानपि निकृन्तति ॥
य इच्छेच्छुद्धमात्मानमिष्टांल्लोकांश्च वेदितुम् ।
गणान्नं गणिकान्नं च दूरतः परिवर्जयेत् ॥
'वेदितुम्' अनुभवितुम् ॥

[3]मनुः—[४, २१८–२२१]

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मविकर्तिनः[4] ॥
कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च ।
गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति ॥
पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् ।
विष्ठा वार्धुषिकस्यान्नं शल्यविक्रयिणां मलम् ॥
य एभ्योऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्तिताः ।
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः ॥

1 तथा—राजभृत्यस्य चैवान्नं—ब, द, वी. मि. आ. ; तथा—राजान्नं सूतकस्यान्नं—गृ. र.

2 वी. मि. आ., ५०७.

3 वी. मि. आ., ५०७ ; गृ. र., ३४८.

4 यशश्चर्मावकर्तिनः—वी. मि. आ., कुल्लूकः.

'निर्णेजकः' धावकः ।

[1]यमः

विष्ठा वार्धुषिकस्यान्नं रुधिरं ब्रह्मघातिनः ।
मलं हि रजकस्यान्नं चर्मकारस्य किल्बिषम् ॥
पाप्मा तथान्नं शौण्डस्य घाण्टिकस्य तथैव च ।
तेषां त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः ॥

[2]पैठीनसिः

गणान्नं गणिकान्नं च दुष्कृतम् । वार्धुषेर्विष्ठा । सांवत्सरघाण्टिकग्रामकूटान्नं विषम् । बन्धकीनां रेतः । भिषक्शल्यकृतः पूयम् । परिवित्तिपरिवेविदानविद्धप्रजननवृषलीपतिदिधिषूपतिपुनर्भूपुत्राणां रुधिरम् । पतितान्नं च ॥

'सांवत्सरो' ज्यौतिषिकः । 'ग्रामकूटकः' ग्रामे कपटव्यवहारशीलः । 'परिवेविदानः' परिवेत्ता । 'विद्धप्रजननः' छिन्नशिश्नचर्मा ॥

[3]वसिष्ठः—[१४, १४]

श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
न त्वेवं बहुयाज्यस्य यश्चोपनयते बहून् ॥

'बहुयाज्यो' बहूनां याजकः ॥

[4]मनुः—[४, २२४–२२५]

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥

1 गृ. र., ३४७.
2 वी. मि. आ., ५०७ ; गृ. र., ३४९.
3 वी. मि. आ., ५०८ ; गृ. र., ३४९.
4 वी. मि. आ., ५०८ ; गृ. र., ३४९.

तान्प्रजापतिरित्याह मा कृध्वं विषमं समम् ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्[1] ॥

'वदान्यः' प्रियवाग् दानशीलश्च ॥

[2]**बौधायनः**—[१, १०, ५]

शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥
तान्प्रजापतिरित्याह मा कृध्वं विषमं समम् ।
हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यते ॥

[3]**यमः**

अवधूतमविज्ञातं सरोषं विस्मयान्वितम् ।
गुरोरपि न भोक्तव्यमन्नं सत्कारवर्जितम् ॥
अवधूतं यदुच्छिष्टं वाग्दुष्टमपि यद्भवेत् ।
अश्रद्धया हुतं दत्तमभोज्यं तद्द्विजातिभिः ॥
अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्मतेः ।
अन्नमश्रद्दधानस्य यो भुङ्क्ते भ्रूणहा तथा ॥
[4]असुतान्नं च योऽश्नीयात् स भुङ्क्ते पृथवीमलम् ।
नृणामाहुर्मलं चान्नं सर्वमन्ने प्रतिष्ठितम् ॥
दुष्कृतं हि मनुष्यस्य अन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषम् ॥

'अवधूतम्' [5]उपहतम् । 'वाग्दुष्टं' भक्ष्यमप्यभक्ष्याभिधायिशब्देनोक्तम् । 'अवलिप्तो' गर्वितः ॥

1 हतमश्रद्धया भवेत्—ब, द.
2 गृ. र., ३४९–३५०.
3 वी. मि. आ., ५०८ ; गृ. र., ३४७.
4 श्वशुरान्नं—ब, द ; असूतानां—ज ; स्वसुतान्नं—उ.
5 उज्झितम्—ब, द, वी. मि. आ.; त्यक्तम्—गृ. र.

[1]आदित्यपुराणे

विष्णुं जामातरं मन्येत्तस्य[2] मन्युं न कारयेत् ।
अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ॥
ब्रह्मदेये विशेषेण दैवे भोज्यं सदैव हि ।
[3]गान्धर्वे चैव राजन्ये कुर्याद्धि गमनागमम् ॥
[4]ब्रह्मदेयां न वै कन्यां दत्वा भुङ्क्ते कदाचन[5] ।
अथ भुञ्जीत मोहात्मा स पूयनरकं व्रजेत् ॥

[6]आपस्तम्बः—[२, ६, १९-२०]

द्विषन् द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांसमानस्य मीमांसितस्य वा। पाप्मानं हि स तस्य भक्षयतीति[7] विज्ञायते ॥[8]

[9]मनुयमवसिष्ठाः

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥

1 वी. मि. आ., ५०९; गृ. र., ३५०.

2 विद्यात्तस्य—ना; मन्ये तस्य—गृ. र.

3 गन्धर्वैश्चैव राजन्यैः—ज; गन्धर्वैश्चैव देवैश्च—गृ. र.

4 ब्रह्मदेये—वी. मि. आ.

5 दत्वा भुञ्जीत कदाचन—उ; दत्वा भुञ्जीत् कदाचन—गृ. र.; दत्वाश्नीयात्कदाचन—वी. मि. आ.

6 वी. मि. आ., ५०९.

7 भवतीति—उ.

8 यं स्वयमतिथिः द्विषन् भवति यो वा आत्मानं द्वेष्टि यो वात्मानं दोषेण मीमांसते आत्मनि स्तेयादिदोषं संभावयति यो वा दोषेण मीमांसितः यत्र लौकिका दोषं संभावयन्ति तस्यास्य सर्वस्यान्नं नाश्नीयात् य एवंविधस्यान्नमश्नाति स तस्य पाप्मानमेव भक्षयतीति विज्ञायते—हरदत्तः.

9 वी. मि. आ., ५०९; गृ. र., ३५०; मनुः, ८, ३१७; वसिष्ठः, १९, ४४.

'किल्बिषम्' इत्यन्नादादिभिः प्रत्येकमभिसंबध्यते । 'मार्ष्टि' संयोजयति ॥

[1]वसिष्ठः—[१४, १४–१९]

न मृगयोरिषुचारिणः परिवर्ज्यमन्नम् । विज्ञायते ह्यगस्त्यो वर्षसाहस्त्रिके सत्रे मृगयां चकार । तस्यासंस्तरसमयाः[2] पुरोडाशा मृगपक्षिणां प्रशस्तानाम् ॥

अत्र 'इषुचारी' द्विजातिरेव वृत्तिकर्शितो मृगयोपजीवी ॥

[3]शातातपः

वनस्पतिगते सोमे परान्नं ये तु भुञ्जते ।
तेषां मासकृतो होमो दातारमधिगच्छति ॥

'वनस्पतिगते सोमे' अमावास्यायामित्यर्थः ॥

[4]मनुः—[३, १०४]

उपासते गृहस्था ये परपाकमबुद्धयः ।
तेन ते प्रेत्य पशुतां व्रजन्त्यन्नाद्यदायिनाम्[5] ॥

'अन्नाद्यम्' अन्नमेव[6] ॥

[7]यमः

[8]स्वपाके वर्तमाने यः परपाकं निषेवते ।

1 वी. मि. आ., ५०९.
2 'तरसमयाः' मांसमयाः—वी. मि. आ.
3 वी. मि. आ., ५०९; गृ. र., ३५०.
4 वी. मि. आ., ५०९–५१०; गृ. र., ३५०.
5 अन्नादिदायिनाम्—कुल्लूकः.
6 'अन्नाद्यम्' अन्नादिकम्—वी. मि. आ.; 'अन्नाद्यम्' अन्नम्—गृ. र.
7 वी. मि. आ., ५१०; गृ. र., ३५१.
8 'स्वपाके वर्तमानस्य द्विजस्य गृहमेधिनः' इति मध्ये पादचतुष्टयं 'उ' मातृकायां लुप्तम्.

सोऽश्वत्वं सूकरत्वं च गर्दभत्वं च गच्छति ॥
परपाकेन पुष्टस्य द्विजस्य गृहमेधिनः ।
इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत् ॥
यस्यान्नेन तु भुक्तेन भार्यां समधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा अन्नाद्रेतः प्रवर्तते[1] ॥

[2]याज्ञवल्क्यः—[१, ११२]

परपाकरुचिर्नस्यादनिन्द्यामन्त्रणादृते ॥

[3]हारीतजमदग्नी

ब्राह्मणान्नेन दारिद्र्यं क्षत्रियान्नेन प्रेष्यताम् ।
वैश्यान्नेन च शूद्रत्वं शूद्रान्नैर्नरकं व्रजेत् ॥

## अथाभक्ष्याणि

[4]तत्र कथं मृत्युर्विप्रान् जिघांसतीति ऋषिप्रश्नानन्तरम्[5]—

[6]मनुः—[५, ४–६]

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।

1 प्रजायते—ब, द.
2 वी. मि. आ., ५१० ; गृ. र., ३५१.
3 वी. मि. आ., ५१० ; गृ. र., ३५१.
4 गृ. र., ३५२.
5 श्रुत्वैतानृषयो धर्मान् स्नातकस्य यथोदितान् ।
इदमूचुर्महात्मानमनलप्रभवं भृगुम् ॥
एवं यथोक्तं विप्राणां स्वधर्ममनुतिष्ठताम् ।
कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो ॥
स तानुवाच धर्मात्मा महर्षीन् मानवो भृगुः ।
श्रूयतां येन दोषेण मृत्युर्विप्राञ्जिघांसति ॥ मनुस्मृतिः, ५, १—३.
6 गृ. र., ३५२ ; वी. मि. आ., ५१०

आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥
लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च ।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥
लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ।
[1]शेलुं गव्यं च पेयूषं प्रयत्नेन विवर्जयेत्[2] ॥

'आलस्यं' सामर्थ्ये सत्यवश्यकर्तव्यकरणानुत्साहः । 'अन्नदोषात्[3]' जात्यादिभिः ।

[4]तथा च भविष्यपुराणे

जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् ।
संसर्गाश्रयदुष्टं च सहृल्लेखं स्वभावतः ॥
लशुनं गृञ्जनं चैव पलाण्डुं कवकानि[5] च ।
[6]वार्ताकुं नालिकालाबू उपेयाज्जातिदूषितम् ॥
न भक्षयेत् क्रियादुष्टं [7]यद्दृष्टं पतितैः पृथक् ।
कालदुष्टं तु विज्ञेयं ह्यस्तनं [8]चिरसंस्थितम् ॥
दधि भक्ष्यं विकाराश्च मधुवर्जं तदिष्यते ।
सुरालशुनसंस्पृष्टं पेयूषादिसमन्वितम् ॥
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत् ।

1 धेनुं—ब, द; शेलुं च गव्यं—गृ. र.
2 यत्नेन परिवर्जयेत्—गृ. र.
3 अन्नदोषो—ज, गृ. र., वी. मि. आ.
4 वी. मि. आ., ५११; गृ. र., ३५२—३५३.
5 करकाणि—गृ. र.
6 वार्ताकु नाडिकोलोचुमुपेयाज्जातिदूषितम्—गृ. र.; वार्ताकनालिकालाबु—वी. मि. आ.
7 संयोगं पतितैः सह—उ; संस्पृष्टं पतितैः सह—ना; यत्स्पृष्टं पतितैः पृथक्—ज; यद्दृष्टं पतितैः पृथक्—वी. मि. आ.; यद्दुष्टं पतितैः पृथक्—गृ. र.
8 चिरसंचितम्—ब, द, वी. मि. आ.

[1]शूद्रोच्छिष्टं तु विज्ञेयं पूर्वं शूद्रे प्रदर्शितम् ॥
विचिकित्सा तु हृदये [2]अन्ने यस्मिन् प्रजायते ।
सहृल्लेखं तु विज्ञेयं पुरीषं तु स्वभावतः ॥
रसदुष्टं विकाराद्धि रसस्येति प्रदर्शितम् ।
पायसक्षीरपूपादि तस्मिन्नेव दिने तथा ॥

'कालदुष्टम्' इत्यादेरयमर्थः—'ह्यस्तनं' पर्युषितं सर्वमेवाभक्ष्यम् । 'दधि' 'भक्ष्यं[3]' 'विकाराश्च' यवगोधूमादिप्रभवाः पर्युषिता अपि ये भक्ष्यत्वेनाभ्यनुज्ञातास्तेऽपि 'चिरसंस्थिता' अतिविकृतरसगन्धाः सन्तो न भक्षणीया इत्यर्थः । 'मधु' पुनश्चिरसंस्थितमपि भक्ष्यम् । तदुक्तं 'मधुवर्जम्' इति । 'गृञ्जनः' लशुनसदृशः कन्दविशेष उत्तरपथे प्रसिद्धः । 'कवकं' छत्राकसदृशं कुमुदकलिकाकृति ।

[4]तथा च ब्रह्मपुराणे

मधुकैटभवृत्राणां[5] त्रिशीर्षस्यासुरस्य च ।
विष्णुना हन्यमानानां यन्मेदः पतितं भुवि ॥
पिण्डोपमं तु खुड्खण्डं[6] [7]कवकं चैत्यसंनिभम् ।
छत्राकं छत्रसदृशं दैत्यदेहसमुद्भवम् ॥

'अमेध्यप्रभवानि' साक्षाद्विष्ठाजातानि तण्डुलीयकादीनि । 'विड्जानी'ति [8]याज्ञवल्क्यवचनानुसारात् । ये तु

1 Line omitted by उ.
2 यदन्नेस्मिन्प्रजायते—ना ; यस्मिन्नन्ने प्रजायते—गृ. र.
3 भक्ष्यं पर्युषितं स्नेहाक्तं सद्भक्ष्यत्वेनानुज्ञातम्—वी. मि. आ.
4 वी. मि. आ., ५११—५१२ ; गृ. र., ३५३.
5 छत्राणां for वृत्राणां—ज, गृ. र.
6 कुंखण्डं—वी. मि. आ. ; पिण्डोपमम्बुखण्डं—ज.
7 करकं—गृ. र.
8 याज्ञवल्क्यः, १, १७१.

साक्षाद्विड्जा न भवन्त्यमेध्याक्रान्तभूप्रसवा वृक्षास्तेषां पुष्पफलान्यदुष्टान्येव।

[1]तदुक्तं बौधायनेन—[१, ९, ४]

> अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः।
> तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च॥

अत्र वृक्षग्रहणाच्छाकादीनामेवंविधानां प्रतिषेध एव। साक्षादमेध्यजातेषु वृक्षेषु यानि पुष्पफलानि तानि प्रतिषिद्धान्येव। 'वृक्षनिर्यासः' वृक्षान्निर्गतो रसः कठिनतां गतः। 'व्रश्चनं' छेदनम्। 'व्रश्चनप्रभवांस्तथा' तथा व्रश्चनप्रभवानलोहितानपि वर्जयेदित्यर्थः। [2]तथा च तैत्तिरीयश्रुतिः[3]—"अथो खलु य एव लोहितो यो वाव्रश्चनान्निर्येषति तस्य नाश्यं काममन्यस्य" इति। तेन कर्पूरादीनामप्रतिषेधः। 'शेलुः' बहुवारकः। 'पेयूषं' नवप्रसूतायाः क्षीरं यदग्निसंयोगात् कठिनं भवति तच्चेद्द्रव्यं तदा वर्ज्यम्॥

[4]यमः

> लशुनं गृञ्जनं चैव [5]विलयं सुमुखं तथा।
> कवकानि पलाण्डुं च [6]वर्जयेत्सर्वदा बुधः॥
> वरं स्वयं विशस्यापि सर्वमांसानि भक्षयेत्।
> [7]न च छत्राकमश्नीयाद्द्विजात्यपसदोऽपि सन्॥

1 वी. मि. आ., ५१२; गृ. र., ३५३.
2 वी. मि. आ., ५१२; गृ. र., ३५४.
3 तै. सं., २. ५. १. ४.
4 वी. मि. आ., ५१३; गृ. र., ३५४–३५५.
5 विलेयं—गृ. र.
6 वर्जयेतु सदा—ब, द, वी. मि. आ.; वर्जयेच्च सदा—गृ. र.
7 नैव—ना, वी. मि. आ.

भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये ।
ब्रह्मघ्नांस्तान् विजानीयाद्ब्रह्मवादिषु गर्हितान् ॥

'विलयो' घृतमलम् । 'विशस्य' मारयित्वा । 'अपसदो' अपकृष्टः ॥

[1]हारीतः

छत्राकं विड्वराहं च पलाण्डुं लशुनं तथा ।
भक्षयन्वै पतेद्विप्रो यदि स्यात्सर्ववेदवित् ॥

[2]देवलः

श्लेष्मातको वज्रफली कौसुम्भं नालमस्तकान् ।
गृञ्जनं चेति शाकानामभक्ष्याणि प्रचक्षते ।
पलाण्डुं लशुनं [3]शुक्तं निर्यासं चेति सर्वशः ।
[4]कुचुन्दं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेत् ॥

'नालं' कलम्बिका । 'श्वेतवृन्ताकं' श्वेतवार्ताकुः । 'कुम्भाण्डं' दाडिमसदृशः फलविशेषः [5]कुम्भालु इति प्रसिद्धः ॥

'नित्यमभोज्या' इत्यनुवृत्तौ—

[6]गौतमः—[१७, ३०–३१]

[7]किसलयक्याकुलशुननिर्यासलोहिता व्रश्चनाश्च ॥

1 वी. मि. आ., ५१३–५१४ ; गृ. र., ३५५.
2 वी. मि. आ., ५१३ ; गृ. र., ३५५.
3 भुक्तं—गृ. र.
4 कुवृन्दं—गृ. र.
5 कुम्भार—गृ. र.
6 वी. मि. आ., ५१४ ; गृ. र., ३५६.
7 किसलयक्याकुलशुनं निर्यासा लोहिता व्रश्चनाश्च—वी. मि. आ.

'किसलयो' नवपल्लवः। 'क्याकुः' अहिच्छत्राकः॥

[1]अभोज्यप्रकरणे आपस्तम्बः—[१, १७, २५-२८]

तथा कीलालौषधीनां च। कलञ्जपलाण्डुपरारीकाः। यच्चान्यत्परिचक्षते। क्याकभोज्यमिति हि ब्राह्मणम्॥

'कीलालं' सुरा, तदर्थं स्थापिता या 'ओषधयो' व्रीह्यादयः, तेषां विकार इति शेषः। 'कलञ्जं' लशुनविशेषः। 'परारीकः' पलाण्डुविशेषः। [2]तथा च स्मृतिमञ्जरीकारलिखितायुर्वेदश्लोकः—

रसोनो दीर्घपत्रश्च पिच्छगन्धो महौषधम्।
हिरण्यश्च पलाण्डुश्च नवतर्कः परारिका॥
गृञ्जनो यवनेष्टश्च पलाण्डोर्दशजातयः।

'यच्चान्यद्' एवंविधं कोविदारादि शिष्टाः 'परिचक्षते' परिवर्जयन्ति तदपि न भोज्यमिति शेषः॥

[3]उशना

कुसुम्भं नालिकाशाकं वृन्ताकं पौतिकं तथा।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः॥

'वृन्ताकं' श्वेतमत्र। 'श्वेतवृन्ताकम्' इति देवलवचनात्॥

[4]पैठीनसिः

वृन्ताकनालिकापोतकुसुम्भाश्मन्तकाश्चेति शाकफलानामभोज्याः॥

1 गृ. र., ३५६; वी. मि. आ., ५१४
2 वी. मि. आ., ५१४; गृ. र., ३५६.
3 वी. मि. आ., ५१४; गृ. र., ३५६.
4 वी. मि. आ., ५१४; गृ. र., ३५७.

'अश्मन्तको' वृक्षविशेषः ॥

'वर्जयेद्' इत्यनुवृत्तौ याज्ञवल्क्यः[1]—[१, १७१]

देवतार्थं हविः शिग्रुं लोहितान् व्रश्चनांस्तथा ।
अनुपाकृतमांसानि विड्जानि कवकानि च ॥

'देवतार्थं' बल्युपहारादि । 'हविः' होमार्थं यच्चरुपुरोडाशादि । 'शिग्रुः' शोभाञ्जनः । 'अनुपाकृतं' पशुयागादौ मन्त्रवत्तृणेन पशोः स्पर्शनमुपाकरणं, तद्रहितम् ॥

[2]तथा—[१, १७३]

वृथाकृसरसंयावपायसापूपशष्कुलीः ॥

'वृथा' देवताद्यनुद्देशेन केवलमात्मार्थं यत्पच्यते । 'न पचेदन्नमात्मार्थम्' इति वचनात् । वृथान्नप्रतिषेधे सिद्धे कृसरादीनां पुनः प्रतिषेधः प्रायश्चित्तविशेषार्थः । 'कृसरः' तिलमुद्गाभ्यां सह सिद्ध ओदनः । 'संयावः' घृतक्षीरगोधूमचूर्णसिद्धः, उत्करिकेति[3] प्रसिद्धः । 'शष्कुली' मुद्गादिचूर्णसिद्धा सतिला स्नेहपक्का ॥

[4]हारीतः

परमान्नकृसरशष्कुलीमांसयावकापूपान्न पाचयेदात्मार्थम् । न वटप्लक्षोदुम्बरदधित्थनीपमातुलुङ्गानि वा भक्षयेत् ॥

'परमान्नं' पायसम् । 'अपूपाः' पूरिका इति प्रसिद्धाः । 'नीपः' कदम्बः । 'मातुलुङ्गः' बीजपूरः ॥

1 वी. मि. आ., ५१५; गृ. र., ३५७.
2 गृ. र., ३५७–३५८; वी. मि. आ., ५१५.
3 तर्कोरिकेति—गृ. र.
4 गृ. र., ३५७.

[1]यमः

यवागूं कृसरं चैवापूपपायसशष्कुलीः ।
ऋजीषपक्कं मांसं च मत्स्यानप्यनुपाकृतान् ॥
वर्जयेत्सर्वशुक्तानि देवान्नानि हवींषि च ।
स्नेहेन तु समायुक्तं नैव सर्वं प्रयोजयेत् ॥

'ऋजीषपक्कं' भौमोष्मपक्कम् ॥

[2]गौतमः—[९, ५८]

उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चात्तवीर्याणि नाश्नीयात् ॥

'आत्तवीर्याणि' उद्धृतसाराणि ॥

[3]'अश्नीयाद्' इत्यनुवृत्तौ विष्णुः—[६८, २७–३१]

नोद्धृतस्नेहम् । न दिवा धानाः । न रात्रौ तिलसंबन्धम् । न दधिसक्तून् । न [4]कोविदारवटपिप्पलशाणशाकम् ॥

[5]देवलः

न बीजान्युपभुञ्जीत रोगापत्तिमृते बुधः ।
फलान्येषामनन्तानि बीजानां हि विनाशयेत् ॥
नाश्नीयात् पयसा नक्तं भुक्तं चेन्न स्वपेन्निशि ।
न क्षीरमुत्सृजेत्प्राप्तं पवित्रं हि पयः स्मृतम् ॥

1 वी. मि. आ., ५१५ ; गृ. र., ३५८.
2 वी. मि. आ., ५१५–५१६ ; गृ. र., ३५८.
3 वी. मि. आ., ५१६.
4 गृ. र., ३५७.
5 वी. मि. आ., ५१६ ; गृ. र., ३५८–३५९.

'बीजानि' कूष्माण्डबीजानि[1] ॥

[2]यमः

भिन्नभाण्डे न भुञ्जीत न रात्रौ दधिसक्तुकान् ।
दिवा दधित्थधानासु रात्रौ च दधिसक्तुषु ॥
कोविदारे च रजके तस्करे सूतके तथा ।
श्लेष्मातके तथालक्ष्मीर्नित्यमेव कृतालया ॥

'सूतके' जननमरणाशौचे ॥

[3]ब्रह्मपुराणे

राजमाषाः स्थूलमुद्गास्तथा [4]वृषकवासकौ ।
मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम् ॥
सस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित् ।

[5]आपस्तम्बः—[२, १८, १-४]

विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् ।
[6]कृष्णधान्यं च[7] शूद्रान्नं ये चान्येऽनाश्यसंमिताः ॥
अहविष्यमनृतं क्रोधं येन च क्रोधयेत् परम्[8] ।
स्मृतिमिच्छन् यशो मेधां[9] पुष्टिं द्वादशैतानि वर्जयेत् ॥

1 'बीजानि' अङ्कुरजननयोग्यानि । अत उपहतानां दलितानां पक्वानां वा न निषेधः ।—वी. मि. आ.

2 वी. मि. आ., ५१६ ; गृ. र., ३५९.

3 वी. मि. आ., ५१६ ; गृ. र., ३५९.

4 वृषयवासकौ—वी. मि. आ ; वृषकचाषकौ—गृ. र.

5 वी. मि. आ., ५१७.

6 गृ. र., ३६०.

7 च—omitted by मु. आप.

8 परम्—omitted by मु. आप.

9 Printed editions add स्वर्गं after मेधाम्.

'कृष्णधान्यं' [1]कलिङ्गकादि। 'अनाद्यम्' अभक्ष्यं मण्डूकादि, तैः 'संमिताः' तुल्यत्वेन मताः। येन च व्यापारेण परस्य क्रोधो जायते तं व्यापारं स्वयमक्रुद्धोऽपि वर्जयेत्॥

विश्वामित्रः

जातिक्रियाभावदुष्टमसत्संसर्गदुष्टं[2] सहृल्लेखं च न भक्षयेत्॥

'भावदुष्टम्' अभक्ष्यपदार्थसदृशत्वेन[3] बुद्धिस्वीकृतम्। 'अनाद्यसंमिता' इत्यापस्तम्बवचनानुसारात्[4]॥

[5]वसिष्ठः—[१४, २०–२२]

उच्छिष्टमगुरोरभोज्यम्। स्वमुच्छिष्टमुच्छिष्टोपहतं च। वसनकेशकीटोपहतं च॥

'स्वमुच्छिष्टं' स्वयमेव किंचिद्भुक्त्वा यत्परित्यक्तम्। 'वसनम्' अत्र परिहितं वासः॥

[6]सुमन्तुः

केशकीटक्षुतवचोभिहतं[7] श्वभिराघ्रातं प्रेक्षितं चादधि पर्युषितं पुनःसिद्धं चण्डालावेक्षितमन्नमभोज्यमन्यत्र हिरण्योदकैः स्पृष्टात्॥

1 'कृष्णधान्यं' कालञ्जी करिहनादि—गृ. र.
2 असत्संगदुष्टं—उ.
3 अभक्ष्यपदार्थत्वेन—ब, द.
4 आप. ध. सू., २, १८, २; वचनात् for वचनानुसारात्—ना.
5 वी. मि. आ., ५१७; गृ. र., ३६०.
6 वी. मि. आ., ५१७; गृ. र., ३६०.
7 केशकीटक्षुद्वचोऽभिहतं—ब, द; केशकीटवचोऽभिहतं—गृ. र; केशकीटवचोहतं—वी. मि. आ.

'वचोभिहतं' यस्यान्नस्याभिमुखेन वागुच्चारणं कृतम्। 'प्रेक्षितं' श्वभिरेव। 'अदधि' दधिव्यतिरिक्तम्। 'पर्युषितं' सिद्धमन्नं रात्र्यन्तरितम्। 'पुनः सिद्धं' द्विःपक्वम्। 'हिरण्योदकं' हिरण्यस्पृष्टमुदकम्॥

[1]मनुः—[४, २०७–२०८]

मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन।
केशकीटावपन्नं च पदा स्पृष्टं च कामतः॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च॥[2]

'पतत्रिणा' पक्षिणा। 'अवलीढम्' आस्वादितम्॥

[3]याज्ञवल्क्यः—[१, १६७–१६८]

शुक्तं[4] पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्।
उदक्यास्पृष्टसंघुष्टं पर्यायान्नं[5] च वर्जयेत्॥

'पर्यायान्नम्' अन्यसंबन्धि यदन्नमन्यव्यपदेशेन दीयते। यथा—

ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्।

1 वी. मि. आ., ५१७–५१८; गृ. र., ३६०–३६१.

2 यावन्मदादियोग एतेषामभोज्यता। अन्ये बाहुल्यं मन्यन्ते। बाहुल्येन यः क्षीबो भवति मद्यशौण्डस्तदन्नं न भोक्तव्यम्। एवं क्रोधप्रधानस्य भृशंकोपनस्य च प्रायेण च 'आतुरस्य' रोगामयाव्यादेः। 'केशकीटैरवपन्नं' संसर्गेण दूषितम्। कीटाश्च केचिन्मृता दूषयन्ति न जीवन्तो, यथा मक्षिका गृहगोधाश्च। कीटग्रहणं क्षुद्रजन्तूनां कृमिपतङ्गानामपि प्रदर्शनार्थम्। केशग्रहणं नखरोम्णां दूषिकादीनां मलानां, समाचारात्। 'पादेन' बुद्धिपूर्वं कामकारेण स्पृष्टम्। प्रमादतस्तु न दोषः॥—मेधातिथिः.

3 वी. मि. आ., ५१८; गृ. र., ३६१.

4 भुक्तं—वी. मि. आ.

5 पर्याचान्तं—विश्वरूपः; 'पर्याचान्तम्' एकपङ्क्त्यामभितस्त्वाचान्तम्, आचान्तस्य वा स्वमुच्छिष्टम्। 'संघुष्टं' यथाह वसिष्ठः—'को भोक्ष्यत इति चाभिकुष्टम्' इति। उदक्यास्पृष्टमित्येवं वा संघुष्टम्।—विश्वरूपः.

उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत्॥ इति[1]।

[2]**यमः**

काककुक्कुटसंस्पृष्टं शुक्तं[3] वा कृमिसंयुतम्।
अभोज्यं तद्विजानीयाद्धर्मराजवचो यथा॥

[4]**आपस्तम्बः**—[१, १६, २१–३३; १, १७, १–८]

अप्रयतोपहृतमन्नमप्रयतं न त्वभोज्यम्। अप्रयतेन [5]शूद्रेणोपहृतमभोज्यम्। यस्मिंश्चान्ने केशः स्यात्[6]। अन्यद्वामेध्यम्। अमेध्यैरवमृष्टम्। कीटो वामेध्यसेवी। मूषकलाङ्गं[7] च। पदा चोपहृतम्। सिचा वा। शुना वापपात्रेण वा दृष्टम्। सिचा चोपहृतम्। दास्या वा नक्तमाहृतम्। भुञ्जानं वा यत्र शूद्र उपस्पृशेत्। अनर्हद्भिर्वा समानपङ्क्तौ। भुञ्जानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा। कुत्सयित्वा वा यत्रान्नं दद्युः। मनुष्यैरवघ्रातमन्यैर्वामेध्यैः॥

'अप्रयतोपहृतम्' 'अप्रयतेन' अशुचिना 'उपहृतं' स्पृष्टम्। 'अप्रयतम्' अशुचि। 'न त्वभोज्यं' किं त्वग्न्यावधिसंश्रयणादिना शुद्धिं कृत्वा भोज्यं भवति। 'अप्रयतेन' शूद्रेण स्पृष्टं न कथंचनापि भोज्यम्। 'अमेध्यम्' ऊषर-

1 वी. मि. आ., ५१८; गृ. र., ३६१.

2 वी. मि. आ., ५१८; गृ. र., ३५९.

3 भुक्तं—वी. मि. आ; भक्तं—गृ. र.

4 वी. मि. आ., ५१८–५१९; गृ. र., ३६१–३६२.

5 शूद्रेणोपहृतमभोज्यम्—हरदत्तः; अप्रयतेन शूद्रेणोपहृतमानीतमन्नमभोज्यम्। स्पृष्टमस्पृष्टं वा। स्पृष्टमेवेत्यन्ये॥—इति च व्याख्यातम्.

6 एतच्च पाकदशायामेव पतितेन केशेन सह यत्पक्वमन्नं तद्विषयम्। पश्चात्केशसंसर्गे तु घृतप्रक्षेपादिना संस्कृतस्य भोज्यत्वं स्मृत्यन्तरोक्तम्॥—हरदत्तः.

7 मूषिकालाङ्गं—मु. आप.

मृत्तिकादि[1]। 'अमेध्यैः' कलञ्जपलाण्ड्वादिभिः। 'अव-मृष्टं' स्पृष्टम्। 'कीटो' 'अमेध्यसेवी' यस्मिन्नन्ने तदभोज्य-मिति[2] वाक्यपरिसमाप्तिः। 'मूषकला' मूषिकाविष्ठा। 'अङ्गं' मूषिकापुच्छपदादि। 'पदा उपहतं' पदा स्पृष्टम्। 'सिचा[3]' स्पृष्टं, वस्त्रवातेन प्रक्षालितेनापि स्पृष्टम्। 'शुना' कुक्कुरेणापि स्पृष्टं दृष्टं च। 'अपपात्रेण' पतितादिना। 'उपहृतम्' आनीतम्। 'दासी'ति स्त्रीलिङ्गमविवक्षितम्[4]। 'उपस्पृशेद्' इत्यत्र तदन्नमर्धभुक्तमप्यभोज्यमिति शेषः। '[5]अनर्हद्भिः' अभिजनविद्याचारशून्यैः, 'समानपङ्क्तौ' अन्नमभोज्यम्। [6]अर्हद्भिर्वा समानपङ्क्तौ यत्रार्धभुक्तेषु कश्चिद् 'अनूत्थाय[7]' भृत्यादेः 'उच्छिष्टं प्रयच्छेत्' तत्रेतरे-षामर्धभुक्तमन्नभोज्यम्। एतेन 'आचामेद्' इत्यपि व्या-ख्यातम्। 'कुत्सयित्वा' "एहि विषं भुङ्क्ष्व" इत्याद्युक्त्वा। 'मनुष्यैरवघ्रातं' प्रयत्नत इति शेषः। 'अमेध्यैः' मार्जार-गर्दभादिभिः॥

[8]<u>शङ्खलिखितौ</u>

तत्रापेयान्यभक्ष्याणि च वर्जयेत्[9]। अमेध्यपति-

1 'अमेध्यं' नखादि—हरदत्तः.

2 'यस्मिंश्चान्ने केशः स्यादिति' व्यवहितमपि संबध्यते। 'अमेध्यसेवी कीटः' पूत्यण्डाख्यः।—हरदत्तः.

3 'सिग्' वस्त्रदशा। परिहितस्य वाससः सिचा यत्स्पृष्टं तदप्यभोज्यम्।—हरदत्तः.

4 दास्या रात्रावाहृतमभोज्यम्। स्त्रीलिङ्गनिर्देशाद्दासेनाहृते न दोषः। अन्ये लिङ्गमविवक्षितं मन्यन्ते।—हरदत्तः.

5 अनर्हद्भिरपाङ्क्तेयैः समानपङ्क्त्यामन्नमभोज्यमनर्हद्भिर्वा समानपङ्क्तौ etc.—गृ. र.

6 अनर्हद्भिर्वा—ज.

7 अनूत्थाय भोजनाद्विरम्य—हरदत्तः.

8 वी. मि. आ., ५२०; गृ. र., ३६२.

9 तत्र भक्ष्याणि पेयानि वर्जयेत्—गृ. र.

तच्चाण्डालपुल्कस[1]रजस्वलाकुणपकुष्ठिसंस्पृष्टानि ॥

'पुल्कसः' म्लेच्छजातिविशेषः । 'कुणपः' शवः ॥

[2]बृहस्पतिः—[आचा., ७१; श्राद्ध., ८६ अ.]

नाद्याच्छास्त्रनिषिद्धं तु भक्ष्यभोज्यादिकं द्विजः ।
मांसं विगर्हितं चैव शुक्तं[3] बहुविधं तथा ॥
अत्यम्लं [4]शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः ।

'विगर्हितं' शिष्टैर्निन्दितम् ॥

[5]देवलः

अभोज्यं प्राहुराहारं शुक्तं[6] पर्युषितं सदा ।
अन्यत्र मधुसक्तुभ्यां भक्ष्येभ्यः सर्पिषो गुडात् ॥
[7]अवलीढं श्वमार्जारध्वाङ्क्षकुक्कुटमूषिकैः[8] ।
भोजने नोपयुञ्जीत[9] तदमेध्यं हि धर्मतः ॥
विशुद्धमपि चाहारं मक्षिकाकृमितन्तुभिः[10] ।
केशलोमनखैर्वापि दूषितं परिवर्जयेत् ॥

'भक्ष्या' लड्डुकादयः ॥

1 पुष्कस for पुल्कस—वी. मि. आ., गृ. र.
2 वी. मि. आ., ५२०; गृ. र., ३६२.
3 भुक्तं—गृ. र.
4 भुक्तमाख्यातं—गृ. र.
5 वी. मि. आ., ५२०; गृ. र., ३६३.
6 भुक्तं—गृ. र.
7 'अवलीढं च मार्जारध्वाङ्क्षकुक्कुटवायसैः'—'ध्वाङ्क्षो' ऽत्र बकः वायसस्य पृथगुपादानात्—वि. मि. आ; अवलीढं च मार्जारध्वाङ्क्षकुक्कुटमूषकैः—ज, गृ. र.
8 सूकरैः for मूषिकैः—ना.
9 नोपभुञ्जीत—ज, वी. मि. आ., गृ. र.
10 दूषितं कृमितन्तुभिः—वी. मि. आ.

[1]'अश्नीयाद्' इत्यनुवृत्तौ हारीतः

न रजस्वलया दत्तं न पुंश्चल्या न क्रुद्धया।

न मलवद्वाससा। नापरया द्वारा दापितम्। न द्विः पक्वम्। न शुक्तम्। न पर्युषितम्। अन्यत्र गुडपिष्टसक्तुस्नेहगोरसतैलादिषुपक्वात्[2]। न तैलं दध्यनुपानम्[3]। नावक्षुताऩ्नम्। न जुगुप्सितम्॥

'मलवद्वासाः' अमेध्यलिप्तवस्त्रा। 'अपरया द्वारा' मुख्यद्वारातिरिक्तद्वारेण। 'तैलादिषु' इत्यादिशब्दाद्घृतसर्षपस्नेहग्रहणम्। 'न तैलं दध्यनुपानं' भोजनान्ते तैलं दधि वा यथा भवति तथा नाश्नीयात्॥

[4]'अभोज्यम्' इत्यनुवृत्तौ गौतमः—[१७, १४]

पर्युषितमशाकभक्ष्यस्नेहमांसमधूनि।

शाकादीनि पर्युषितानि विहायेत्यर्थः॥

[5]शङ्खलिखितौ

नापणीयमन्नमश्नीयात्। न द्विः पक्वम्। न शुक्तम्। न पर्युषितम्। अन्यत्र रागचुक्रषाडवदधिगुडगोधूमयवपिष्टविकारेभ्यः॥

'रागाः' मुद्गदाडिममांसाद्या[6] अंशुकगालिताः प्रलेहाः। 'षाडवाः' स्वाद्वम्लकटुकाद्याः प्रलेहा एव॥

1 वी. मि. आ., ५२०—५२१; गृ. र., ३६३.

2 'तैलादिषुपक्वात्' इत्येकं पदम्। आर्षत्वाच्च सप्तम्यलुक्। तेन गुडपिष्टं सक्तवश्च स्नेहादिपक्वं चेति द्वन्द्वः।—वी. मि. आ., ५२०.

3 न तैलदध्यनुपानम्—वी. मि. आ., गृ. र.

4 वी. मि. आ., ५२१; गृ. र., ३६३.

5 वी. मि. आ., ५२१; गृ. र., ३६४.

6 मुद्गदाडिममांसादिरसा वस्त्रगालिताः प्रलेहाः—वी. मि. आ.; मुद्गदाडिममांसाद्याः प्रलेहाः—गृ. र.

[1]वसिष्ठः—[१४, २८-२९]

अन्नं पर्युषितं भावदुष्टं सहृल्लेखं[2] पुनःसिद्धमाममृजीषपक्वम्। कामं तु दध्ना घृतेनाभिघारितमुपभुञ्जीत[2] ॥

'आमं' तण्डुलादि। 'कामं दध्ना घृतेनाभिघारितमुपभुञ्जीत' इत्यनेन भोज्यान्तरासंभव एवं भुञ्जीतेत्युक्तम् ॥

[3]आपस्तम्बः—[१, १७, १४-२०]

नापणीयमन्नमश्नीयात्। तथा [4]रसानाममांसमधुलवणानीति [5]परिहाप्य[6]। तैलसर्पिषी तूपयोजयेदुदकेऽवधाय। कृतान्नं पर्युषितमखाद्यापेयानाद्यम्। शुक्तं च। फाणितपृथुकतण्डुलकरम्भभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम्। शुक्तं चापरयोगम् ॥

'आपणीयं' हट्टादुपानतम्। 'रसाः' गुडादयः। '[7]उदकेऽवधाय' उदकपात्रे मणिकादौ विधाय। 'अखाद्यापेयानाद्यं', 'खाद्यं' खरविशदं 'पेयं' द्रवम्, 'आद्यं' मृदुविशदमोदनादि[8]। 'शुक्तं च' पर्युषितमपि नोपयोज्य-

1 वी. मि. आ., ५२१ ; गृ. र., ३६४.

2 सकृल्लेखं पुन:सिद्धमाममांसं पक्कं च and युञ्जीत for भुञ्जीत—मु. वसिष्ठः.

3 वी. मि. आ., ५२१-५२२ ; गृ. र., ३६४-३६५.

4 रसानां for रसान्—**हरदत्तः**.

5 परिहार्य—ब, द, ज, वी. मि. आ.

6 आपण: पण्यवीथिका। तत्र क्रीतं लब्धं वा 'आपणीयम्', तच्च कृतान्नं नाश्नीयात्। व्रीह्यादिषु न दोषः। 'रसानां' रसद्रव्याणि। तान्यप्यापणीयानि नाश्नीयात्, आममांसादीन् वर्जयित्वा ॥—**हरदत्तः**.

7 उदकेऽवधाय निषिच्य पाकेन तैलसर्पिषी शोधयित्वा। कार्यविरोधो यथा न भवति तथोदकेन संसृज्येत्यन्ये व्याचक्षते ॥—**हरदत्तः**.

8 'अखाद्यापेयानाद्यम्'—अखाद्यमपेयमनाद्यं च, यथायोगं खरविशदं द्रवं मृदुविशदं सिद्धं [स्निग्धं] च—**हरदत्तः** ; 'खाद्यं' कठिनं पिष्टकादि, 'पेयं' द्रव्यं पानकादि, 'आद्यं' मृदुभक्ष्यं ओदनादि।—वी. मि. आ. ; 'खाद्याद्ये' कठिनमृदुभक्ष्ये पिष्टकाद्योदनादीनि। 'पेयं' प्रसिद्धम् ॥—**गृ. र.**

मित्यर्थः । 'फाणितम्[1]' इक्षुरसविकारपाकजन्यो द्रवः । 'पृथुकतण्डुलाः' भ्रष्टधान्यकुट्टनान्निष्पादितास्तण्डुलाश्चिपिटका इति प्रसिद्धाः । 'करम्भाः' दधिमिश्राः सक्तवः । 'भरुजाः' धानाः । 'शुक्तं चापरयोगम्' इति,[2] परेणान्नेन योगो यस्येति गमकत्वाद्वैयधिकरण्ये बहुव्रीहिः । यच्च शुक्तमपेयमखाद्यमुक्तं तद्द्रव्यान्तरासंयुक्तम् । 'शुक्तं तु केवलम्' इति [3]गौतमवचनात् ॥

[4]बृहस्पतिः—[आचा., ८०-८१]

दधि भक्ष्यं शुक्तमपि यच्चैव[5] दधिसंभवम् ।
कन्दमूलफलैः पुष्पैः शस्तैः शुक्तासवं तु तत् ॥
अविकारि [6]भवेन्मेध्यमभक्ष्यं तद्विकारकृत् ।

'कन्दमूलफलैः पुष्पैः' इत्यादेरयमर्थः—यच्छुक्तं कन्दादिभिः कृतसंधानं तद्यदि मोहादिविकारकरं न भवति तदा 'भक्ष्यं' भक्षणीयम् ॥

[7]यमः

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षालितानि निर्दोषाण्यापद्धर्मो यदा भवेत् ॥

1 'फाणितं' पानविशेषः, इक्षुरस इति केचित् ॥—हरदत्तः.

2 परेण द्रव्यान्तरेण योगो यस्य तत्परयोगम् । ततोऽन्यदपरयोगम् । तदेव शुक्तं वर्ज्यम् । यत्तु दध्यादिद्रव्यान्तरसंसृष्टं तद्भोज्यमेव ॥—हरदत्तः

3 गौतमधर्मसूत्रम्, १, १२.

4 वी. मि. आ., ५२२ ; गृ. र., ३६५.

5 तथैव—वी. मि. आ.

6 भवेन्मद्यं—गृ. र.

7 वी. मि. आ., ५२२ ; गृ. र., ३६५.

मसूरमाषसंयुक्तं तथा पर्युषितं च यत्।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम्[1] ॥

यत् 'शुक्तं' यत् 'पर्युषितं च मसूरमाषसंयुक्तं' तत् प्रक्षाल्य 'अभिघारितं कृत्वा' आपदि भुञ्जीतेत्यर्थः ॥

[2]**मनुः**—[५, २४-२५]

यत् किंचित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम्।
तत्पर्युषितमप्याद्यं हविःशेषं च सर्वशः[3] ॥
चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः।
यवगोधूमजं सर्वं पयसश्चैव विक्रिया ॥

[4]**याज्ञवल्क्यः**—[१, १६९]

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः[5] ॥

[6]**यमः**

अपूपाश्च करम्भाश्च धाना वटकसक्तवः[7]।
शाकं [8]मांसमपूपं च सूपं कृसरमेव च ॥
यवागूं पायसं चैव यच्चान्यत्स्नेहसंयुतम्।
सर्वं पर्युषितं भोज्यं शुक्तं च परिवर्जयेत् ॥

1 भुञ्जीताज्याभिघारितम्—ज, वी. मि. आ., गृ. र.
2 वी. मि. आ., ५२२-५२३; गृ. र., ३६५-३६६.
3 सर्वतः—वी. मि. आ., गृ. र.; यद्भवेत्—मेधातिथिकुल्लूकौ.
4 वी. मि. आ., ५२३.
5 अन्नवचनं मांसादिव्यावृत्त्यर्थम्। मांसं च पर्युषितमभोज्यमेव। अन्नं तु शुक्तमेव पर्युषितमभोज्यम्। अन्यत्तु द्वित्रिरात्रादिपर्युषितम्। चिरसंस्थितं तदपि स्नेहाक्तं भोज्यमेव, न चेद्रसादिविकृतम् ॥—विश्वरूपः.
6 वी. मि. आ., ५२३; गृ. र., ३६६.
7 धानाश्च वटसक्तवः—गृ. र.
8 मांसं मसूरं च—गृ. र.

[1]वसिष्ठः—[१४, ३७–३८]

अपूपधानाकरम्भसक्तुवटकतैलपायसशाकानि च शुक्तानि वर्जयेत्। अन्यांश्च [2]क्षीरपिष्टविकारान्॥

[3]देवीपुराणे

[4]वृथाकृसरपूपानि पायसं मधुसर्पिषी।
वृथामांसं च नाश्नीयात् पितृदेवविवर्जितम्॥

[5]ब्रह्मपुराणे

चण्डालपतितामेध्यकुणपैः कुष्ठिना तथा।
ब्रह्मघ्नसूतिकोदक्याकौलेयककुटुम्बिभिः॥
दृष्टं वा केशकीटाक्तं मृद्भस्मकनकाम्बुभिः।
शुद्धमद्यात् [6]सहृल्लेखं प्रभूतं चोष्णमेव च॥
'कौलेयकः' श्वा॥

[5]तथा

उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः।
द्रव्यहस्तस्तु यत्किंचिद्दद्यात्तदन्नं न भक्षयेत्॥

[7]मार्कण्डेयपुराणे

[8]भिन्नभाण्डगतं तद्वन्मुखवातोपमार्जितम्[9]।

1 वी. मि. आ., ५२३.
2 क्षीरयवपिष्टविकारान्—मु. वसिष्ठः.
3 वी. मि. आ., ५२३; गृ. र., ३६६.
4 न च कृसरपूपानि—उ.
5 वी. मि. आ., ५२३–५२४; गृ. र., ३६६.
6 सकृल्लेखं—ब, ज, द.
7 वी. मि. आ., ५२४; गृ. र., ३६७.
8 Verse not found in printed edition.
9 मुखवासोपसेवितम्—वी. मि. आ.; मुखवासोपवासितम्—ब, ज, द; मुखवासोपशामितम्—ना.

[1]तदूष्मपक्कमस्विन्नमवलीढमसंस्कृतम् ॥
[2]पिष्टशाकेक्षुपयसां विकारा नृपनन्दन ।
तथा मांसविकाराश्च वर्ज्याश्चैव चिरोषिताः ॥

[3]ब्रह्मपुराणे

शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि ।

[4]भविष्यपुराणे

आयसेन तु पात्रेण यदन्नमुपनीयते ॥
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत् ।
अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षलवणं च यत् ॥
मृत्तिकाभक्षणं चैव तुल्यं [5]गोमांसभक्षणैः ।

[6]ब्रह्मपुराणे

एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत् ॥
घृतं तैलं च लवणं पानीयं पायसं तथा ।
भिक्षा च हस्तदत्ता या न ग्राह्या कुत्रचित्क्वचित्[7] ॥

## अथ दुग्धानि

[8]तत्र मनुः—[५, ८–९]

अनिर्दशाया गोः क्षीरमौष्ट्रमेकशफं तथा ।

1 तत्सूक्ष्मापक्कमस्विन्न०—गृ. र., तदूष्मपक्कं द्विःस्विन्न०—वी. मि. आ.
2 मार्कण्डेयपुराणम्, ३४, ५८.; पिष्टपाकेक्षुपयसां—वी. मि. आ.; पिष्टशाकेषु पयसां—गृ. र.
3 वी. मि. आ., ५२४; गृ. र., ३६७.
4 वी. मि. आ., ५२४; गृ. र., ३६७.
5 गोमांसभक्षणम्—वी. मि. आ.
6 वी. मि. आ., ५२४; गृ. र., ३६६–३६७.
7 न सा ग्राह्या तु कुत्रचित्—वी. मि. आ., गृ. र.
8 वी. मि. आ., ५२५; गृ. र., ३६७–३६८.

आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥
आरण्यानां च सर्वेषां मृगाणां [1]माहिषं विना ।
स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥

'अनिर्दशायाः' यस्याः प्रसूताया दशदिनान्यनपक्रान्तानि[2]। 'एकशफाः' एकखुरा अश्वादयः। 'आविकं' मेषीक्षीरम्। 'सन्धिनी[3]' या ऋतुमती वृषभमिच्छति। "संधिनी वृषस्यन्ती तस्याः पयो न पिबेद्दतुमद्भवति" इति [4]हारीतवचनात्। 'विवत्सा[5]' वत्सरहिता। 'आरण्या मृगाः' रुरुमहिषपृषतादयः ॥

[6]गौतमः—[१७, २०–२३]

गोश्च क्षीरमनिर्दशायाः[7] सूतके[8]। अजामहिष्योश्च। नित्यमाविकमपेयमौष्ट्रमेकशफं च। स्यन्दिनीयमसूसन्धिनीनां च ॥

'स्यन्दिनी[9]' वत्सं विनैव प्रस्रवत्स्तनी। 'यमसूः' यमलापत्या ॥

1 महिषीं विना—उ, वी. मि. आ.

2 दशदिनानि नापगतानि—ब, द, ज; दशदिवसान्यनपक्रान्तानि—ना.

3 'सन्धिनी' या उभयोः प्राप्तदोहा कथंचिदन्यतरस्मिन् दुह्यते। प्रातरदुग्धा सायं दुह्यते। सा तु स्वल्पक्षीरत्वादेकस्मिन्नेव काले, सासौ सन्धिनी। कश्चिदाह—या मृतस्ववत्सा परकीयं वत्सं संचार्य दुह्यते सा 'सन्धिनी'। 'विवत्सा' तु या सत्येव वत्से विनाकृतवत्सा वत्सप्रस्रवणमनेपक्ष्य कुष्ठकयवशालितुषादिना भोजनविशेषेण दुह्यात् ॥—मेधातिथिः.

4 वी. मि. आ., ५२५; गृ. र., ३६८.

5 'विवत्सायाः' मृतवत्सायाः असन्निहितवत्सायाश्च क्षीरं वर्जयेत्—कुल्लूकः.

6 वी. मि. आ., ५२५; गृ. र., ३६८.

7 अनिर्दशाहायाः—मस्करी.

8 गोः प्रसूताया अनतिक्रान्तदशाहायाः क्षीरमभोज्यम्। चशब्दाद्दध्यादि च।—मस्करी.

9 'स्यन्दिनी' नितान्तग्रन्थिस्तनी—मस्करी.

[1]बौधायनः—[१, १२, ९–१०]

अनिर्दशाहासन्धिनीक्षीरमपेयम् । विवत्सान्यवत्सयोश्च[2] ॥

'अन्यवत्सा' अन्यस्या वत्सेन युक्ता ॥

[3]आपस्तम्बः—[१, १७, २१–२४]

[4]अपेयम् । तथैलकं[5] पयः । उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति । धेनोश्चानिर्दशायाः ॥

'पयो न पिबेद्' इत्यनुवृत्तौ—

[6]हारीतः

न विवत्सायाः स्तेययोगात् । न हतवत्सायाः शोकाभिभूतत्वात् । न निर्णिक्ताया असत्त्वात् । नान्यस्याच्छिद्यात्मनाश्नीयात् । एवं न [7]नवसूतायाः सरजस्त्वात्[8] । सप्तरात्रादित्येके । दशरात्रादित्यपरे । मासेन पेयूषं[9] भवतीत्यपरे । एवं ह्याह ।

द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनं दुह्याद्यथान्यायं यथाबलम् ॥

1 वी. मि. आ., ५२५ ; गृ. र., ३६८.

2 विवत्सान्यवत्सासन्धिनीनां क्षीरमपेयम् , न पुनस्तद्विकारं दध्याद्यपि—गोविन्दस्वामी.

3 वी. मि. आ., ५२५–५२६ ; गृ. र., ३६८.

4 सर्वं मद्यमपेयम्—मु. आप., गृ. र.

5 तथैडिकं—गृ. र; तथैकशफं—वी. मि. आ ; अविः एलका, तस्याः क्षीरमपेयम्—हरदत्तः.

6 वी. मि. आ., ५२६ ; गृ. र., ३६९.

7 नवप्रसूतायाः—ब, ज, ना, द.

8 सरजसत्वात्—वी. मि. आ.

9 पेयं—गृ. र,

'विवत्सा' अत्र विप्रकृष्टवत्सा। 'निर्णिक्तायाः' निःशेषेण दुग्धायाः ॥

[1]ब्रह्मपुराणे

घृतात्फेनं[2] घृतान्मण्डं[3] पेयूषमथवापि गोः।
सगुडं मरिचाक्तं तु तथा पर्युषितं दधि ॥
दीर्णं[4] तक्रमपेयं च नष्टस्वादं[5] च फेनवत्।
प्रमादाद्भक्षितैरेभिर्वने पक्षं व्रतं[6] चरेत् ॥

[7]भविष्यपुराणे

[8]कपिलां यः पिबेच्छूद्रो नरके स विपच्यते।
हुतशेषं पिबेद्विप्रो[9] विप्रः स्यादन्यथा पशुः ॥

[10]ब्रह्मपुराणे

अपि प्रयाणसमये[11] रात्रौ न प्राशयेद्दधि।
मधुपर्कप्रदानं च वर्जयित्वा तु कामतः[12] ॥
दिवा धानासु वसति रात्रौ च दधिसक्तुषु।
अलक्ष्मीः कोविदारेषु कपित्थेषु सदा स्थिता[13] ॥

1 वी. मि. आ., ५२६ ; गृ. र., ३६९.
2 घृतफेनं—गृ. र.
3 घृतादिति पञ्चमी षष्ठ्यर्थे। मण्डमुपरिभागः—गृ. र.
4 'दीर्णं' विभक्तीभूतदधिभागम्—गृ. र., ३७०.
5 नष्टस्वादु—गृ. र.
6 पक्षव्रतं—ना, वी. मि. आ.
7 वी. मि. आ., ५२६ ; गृ. र., ३७०
8 कापिलं—गृ. र. ; कपिलायाः—ब, द, ज, ना.
9 पिबेद्दुग्धं—ब, द.
10 वी. मि. आ., ५२६ ; गृ. र., ३७०.
11 प्राणान्तसमये—ज.
12 प्रयत्नतः—ब, द.
13 सदान्विता—ना.

## अथ पक्षिणः

[1]तत्र मनुः—[५, ११-१६]

[2]क्रव्यादाञ्छकुनीन् सर्वान् तथा ग्रामनिवासिनः।
अनिर्दिष्टांश्चैकशफांष्टिट्टिभं च विवर्जयेत्॥
कलविङ्कं प्लवं हंसं चक्राह्व[3] ग्रामकुक्कुटम्।
सारसं [4]रज्जुदालं च दात्यूहं [5]शुकसारिके॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्।
[6]निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च॥
बकं चैव [7]बलाकां च काकोलं खञ्जरीटकम्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः॥

'क्रव्यादाः' मांसाशिनो गृध्रादयः। 'ग्रामनिवासिनः' पारावतादयः। अत्रोभयत्र 'शकुनी'ति संबध्यते। 'अनिर्दिष्टान्' श्रुतौ भक्ष्यत्वेनाकथितान्। श्रुतौ हि केचित् क्वचित् भक्ष्यत्वेनैकशफा निर्दिष्टाः। यथा "[8]त्वाष्ट्रं वाडवमालभेत तस्य च मांसमश्नीयाद्" इति। अतो ये क्वचिद्यज्ञे श्रुत्या भक्ष्यत्वेनोक्तास्ते तद्दर्शनेनान्यत्रापि न भक्षणीयाः। तेषामेकशफानामन्यत्रापि भक्ष्यत्वेनानिर्देशात्। 'कलविङ्कः'

1 वी. मि. आ., ५४०-५४१; गृ. र., ३७१—३७२.

2 क्रव्यादः—मेधातिथिः, वी. मि. आ.; क्रव्यादाञ्छकुनान्—कुल्लूकः.

3 चक्राङ्गं—ब, द, गृ. र.

4 रज्जुवालं—कुल्लूकः.

5 शुकसारिकम्—वी. मि. आ., गृ. र.

6 तथा निमज्य मत्स्यादान्—वी. मि. आ.

7 बलाकं—ज, गृ. र.

8 "त्वाष्ट्रं वडबमालभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां प्रजनयिता" etc. तै. सं., २, १. ८. ३; "औष्ट्रं वाडवमालमेत तस्य च मांसमश्नीयात्" इति कुल्लूकः; ओष्ट्रं वाडवमालमेत तस्य च मांसमश्नीयात्" इति गृ. र.; वी. मि. आ., मूलपाठमनुसरति.

ग्रामचटकः। तस्य च ग्रामनिवासित्वेन निषेधे सिद्धे पुनर्ग्रामवचनं ग्रामारण्योभयनिवासित्वादारण्यस्यापि निषेधार्थम्। 'प्लवः' प्लवनेनैव य आहारं प्राप्नोति। 'रज्जुदालः' काष्ठकुट्टकः। 'दात्यूहः' कालकण्ठः, डाडक इति प्रसिद्धः। 'प्रतुदाः' ये चञ्च्वा प्रतुद्य भक्षयन्ति। 'जालपादाः' आड्यादयः[1]। 'कोयष्टिः' पक्षिविशेषः। 'नखविष्किराः' नखैर्विकीर्य ये भक्षयन्ति[2]। '[3]निमज्ज्यतो मत्स्यादाः' [4]मद्गुप्रभृतयः। 'सौनं' सूनास्थानसंभवं मांसम्[5]। 'वल्लूरं' शुष्कमांसम्। 'काकोलो' द्रोणकाकः[6]। 'मत्स्यादाः' नक्रादयः। 'सर्वशः' सर्वप्रकारेण ॥

[7]याज्ञवल्क्यः—[१, १७२-१७३]

> क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान्।
> सारसैकशफान् हंसान् सर्वांश्च ग्रामवासिनः ॥
> कोयष्टिप्लवचक्राह्वबलाकाबकविष्किरान्।

[8]तथा—[१, १७४-१७५]

> कलविङ्कं सकाकोलं कुररं रज्जुदालकम्।

1 आड्यादयः—गृ. र.; जालसदृशाः पादाः येषां ते चाषादयः—वी. मि. आ.; जालाकारपादान् शरारिप्रभृतीन्—कुल्लूकः.

2 'नखविष्किराः'—नखैर्विकीर्य ये भक्षयन्ति मयूरकुक्कुटादयः—मेधातिथिः; नखैर्विकीर्य ये भक्षयन्ति तानभ्यनुज्ञातारण्यकुक्कुटादिव्यतिरिक्तान् श्येनादीन्—कुल्लूकः; नखैर्वितुद्य ये भक्षयन्ति वनकुक्कुटादयः—गृ. र.

3 निमज्ज्य मत्स्यादाः निमज्ज्य ये मत्स्यान् भक्षयन्ति जलवायसप्रभृतयः—वी. मि. आ.; निमज्जतो मत्स्यादान् मण्डूकप्रभृतीन्—गृ. र.; निमज्ज्य ये मत्स्यान् खादन्ति तान् मद्गुप्रभृतीन्—कुल्लूकः.

4 मण्डूप्रभृतयः—ब, द.

5 यत्र मांसविक्रयार्थाः पशवो हन्यन्ते सा सूना। आपणो मांसस्येत्येके।—मेधातिथिः.

6 दग्धकाकः—गृ. र.

7 वी. मि. आ., ५४१; गृ. र., ३७२.

8 वी. मि. आ., ५४१; गृ. र., ३७२.

जालपादान् खञ्जरीटानज्ञातांश्च मृगद्विजान् ॥
चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ।
[1]मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥

'कुररः' कुरलः[2]। 'चाषः' किकीदिविः। 'रक्तपादाः' कदम्बादयः ॥

[3]देवलः

बलाकाहंसदात्यूहभृङ्गराजकचित्रकाः ।
उलूककुररश्येनगृध्रकुक्कुटवायसाः ॥
चकोरः कोकिलो [4]रज्जुः कुटिलश्चाषमद्गुकौ ।
[5]कङ्कः सारवणो भासः शतपत्रप्लवङ्गमाः ॥
उत्क्रोशो[6] बर्हिणः क्रौञ्चश्चक्रवाकः शिलीमुखः ।
पारावतकपोतौ चाभक्ष्याः पक्षिगणाः स्मृताः[7] ॥

'भृङ्गराजो' धूम्राटः, धनच्छुआ इति प्रसिद्धः। 'चित्रकः' चित्रकपोतः। 'कङ्कः' लोहितपत्रः[8] ॥

'अभोज्यम्' इत्यनुवृत्तौ वसिष्ठः[9]—[१४, ४८]

1 मत्स्यांश्चाकामतो जग्ध्वा—विश्वरूपः.

2 कुररः उत्क्रोशकः—वी. मि. आ.; कुररः उत्क्रोशः 'उत्क्रोशकुररौ समौ' इत्यमरकोषात्—गृ. र.; कुररः शब्दानुकारी करञ्जकः—विश्वरूपः; कुरर उत्क्रोशः—विज्ञानेश्वरः.

3 वी. मि. आ., ५४१; गृ. र., ३७२–३७३.

4 रज्जुदालकश्चाषमुद्गकौ—वी. मि. आ.; रज्जाः कुटिलाश्चाषमण्डूकाः—गृ. र.; रक्ता कुटिलाश्चाषमद्गुकौ—उ; रज्वाः कुटिलश्चाषमद्गुकौ—ज.

5 कङ्कोलो वरणो—गृ. र.

6 'कुरर'पदादेवोत्क्रोशनिषेधे सिद्धे पुनरुत्क्रोशोपादानं दोषातिशयार्थम्—गृ. र.

7 च अभक्ष्याः पक्षिणः स्मृताः—वी. मि. आ., गृ. र.

8 'कङ्कोलो' हितपक्षः कङ्कारीति प्रसिद्धः—गृ. र.

9 वी. मि. आ., ५४१–५४२; गृ. र., ३७३.

शकुनानां[1] [2]विधुनविष्किरजालपादाः कलविङ्कप्लवहंसचक्रवाकभासवायसपारावताः [3]कुक्कुटसारङ्गाः पाण्डुकपोतक्रौञ्चक्रकर[4]बकबलाकामद्गुटिट्टिभ[5]मान्धालनक्तंचरा दार्वाघाटकचातक[6]तैलातक[7]हारीतकखञ्जरीटकग्राम्यकुक्कुटशुकसारिकाकोकिलक्रव्यादो ग्रामोपचारिणश्च ॥

विधुनोतीति 'विधुनः'। 'भासः' [8]तल्लचरो गृध्रविशेषः। 'सारङ्गो' मृगः[9]। 'क्रकरः' कृकलासः। 'मान्धालो' वाग्गुदः[10]। 'नक्तंचरा' उलूकादयः। 'दार्वाघाटः' काष्ठकुट्टकः। 'हारीतकः' हरितपक्षः कपोताकृतिः। 'ग्रामोपचारिणः' ग्राम एव ये सदा चरन्ति ॥

अत्र 'अभक्ष्या' इति भाविनि गौतमः[11]—[१७, २६–२७]

कलविङ्कप्लवचक्रवाकहंसाः। काककङ्कगृध्रश्येना जलजा रक्तपादतुण्डा [12]ग्राम्यकुक्कुटसूकराः[13] ॥

1 शकुनीनां—वी. मि. आ.

2 विधुविष्कर—मु. वसिष्ठः, विधूनविष्कर—गृ. र.

3 ककुभ—गृ. र.; कुक्कुर—वी. मि. आ.; कुरर—मु. वसिष्ठः.

4 क्रकरकङ्कगृध्रश्येनबक—मु. वसिष्ठः; क्रौञ्चगृध्रश्येनकुररबक—गृ. र.

5 मन्थान—वी. मि. आ.; मण्डल—गृ. र.; मन्थाल—उ.

6 चटक—गृ. र., मु. वसिष्ठः.

7 वैलातक—वी. मि. आ.; रैलातक—मु. वसिष्ठः.

8 तुन्नचरः—ब. द; तक्रचरः—ज; भल्लचरः—गृ. र.

9 शारङ्गो भ्रमरः—गृ. र.

10 मन्थानो वागादः—वी. मि. आ.; मण्डलो वाग्गुदो वादुर इति प्रसिद्धः—गृ. र.

11 वी. मि. आ., ५४२.

12 ग्राम्यकुक्कुटसूकरौ—मु. गौ.

13 कलविङ्को ग्रामचटकः। प्लवः शकटबिलः। काकादयः पक्षिणः प्रसिद्धाः। जलजाः सर्व एवाविशेषेण। रक्तपादाः पारावतादयः। रक्ततुण्डाश्चकोरादयः। ग्राम्यशब्दः कुक्कुटसूकराभ्यां संबध्यते। एवं चारण्यानामप्रतिषेधः। विसमासः अन्येषां क्रव्यादादीनामपि प्रतिषेधार्थः ॥—**मस्करी.**

'अभक्ष्या' इत्यनुवृत्तौ यमः

कलविङ्कप्लवचक्रवाकहंसभाससारसा ये चान्ये प्रतुदा विष्किरा जालपादा रक्तपादाः कोयष्टिकाः ॥

[1]पुनर्यमः

छत्राकं विड्वराहं च जालपादांश्च कुक्कुटान् ।
भक्षयित्वा पतेद्विप्रो योऽपि स्यात्सर्ववेदवित् ॥

[2]अत्राभक्ष्यप्रकरणे आपस्तम्बः—[१, १७, ३२–३६]

कुक्कुटो [3]विष्किराणाम् । प्लवः प्रतुदाम् । क्रव्यादः । हंससारस[4]चक्रवाकसुपर्णाश्च । क्रुञ्चक्रौञ्चवार्ध्राणस[5]लक्ष्मणवर्ज्यम् ॥[6]

[7]गौतमः—[१७, ३२-३३]

निचुदारुबकबलाकाशुकमद्गुटिट्टिभमान्धालनक्तंचरा अभक्ष्याः । भक्ष्याः प्रतुदविष्किराजालपादाः[8] ॥

1 वी. मि. आ., ५४२ ; तथा for पुनर्यमः—ना.

2 वी. मि. आ., ५४२ ; गृ. र., ३७३.

3 विकिराणाम्—हरदत्तः; पादाभ्यां विकीर्य कीटधान्यादि ये भक्षयन्ति ते मयूरादयो विकिराः—इति व्याख्यातम्.

4 भास for सारस—मु. आप.; हंसभाससारस—वी. मि. आ.

5 वार्ध्रीणस—वी. मि. आ.

6 तुण्डेन प्रतुद्य ये भक्षयन्ति ते दार्वाघाटादयः प्रतुदाः । तेषां मध्ये प्लव एवाभक्ष्यः । प्लवः शकटबिलाख्यो बकविशेषः ॥ क्रव्यं मांसं, तदेव केवलं येऽदन्ति ते क्रव्यादा गृध्रादयः । तेऽप्यभक्ष्याः ॥ हंसः प्रसिद्धः । भासः श्येनाकृतिः पीनतुण्डः । चक्रवाको मिथुनचरः । सुपर्णः श्येनः । एते चाभक्ष्याः ॥ क्रुञ्चा बृन्दचराः । क्रौञ्चा मिथुनचराः । ते चाभक्ष्याः । सूत्रे क्रौञ्चेति विभक्तिलोपश्छान्दसः । किमविशेषेण क्रुञ्चक्रौञ्चा न भक्ष्याः । नेत्याह—वार्ध्राणसवर्जम् । श्वेतो लोहितो वा मूर्धा येषां ते लक्ष्मणाः । त एव विशिष्यन्ते वार्ध्राणसा इति । वार्ध्रं चर्म । तदाकारा नासिका येषां तानेवंभूतान् लक्ष्मणान् वर्जयित्वा क्रुञ्चक्रौञ्चा न भक्ष्या इति ॥—हरदत्तः.

7 वी. मि. आ., ५४२–५४३.

8 निचुदारुः दार्वाघटः, मद्गुः जलमज्जनशीलः, टिट्टिभः टिट्टिभशब्दानुकरणशीलः, मान्धालो वाग्गुदः, नक्तंचरा उलूकादयः, प्रतुदाः प्रतुद्य प्रतुद्य मुखेन ये भक्षयन्ति मयूरादयः ।

[1]'भक्ष्या' इत्यनुवृत्तौ बौधायनः—[१, १२, ७]

पक्षिणस्तित्तिरिकपोत[2]कपिञ्जलवार्ध्राणसतृणमयूरवारणा वारणवर्जाः पञ्चविष्किराः[3] ॥

[4]शङ्खः—[१७, २७]

तित्तिरिं[5] च मयूरं च लावकं च कपिञ्जलम् ।
वार्ध्राणसं वर्तकं च भक्ष्यानाह यमः सदा ॥[6]

## अथ पशवः

[7]तत्र देवलः

अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुञ्जराः ।
सिंहव्याघ्रर्क्षशरभाः [8]सर्पाजगरजालकाः ॥
आखुमूषिकमार्जारनकुलग्रामसूकराः ।
श्वशृगाल[9]मृगद्वीपिगोलाङ्गूलनृमर्कटाः[10] ॥

विष्किराः विकीर्य विकीर्य ये भक्षयन्ति लावकादयः। अजालपादाः ये जालपादा न भवन्ति तुम्बकादयः।—मस्करी.

1 वी. मि. आ., ५४३ ; गृ. र., ३७४.

2 कपिञ्जललावकतृणमयूरचातकवर्जाः—वी. मि. आ. ; कपिञ्जलवार्ध्रीणसतृणमयूरा वारुणवर्ज्याः—गृ. र. ; कपिञ्जललावकतृणमयूरवारणा वारणवर्ज्याः—ना ; कपिञ्जलवार्ध्रीणसमयूरवारणा वारणवर्जाः पञ्च विविष्किराः—मु. बो.

3 विकीर्य विकीर्य भक्षयन्तीति 'विविष्किराः'—गोविन्दस्वामी.

4 वी. मि. आ., ५४३ ; गृ. र., ३७४.

5 तित्तिरं—वी. मि. आ., गृ. र., मु. शङ्खः.

6 कपिञ्जलो गौरतित्तिरः। वार्ध्रीणसस्तु—'कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः' इति लक्षितः। वर्तको वटयी इति प्रसिद्धः। अत्र मयूरस्तृणमयूरपरः पूर्वेण समानवाक्यानुरोधात् ॥—गृ. र.

7 वी. मि. आ., ५४३ ; गृ. र., ३७४–३७५.

8 सर्पाजगरकास्तथा—वी. मि. आ.

9 'मृग'शब्दोऽज्ञातमृगपरः। 'अज्ञातांश्च मृगद्विजान्' (१,१७४) इति याज्ञवल्क्यवचनात्।—गृ. र.

10 श्वशृगालकपिद्वीपिगोलाङ्गूलकमर्कटाः—वी. मि. आ.

'ऋक्षः' भल्लूकः। 'शरभो' अष्टपदः। 'अजगरः' सर्पविशेषः। 'आखुः' महानुन्दुरुः[1]। 'मूषिको'ऽत्र स्वल्पमूषिकः। 'द्वीपी' चित्रकः। 'गोलाङ्गूलः' कृष्णमुखो वानरः। 'ना' मनुष्यः[2]। 'मर्कटो' वानरः॥

पैठीनसिः

मृगपक्षिणां क्रव्यादांश्च वर्जयेत्। सर्वमांसादानां यावन्तस्तथोक्तास्तावन्तोऽभक्ष्याः॥

[3]यमः

गवाश्वं गर्दभोष्ट्रं च श्वशृगालं तथैव च।
विष्किरान् प्रतुदान् भुक्त्वा सद्यः पतति वै द्विजः॥

'[4]नित्यमभोज्यम्' इत्यनुवृत्तौ गौतमः—[१७, २८]

[5]उभयतोदन्तकेश्यलोमैकशफकलविङ्कप्लवचक्रवाकहंसाः॥

'उभयतोदन्तः' मनुष्यः[6]। 'केशी' चमरी। 'अलोमाः' सर्पादयः॥

[7]पुनर्गौतमः—[१७, २९]

अपन्नदद्भवसन्नवृथामांसानि॥

1 'आखुः' स्थूलोन्दुरुः—वी. मि. आ.; 'आखुः' महामूषिकः—गृ. र.
2 कल्पतरौ 'नृमर्कटा', इति पाठः। तदा 'ना' मनुष्यः।—वी. मि. आ.
3 वी. मि. आ., ५४३–५४४; गृ. र., ३७५.
4 वी. मि. आ., ५४४; गृ. र., ३७५–३७६.
5 उभयतोदत्—वी. मि. आ., मस्करी.
6 उभयतोदतः मनुष्यादयः—वी. मि. आ., मस्करी.
7 वी. मि. आ., ५४४; गृ. र., ३७६.

'अपन्नदत्' यावत्स्वभावतो दन्ता न पतन्ति तावद्भक्ष्योऽप्यभक्ष्यः। 'अवसन्नो' व्याधिग्लानः[1]। 'वृथा-मांसं' यद्देवपित्राद्युद्देशेन न पच्यते ॥

'[2]अभोज्या' इत्यनुवृत्तौ वसिष्ठः—[१४, ४३–४७]

गौरगवयशरभाजाश्च[3]। अनुद्दिष्टास्तथा। धेन्वनड्वाहाव-पन्नदन्ताश्च। भक्ष्यौ धेन्वनड्वाहौ मेध्यौ वाजसनेयके विज्ञा-यते। खड्गे तु विवदन्त्यग्राम्यसूकरे च ॥

'गौरः' अश्वसदृश आरण्यपशुः। 'मेध्यौ' मेधो यज्ञस्तदङ्गभूतौ। 'खड्गे च विवदन्त्यग्राम्यसूकरे च' इति, खड्गग्राम्यसूकरयोः केचिन्मुनयो भक्ष्यत्वं वदन्ति, केचिच्चा-भक्ष्यत्वम्। ततश्च विकल्पः। स च श्राद्धनियुक्तानि-युक्ततया व्यवस्थितः ॥

[4]ब्रह्मपुराणे

पशोश्च मार्यमाणस्य न मांसं ग्राहयेद्द्विजः।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा ॥
भूमेरन्तरितं कृत्वा मृद्भिश्चाच्छादितं च यत्।
पक्वमांसमृजीषं च प्रयत्नात्तन्न भक्षयेत्[5] ॥

1 'अवसन्नो' व्याधितः—वी. मि. आ., मस्करी ; अवसन्नो व्याधिलग्नः—उ.
2 वी. मि. आ., ५४४ ; गृ. र., ३७६.
3 गौरगवयशरभाश्च—गृ. र., मु. वसिष्ठः ; 'अजा' छागी—वी. मि. आ.
4 वी. मि. आ., ५४४ ; गृ. र., ३७६.
5 प्रयत्नेन विवर्जयेत्—वी. मि. आ. ; 'पक्वमांसमृचीषं तु प्रयत्नात्तन्न भक्षयेत्', भूमेरन्तरितं कृत्वा मृद्भिराच्छाद्य यत्पक्वं तन्मांसं न भक्षयेत्। ऋचीषशब्दोऽत्र भौमोष्म-पक्वपरः।—गृ. र.

[1]मनुः—[५, १७]

न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्।
भक्ष्येष्वपि[2] समुद्दिष्टान् सर्वान् पञ्चनखांस्तथा ॥

'एकचरा' एकाकिनः प्रायेण स्वभावतो ये चरन्ति सर्पादयः। 'अज्ञाताः' नामतः स्वभावतो रसवीर्य[3]विपाकतश्चाभियुक्तैरपि ये। सामान्यतो विशेषतश्च प्रतिषेधानाक्रान्तत्वेन भक्ष्यवर्गमध्यपाताद् 'भक्ष्येष्वपि समुद्दिष्टान्' इत्युक्तम् ॥

[4]अभक्ष्यप्रकरणे आपस्तम्बः [१, १७, ३७]

पञ्चनखानां गोधाकच्छपश्वाविच्छल्यक[5]खड्गशशपूतिखषवर्जम्[6] ॥

'श्वावित्' सेधा[7]। 'शल्यकः' शल्यसहितः [8]सेधासदृशः प्राणिविशेषः। 'पूतिखषः'[9] हिमवति प्रसिद्ध इति कपर्दी ॥

1 वी. मि. आ., ५४४–५४५; गृ. र., ३७६–३७७.

2 भक्षयेद्वा—गृ. र.

3 विकारैश्च for विपाकतश्च—उ.

4 गृ. र., ३७७; वी. मि. आ., ५४५.

5 श्वाविद्धर्यक for श्वाविच्छल्यक—वी. मि. आ., हरदत्तः; शर्यकः शल्यकः यस्य चर्मणा तनुत्राणं क्रियते। 'श्वाविट्छल्यक' इति युक्तः पाठः। एके तु छकारं पठन्ति छकारात्पूर्वविकारम्।—हरदत्तः; श्वाविट् वराहविशेषः। शल्यकः यस्य चर्मणा तनुत्राणं क्रियते इत्युज्ज्वलाकारः। कल्पतरौ तु श्वाविच्छल्लक इति पाठः। तदा श्वावित् सेधा, शल्लकस्तत्सदृशः प्राणिविशेषः।—वी. मि. आ.

6 खगवर्जम् for खषवर्जम्—वी. मि. आ.

7 मेधा for सेधा—गृ. र.

8 मेधासदृशः—गृ. र.

9 पूतिखगः—वी. मि. आ.

[1]मनुः—[५, १८]

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥

'एकतोदतः' एकतोदन्तान् ॥

[2]बौधायनः—[१, १२, ५]

भक्ष्याः [3]श्वाविड्गोधाशशकशल्यककच्छपखड्गाः खड्गवर्जाः पञ्च पञ्चनखाः[4] ॥

[5]महाभारते

आजं गव्यं च यन्मासं मायूरं च विवर्जयेत् ।

[6]हारीतः

ग्राम्यारण्यानां पशूनामश्नन्ति[7] यथाजमेषमहिष[8]हरिणखड्गरुरुपृषतश्येन्यङ्कुमहारण्यवासिनश्च वराहान् । [9]तथा शशकशल्यक[10]सेधा[11]गोधाकूर्मवर्तकतित्तिरिमयूरवार्ध्राणस[12]लावकक्रकरकपिञ्जलान्[13] । सशल्कांश्च मत्स्यान् न्यायोपपन्नान्[14] भक्षयेत् ॥

1 वी. मि. आ., ५४५ ; गृ. र., ३७७.
2 वी. मि. आ., ५४५.
3 श्वाविड् for श्वावित्—वी. मि. आ., मु. बो.
4 'श्वाविडः' श्वसदृशमृगाः । 'शल्यकाः' वराहविशेषाः ।—गोविन्दस्वामी.
5 वी. मि. आ., ५४५.
6 वी. मि. आ., ५४५—५४६ ; गृ. र., ३७५.
7 ग्राम्यारण्यान् पशूनश्नन्ति—गृ. र.
8 महिष—omitted by वी. मि. आ.
9 गृ. र., ३७७.
10 शल्लक for शल्यक—वी. मि. आ.
11 मेधा for सेधा—गृ. र.
12 वार्ध्रीणस—वी. मि. आ., गृ. र.
13 लावकुक्कुटकपिञ्जलान्—वी. मि. आ. ; लावकवकपिञ्जलान्—गृ. र.
14 मत्स्यानन्यानपि समुपपन्नान्—वी. मि. आ.

'रुरुः' बहुशाखशृङ्गो मृगः। 'पृषतो' बिन्दुचित्रितो मृगः। 'ऋश्यः' मृदुशृङ्गः, रोझ इति प्रसिद्धः[1]। 'न्यङ्कुः' शम्बरसदृशः शृङ्गरहितः। 'सेधा' शललवती[2] ॥

[3]<u>पैठीनसिः</u>

ग्राम्यारण्याश्चतुर्दश। गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः। [4]पक्षिवानरमहिषसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः ॥

## अथ मत्स्याः

[5]तत्र <u>मनुयमौ</u>

यो यस्य मांसमश्नाति स तन्मांसाद उच्यते।
मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्[6] ॥

[7]<u>आपस्तम्बः</u>—[१, १७, ३८–३९]

अभक्ष्यश्चेटो मत्स्यानाम्। सर्पशीर्षो[8] मृदुरः क्रव्यादो ये चान्ये विकृतास्या[9] यथा मनुष्यशिरसः ॥

'सर्पशीर्षः' सर्पस्येव शिरो यस्य। 'मृदुरः' मकरः। 'क्रव्यादः' ये प्रायेण मांसमश्नन्ति नक्रादयः ॥

1 वेस्म इति प्रसिद्धः—गृ. र.; रोमवन इति प्रसिद्धः—ब, द.
2 'मेधा' सललवती—गृ. र.
3 वी. मि. आ., ५४६.
4 महिषवानरपक्षिसरीसृप०—ब, द, ना, वी. मि. आ.
5 वी. मि. आ., ५४६; गृ. र. ३७८; मनुः, ५, १५.
6 पूर्वस्य मत्स्यप्रतिषेधविधेरर्थवादोऽयम्। यस्तु मत्स्यादः सर्वमांसाशी भवति। गोमांसाद इत्यपि व्यपदेष्टुं शक्यः। अतो निन्दातिशयान्मत्स्यान् विवर्जयेत् ॥—मेधातिथिः.
7 वी. मि. आ., ५४६; गृ. र., ३७८.
8 सर्पशीर्षी—मु. आप.
9 विकृता for विकृतास्या—मु. आप.

[1]यमः

अभक्ष्या मकरसर्पसरीसृपमद्गुमयूरवर्मिकनक्रकर्कटशिशुमाराः। ये चाऽन्ये हयकर्णिकाः। ये चान्येऽशल्का मत्स्या उभयकास्याः॥

'सर्पो'ऽत्र जलसर्पो डुण्डुभः। 'सरीसृपो'ऽत्र जलौकाः। 'मद्गुः' जलकाकः। 'मयूरो'ऽत्र जलचरो मयूरसदृशः पक्षी। 'वर्मिकः' स्वल्पसर्पसदृशो मत्स्यः। 'उभयकास्याः' उभयतोमुखाः॥

[2]पुनर्यमः

मत्स्यानशल्कान् सर्वान् वेदाध्यायी विवर्जयेत्॥

'वेदाध्यायी' त्रैवर्णिकोऽत्र॥

[3]पैठीनसिः

कुलीरवार्ताक[4]पृतन[5]जलानर्तक्षिप्रगाश्चेत्यभक्ष्याः।[6]सर्पशीर्षा विकृतमुखाश्च॥

'[7]अभक्ष्या' इत्यनुवृत्तौ वसिष्ठः—[१४, ४१-४२]

मत्स्यानां[8] चेटगवयशिशुमारनक्रकुलीराः। विकृतरूपाः सर्पशीर्षाश्च॥

1 वी. मि. आ., ५४६-५४७; गृ. र., ३७८.

2 तथा for पुनर्यमः—ना; वी. मि. आ., ५४७; गृ. र., ३७८.

3 वी. मि. आ., ५४७; गृ. र., ३७९.

4 वातुकि for वार्ताक—गृ. र.

5 पत्तन for पृतन—वी. मि. आ.; पूतन—गृ. र.

6 शल्कैर्युक्ता मत्स्या भक्ष्याः। इतरे त्वभक्ष्याः। सर्पशीर्षा विकृतमुखाश्च—ज; गृ. र. adds शल्कैर्युक्ताः . . . . त्वभक्ष्याः but omits सप्तशीर्षा etc.

7 वी. मि. आ., ५४७.

8 मत्स्यानां वा चेट etc—मु. वसिष्ठः.

[1]देवलः

शम्बूकः शुक्तिर्नखशुक्तिः शिशुमारः प्लवङ्गमः।
मत्स्याश्च विकृताकारा नैव भक्ष्या जलौकसाम्॥

'[2]नखशुक्तिः' दीर्घशुक्तिका। 'प्लवङ्गमो' मण्डूकः।

[3]मनुः—[५, १६]

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः।
[4]राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः[5]॥

'नियुक्तौ हव्यकव्ययोः' श्राद्धाद्यर्थं विनियुक्तौ। 'आद्यौ' अदनीयौ॥

शङ्खः—[१७, २५]

राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च।
पाठीनरोहितौ वापि भक्ष्या मत्स्येषु कीर्तिताः॥

'[6]भक्ष्या' इत्यनुवृत्तौ बौधायनः—[१, १२, ८]

मत्स्याः सहस्रदंष्ट्रश्चिलिचिमो[7] वर्मी बृहच्छिरोरोमशकरिरोहितराजीवाः॥

1 वी. मि. आ., ५४७; गृ. र., ३७९.

2 ज, ब, द. and वी. मि. आ., add 'शम्बूकः' प्रसिद्धः.

3 वी. मि. आ., ५४७; गृ. र., ३७९.

4 राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः—मेधातिथिः.

5 मेधातिथिगोविन्दराजौ तु—"पाठीनरोहितौ देवपित्रादिकर्मणि नियुक्तावेवादनीयौ न त्वन्यदा। राजीवसिंहतुण्डसशल्कमत्स्यास्तु हव्यकव्याभ्यामन्यत्रापि भक्षणीयाः" इत्याचक्षतुः। न तन्मनोहरम्। पाठीनरोहितौ श्राद्धे नियुक्तौ श्राद्धभोक्त्रैव भक्षणीयौ न श्राद्धकर्त्रापि। राजीवाद्यो हव्यकव्याभ्यामन्यत्रापि भक्ष्या इत्यस्याप्रमाणत्वात्। मुन्यन्तरैश्च रोहितपाठीनराजीवादीनां तुल्यत्वेनाभिधानात्॥—कुल्लूकः.

6 गृ. र., ३७९.

7 चिलिचिमः स्थलचरो लोहिताकारः स्थलचरो रोहितसदृशः। राजीवः सहस्रजग्विलः पाठीनः। वर्मिर्वायवो वासुरिति प्रसिद्धः। निषेधस्तु प्राच्योऽन्यायोपात्तविषयः॥—गृ. र.

[1]हारीतः

सशल्कांश्च मत्स्यान् न्यायोपपन्नान् भक्षयेत् ॥

अत्र 'भक्ष्या' इत्यनुवृत्तौ गौतमः[2]—[१७, ३४]

मत्स्याश्चाविकृताः[3] ॥

[4]याज्ञवल्क्यः—[१, १७७–१७८]

भक्ष्याः पञ्चनखा सेधागोधाकच्छपशल्यकाः ।
शशश्च मत्स्येष्वपि [5]तु सिंहतुण्डकरोहिताः[6] ॥
तथा पाठीनराजीवसशल्काश्च द्विजातिभिः ।
अतः शृणुध्वं मांसस्य विधिं भक्षणवर्जने ॥

## अथ मांसभक्षणवर्जनविधिः

[7]तत्र मनुः—[५, २६–३२]

एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः[8] ।
मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्जने ॥

1 वी. मि. आ., ५४५–५४६—"सशल्कान् मत्स्यानन्यानपि समुपपन्नान् भक्षयेत्"

2 हारीतः—इति वी. मि. आ., ५४७.

3 विकृताः प्राण्यन्तररूपाः । सशल्कसमुच्चयार्थश्चकारः । सशल्काश्चाविकृताश्चेति उभयविशेषणयुक्ता एव भक्ष्याः, नैकविशेषणयुक्ता इत्यर्थः ॥—मस्करी.

4 वी. मि. आ., ५४७–५४८.

5 हि for तु—विश्वरूपः.

6 पञ्चनखाः सेधादयः शशान्ताः । चशब्दः खड्गाद्यर्थः । पञ्चनखग्रहणं हस्त्यादि-परिसंख्यार्थम् । मत्स्येष्वपि सिंहतुण्डादयो भक्ष्याः न सर्पशीर्षादयः । सिंहो दीर्घमुखो दीर्घः । तुण्डः स्थूलः स्थूलमुखः । रोहितो लोहितवर्णः । हिशब्दो हेत्वर्थः । हेत्वभिधान-प्रयोजनं तु श्राद्ध एव भक्ष्यत्वज्ञापनार्थम् ॥—विश्वरूपः.

7 वी. मि. आ., ५२६–५२८ ; गृ. र., ३८०–३८१.

8 आद्येन श्लोकार्धेन पूर्वप्रकरणमवच्छिनत्ति । तदेतदनन्तरमनुक्रान्तं प्रकरणमेतद्द्वि-जातीनां न शूद्राणामिति । उत्तरं तु यद्वक्ष्यते तच्छूद्राणामपीति प्रकरणव्यवच्छेदः प्रयो-जनम् ।—मेधातिथिः.

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया ।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये ॥
प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत्[1] ।
[2]जङ्गमं स्थावरं चैव सर्वं प्राणस्य भोजनम् ॥
चराणामन्नमचरा दंष्ट्रिणां चाप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणां चैव भीरवः ॥
नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि ।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च[3] ॥
यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते[4] ॥
क्रीत्वा स्वयं वाप्युत्पाद्य परोपहृतमेव वा[5] ।
देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति ॥

'एतदुक्तं द्विजातीनाम्' इति, पूर्वोक्तभक्ष्याभक्ष्ययोर्ब्राह्मणादिवर्णत्रयाधिकारकथनं शूद्रव्युदासार्थम् । तेन लशुनादिभक्षणे तस्यादोषः । [6]तन्मध्यपठितकाकादिभक्षणं तु महाजनविगानाद्दोषावहम् । अतो वक्ष्यमाणमांसवर्जनविधानं चातुर्वर्ण्यसाधारणम् । वर्जने तु विधिः सूर्यानी-

1 ब्राह्मणानामकल्पयत्—उ, ना.

2 स्थावरं जङ्गमं चैव—मेधातिथिकुल्लूकौ.

3 'अत्ता' भक्षयिता । 'आद्यान् प्राणिनः' अत्तुं शक्यान्, प्रतिदिवसं भक्षयन्न दुष्यति । 'धात्रैव' प्रजापतिना 'अत्तार आद्या' उभयेऽपि सृष्टाः । तस्मात्प्राणात्यये मांसमवश्यं भक्षणीयमिति त्रिश्लोकी विधेरस्यार्थवादः ।—मेधातिथिः.

4 यज्ञार्थं 'मांसस्य' पिण्डप्राशित्रादि 'जग्धिः' अशनम् । 'एष दैवो विधिः' देवैरेतद्विहितम् । 'अन्यथा' तु मांसाशिनः शरीरपुष्ट्यर्थकर्मांसाशने 'प्रवृत्तिः' 'स राक्षसो विधिः' पिशाचानां मांसभक्षणे स्थितिरिति निन्दा ।—मेधातिथिः.

5 परोपकृतमेव वा—ब, द, मेधातिथिकुल्लूकौ.

6 तन्मध्यपतितकाकादिभक्षणं तु महाजनविगानाद्दोषावहमिति कल्पतरुः—वी. मि. आ.

क्षणवत् संकल्परूपः । '[1]प्रोक्षितम्' अत्र यज्ञार्थमन्त्रैः संस्कृतम् । "असंस्कृतान् पशून् मन्त्रैः[2]" इत्यादिवाक्यशेषात् । 'ब्राह्मणानां च काम्यया' इति, यदा ब्राह्मणाः केचित्प्रत्येकं कामयन्ते त्वया मांसं भोक्तव्यमिति, तदा तेषामिच्छयैकवारं मांसं भक्षयतो न दोषः, "सकृद्ब्राह्मणकाम्यया" इति यमवचनात् । 'प्राणानामेव चात्यय' इति, रोगेणान्नाभावेन वा यदा मांसभक्षणव्यतिरेकेण प्राणात्ययः संभाव्यते, तदा मांसं भक्ष्यमित्यर्थः । एषामेव पूर्वोक्तानामर्थवादाः[3] "प्राणस्यान्न" इत्यादयः । '[4]चराः' हरिणादयः । 'अचराः' तृणादयः । 'दंष्ट्रिणो' व्याघ्रादयः । 'अदंष्ट्रिणो' हरिणादयः । 'सहस्ताः' मनुष्यादयः । 'अहस्ताः' मत्स्यादयः । 'शूराः' युद्धाद्युत्साहिताः । 'भीरवः' कातराः । 'यज्ञाय' यज्ञार्थम् । 'जग्धिः' भक्षणम् । 'स्वयमुत्पाद्य' इति क्षत्रियविषयम् ।

तथा च महाभारते[5]

> क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।
> वीर्येणोपार्जितं मांसं यथा खादन्न दुष्यति ॥
> आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः ।

1 अग्नीषोमीये पशौ हुतशिष्टं मांसं लक्षणया प्रोक्षितमुच्यते—मेधातिथिः.

2 असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कदाचन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥—मनुः, ५, ३६.

3 अनुवादाः—द, ब, ज.

4 'चराः' चरणपतनरणोत्साहयोगिनः श्येननकुलादयः । तेषाम् 'अचराः' सर्पकपोतादयः 'अन्नम्' । एवं 'दंष्ट्रिणां' व्याघ्रादीनाम् 'अदंष्ट्रिणः' रुरुपृषतादयो मृगाः । 'अहस्ताः' सर्पमत्स्यादयः 'सहस्तानां' नकुलनिषादादीनाम् । 'शूराणां' महोत्साहयुक्तानां जीवितनिरपेक्षाणां 'भीरवः' प्रियजीविता अल्पसत्त्वा अन्नत्वेन हन्यन्ते ॥—मेधातिथिः.

5 वी. मि. आ., ५२८; गृ. र., ३८१.

अगस्त्येन पुरा राजन् मृगया येन पूज्यते ॥
[1]नात्मानमपरित्यज्य[2] मृगया नाम विद्यते ।
समतामुपसंगम्य[3] भूतं हन्येत मानवः ॥
अतो राजर्षयः सर्वे मृगयां यान्ति भारत ।
लिप्यन्ते न च दोषेण न चैतत्पातकं विदुः ॥ इति ।

'क्रीत्वा स्वयं वा' इत्यनेन च देवपित्रर्चनपूर्वके मांसभक्षणे दोषाभावः प्रदर्शितः । यत्तु मांसवर्जनात् फलश्रवणं तदप्येतत्प्रकारप्राप्तमांसभक्षणवर्जनविषयं, न नियुक्तादिविषयम् । तथाकरणे दोषश्रुतेः ॥

[4]याज्ञवल्क्यविश्वामित्रौ

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान् पितॄन् समभ्यर्च्य[5] खादन्मांसं न दोषभाक्[6] ॥

[7]देवलः

भक्षयन्नपि मांसानि शेषभोजी न लिप्यते ।
औषधार्थमशक्तौ च नियोगाद्यज्ञकारणात् ॥

1 Verse omitted by वी. मि. आ., and गृ. र.

2 नात्मानं तु परित्यज्य—ब, द.

3 समतामुपसर्गस्य—ब, द.

4 वी. मि. आ., ५२८; गृ. र., ३८२; याज्ञवल्क्यः, १, १७९.

5 देवान् पितॄंश्चार्चयित्वा—वी. मि. आ., गृ. र.

6 'प्राणात्यये तथा श्राद्धे प्रोक्षितम्' इत्येकः प्रकारः । 'द्विजकाम्यया देवान् पितॄन् समभ्यर्च्य' इत्यपरः । तत्र यथैव प्राणात्यये क्रतौ च मरणप्रत्यवायभीत्या नियोगतो भक्ष्यं तथा श्राद्धे नियुक्तेनापीत्यर्थः ।—विश्वरूपः; 'द्विजकाम्यया' इति, ब्राह्मणभोजनार्थं यत्साधितं तदिति मिताक्षराकारः । अन्ये तु ब्राह्मणा यं प्रति कामयन्ते त्वया मांसं भक्षणीयमिति स भक्षयेदित्याहुः ॥—वी. मि. आ., ५२८.

7 वी. मि. आ., ५२८–५२९; गृ. र., ३८२, omits देवल; and reads continuously.

'शेषभोजी' देवपित्राद्यर्चनशेषस्य भोक्ता। 'औषधार्थम्' औषधप्रयोजनेन। 'अशक्तौ' व्याधिनाभिभवे सति। तेन यत्र मांसभक्षणं विना रोगापनयो न भवतीति वैद्यकशास्त्रविदां निश्चयस्तत्र भक्ष्यमित्यर्थः। 'नियोगः' श्राद्धे निमन्त्रणम्। 'यज्ञकारणात्' यज्ञसिध्यर्थम्। 'भक्षयन् न लिप्यत' इत्यन्वयः॥

[1]यमः

भक्षयेत्प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्॥

'सकृद्' एकवारम्। अस्य च 'ब्राह्मणकाम्यया' इत्यनेन संबन्धः। 'नियमे' मांसवर्जनव्रते कृते सति। एतच्च प्रोक्षितातिरिक्तैः सर्वैरेव संबध्यते। प्रोक्षिते तु न संबध्यते, प्रत्यक्षश्रुतिविरोधात्[2]। [3]एवमन्यस्मिन्नपि मांसभक्षणाभ्यनुज्ञाने स्मृत्यन्तरोक्ते बलवत्प्रमाणविषयं[4] [5]विहाय नियमे तु वर्जयेदिति संबन्धनीयम्[6]॥

[7]बृहस्पतिः [आचा., ८४; ८१]

रोगी नियुक्तो विधिना हुतं विप्रवृतस्तथा।
मांसमद्याच्चतुर्धैषा परिसंख्या प्रकीर्तिता॥

1 वी. मि. आ., ५२९; गृ. र., ३८२.
2 विशेषात् for विरोधात्—उ.
3 एवमन्यत्रापि बलवत्प्रमाणविषयं—वी. मि. आ.
4 याज्ञवल्क्याद्युक्तबलवत्प्रमाणविषयं—गृ. र.
5 प्राणात्ययादिकं विहाय संबन्धनीयम्—वी. मि. आ.
6 Quoted by वी. मि. आ., ५२९.
7 वी. मि. आ., ५२९; गृ. र., ३८२-३८३.

अतोऽन्यथा तु योऽश्नीयाद्विधिं हित्वा पिशाचवत् ।
यावन्ति पशुरोमाणि तावत्प्राप्नोति मारणम् ॥

'रोगी' चात्र मांसेनैव यस्य रोगापनयनं भवति । 'विधिना' शास्त्रोक्तप्रकारेण । 'हुतं' हुतावशिष्टम् । 'विप्रवृतः' विप्रेण प्रार्थितः । '[1]परिसंख्या' अत्र परिगणनम् । [2]स्मृत्यन्तरे 'देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दोषभाक्' इत्यादिप्रकारान्तरेणापि मांसभक्षणाभ्यनुज्ञानात् ॥

[3]हारीतः

वृथा [4]मांसं न भक्ष्यं तु प्राश्य कृच्छ्रं चरेद्बुधः ।
काम्यया ब्राह्मणानां तु यथाकामं [5]समश्नुयात् ॥

[6]मनुविष्णू

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कथंचन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥

यत् 'प्रोक्षितं भक्षयेन्मांसम्[7]' इति पूर्वमुक्तं, तस्यैव विषयमाह—'मन्त्रैस्तु संस्कृतान्' इति । 'शाश्वतः' [8]नित्यवेदप्रतिपादितत्वात् । 'आस्थितः' आश्रितः ॥

1 चतुर्धा परिसंख्या चतुष्प्रकारो नियम इति हेमाद्रिः । कल्पतरौ तु परिसंख्या परिगणनम्, न इतरवर्जनम् । स्मृत्यन्तरे 'देवान् पितॄन् समभ्यर्च्य' इति प्रकारान्तरेणापि मांसभक्षणाभ्यनुज्ञानादित्युक्तम् ।—वी. मि. आ., ५२९.

2 याज्ञवल्क्यस्मृतिः, १, १७९ ; न दुष्यति for न दोषभाक्—उ, गृ. र.

3 वी. मि. आ., ५२९—५३० ; गृ. र., ३८३.

4 मांसमभक्ष्यं तु—वी. मि. आ. ; मांसस्य भोक्ता तु—गृ. र.

5 समश्नुते—गृ. र.

6 वी. मि. आ., ५३० ; गृ. र., ३८३ ; मनुः, ५, ३६ ; विष्णुः, ५१, ५९.

7 मनुः, ५, २७.

8 नित्यमेव for नित्यवेद—उ.

[1]यमः

[2]यजुषा संस्कृतं मांसं भक्षयेत्तु यथाविधि ।
न भक्षयेद्वृथा मांसं पृष्ठमांसं विवर्जयेत् ॥

'पृष्ठमांसं' पृष्ठसंबन्धिमांसम् ॥

[3]पैठीनसिः

श्राद्धे तु मांसमश्नीयात्तथातिथिनिमित्तके ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥

'श्राद्धे' निमन्त्रित इति शेषः । 'अतिथिनिमित्तके' अतिथ्यर्थं यदुपात्तं तदतिथिना भक्ष्यमित्यर्थः[4] ॥

महाभारते

हविर्यत्प्रोक्षितं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि ।
वेदोक्तेन [5]प्रकारेण पितॄणां प्रक्रियासु च ॥
अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत् ।

तथा

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते ॥

तथा

पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति ॥

1 वी. मि. आ., ५३० ; गृ. र., ३८३.

2 'यजुषा संस्कृतं मांसं पृष्ठमांसं विवर्जयेत्' इति पाठेन पादद्वयं लुप्तं **गृहस्थरत्नाकरे.**

3 वी. मि. आ., ५३० ; गृ. र., ३८३–३८४.

4 यो नाश्नाति तं प्रत्युत्तरार्धेन निन्दामाह—'यावन्ति' इति । 'तावद्' वर्षाणीत्यर्थः ।—वी. मि. आ.

5 प्रमाणेन—ब, द.

[1]मनुः—[५, ३५]

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति संभवानेकविंशतिम्[2] ॥

[3]यमः

आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत्[4] ।
यावन्ति पशुरोमाणि तावन्नरकमश्नुते[5] ॥

[6]हारीतशातातपौ

[7]नियुक्तस्तु यथा श्राद्धे यस्तु मांसं न भक्षयेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति[8] ॥
क्षत्रियैस्तु मृगव्येन विधिना समुपार्जितम् ।
श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतं च यत् ॥
विषच्छद्महतं चैव व्याधतिर्यग्घतं च यत् ।
न प्रशंसन्ति वै श्राद्धे यच्च मन्त्रविवर्जितम् ॥

'मृगव्येन' आखेटकेन । 'विधिना' विषच्छद्मादिरहितशौर्येण । 'तिर्यञ्चो'ऽत्र सिंहादेरन्ये पशवः ॥

[9]गौतमः—[१७, ३६]

व्यालहतादृष्टदोषवाक्प्रशस्तान्यभ्युक्ष्योपयुञ्जीत ॥

1 वी. मि. श्रा., ५३० ; गृ. र., ३८४.

2 संभवान् जन्मानि—मेधातिथिः ; श्राद्धे मधुपर्के च यथाशास्त्रं नियुक्तः सन् यो मनुष्यो मांसं न खादति स मृतः सन्नेकविंशतिजन्मानि पशुर्भवति । "यथाविधि नियुक्तस्तु" (५, २७) इत्येतन्नियमातिक्रमफलमिदम्—कुल्लूकः.

3 गृ. र., ३८४.

4 दैवे मांसं समुत्सृजेत्—ज, ब, द.

5 तावन्निरयमश्नुते—गृ. र.

6 वी. मि. श्रा., ५३०–५३१ ; गृ. र., ३८४.

7 Verse omitted by गृ. र.

8 तावन्निरयमृच्छति—ब, ज, ना, द.

9 वी. मि. श्रा., ५३१ ; गृ. र., ३८४.

'व्यालाः' सिंहव्याघ्रादयः स्मृत्यन्तरोक्ताः। 'अदृष्टदोषम्' अनिश्चितदोषम्। 'वाक्प्रशस्तम्' अत्र [1]शुच्यशुचि वेति यत्संदिग्धं तद्यदान्येन वाचा शोभनमिति प्रशस्तं भवति तदाभ्युक्ष्योपयुञ्जीतेत्यर्थः ॥

[2]आपस्तम्बः—[१, १६, १६]

हिंसार्थेनासिना छिन्नं मांसमभोज्यम् ॥

'हिंसार्थेन' प्राणिवधार्थमेव यन्नियतं[3] तेन यत् 'छिन्नं' पाकाद्यर्थं कृतम्। 'असि'ग्रहणमत्रोपलक्षणम्[4] ॥

[5]मनुः, विष्णुश्च द्वितीये

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
जग्ध्वा ह्यविधिना मांसं प्रेत्य[6] तैरद्यतेऽवशः[7] ॥
न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः।
यादृशं भवति प्रेत्य वृथामांसानि खादतः ॥
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्।

1 कृताशौचमिति यत्संदिग्धं—उ.

2 वी. मि. आ., ५३१; गृ. र., ३८४–३८५.

3 यन्निश्चितं—ब, ज, द.

4 असिग्रहणं क्षुरादेरप्युपलक्षणम्। यन्मांसं पाककाले हिंसार्थेनासिना छिन्नं तदभोज्यम्—**हरदत्तः**.

5 मनुः—इति वी. मि. आ., ५३१–५३२; गृ. र., ३८५; **मनुः**, ५, ३३–३४; ५५; ५२; विष्णुः, ५१, ६२; ७८; ७५.

6 प्रेतः—**मेधातिथिः**.

7 पूर्वोक्ताद्देवाद्यर्चनशिष्टात् ब्राह्मणकामनादिनिमित्तात् अन्तरं यद्भक्षणं सः 'अविधिः', तेन नाश्नीयात् 'मांसम्'। 'आपदि' प्राणात्यये देवाद्यर्चनमपि नापेक्ष्यम्। विध्यनुष्ठानपरो 'विधिज्ञ' उच्यते। 'जग्ध्वा' अशास्त्रीयेण निमित्तेन 'प्रेतो' मृतः, 'तैः' प्राणिभिः 'अवशोऽवद्यते'। येन विषयेण यो येषां मांसमश्नाति तस्य विविधा पीडा भवति। एतावान्मात्रपरमेतत्। अन्यथा प्रायेण छागादिमांसमश्नन्ति लोकाः, न च छागादयो मांसाशिनः। अथवा तत्कृतेन पापेन क्रव्याद्भिरप्यद्यमानस्तैरद्यत इत्युच्यते ॥—**मेधातिथिः**.

एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति[1] ।
अनभ्यर्च्य पितॄन् देवांश्च ततोऽन्योस्त्यपुण्यकृत् ॥

[2]**यमः**

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
यत्र तत्राभिजायेत स भवेद्व्याधिपीडितः ॥
भुक्त्वा तु मोहान्मांसानि नरः पुष्ट्यर्थमात्मनः ।
अकृत्वेहाऽऽत्मनः शुद्धिं तिर्यग्योनिषु पच्यते[3] ॥
'आत्मनः शुद्धिं' प्रायश्चित्तम् ॥

[4]**हारीतः**

मातृकात्पैतृकाच्चैव किल्बिषाज्जन्तुसंभवः ।
यो यस्य भक्षयेन्मांसं स तस्याश्नाति किल्बिषम् ॥
भक्षयित्वा तु यो मांसमद्भिः शौचं समाचरेत् ।
हसन्ति देवतास्तस्य ह्यशुचेः शुचिदर्शिनः ॥

'किल्बिषम्' अत्र शुक्रशोणिते । 'तस्य किल्बिषं' तन्मांसं तन्मयत्वात् किल्बिषमुच्यते ॥

[5]**मनुः**—[५, ५१]

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥[6]

1 इतः परं 'अनभ्यर्च्य' इत्यादि श्लोकार्धं, 'यमः' इति नाम, 'स्वमांसं परमांसेन' इत्यादि श्लोकार्धं च लुप्तानि । 'यत्र तत्राभिजायेत' इत्यादि च पठ्यते—ना, गृ. र., ३८५.

2 वी. मि. आ., ५३२ ; 'यमः' इति नास्ति—ब, द.

3 तिर्यग्योनौ च जायते—ना ; तिर्यग्योनौ प्रजायते—वी. मि. आ.

4 वी. मि. आ., ५३२ ; गृ. र., ३८५–३८६.

5 गृ. र., ३८६.

6 अन्येन हन्यमानं स्वप्रयोजनतो यद्यन्योऽनुमोदते साध्वयं हन्ता करोतीति 'अनुमन्ता' । 'विशसिता' हतस्याङ्गविभागकारः । 'उपहर्ता' परिवेषकः ।—**मेधातिथिः**.

[1]देवलः

[2]आत्मार्थं स्वादुकामित्वाज्जीवजातं न घातयेत्[3] ।
कष्टं हि व्यालधर्मित्वाज्जीवमांसोपजीवनम्[4] ॥

'कष्टं' पापहेतुत्वात् ॥

[5]यमः

यस्तु खादति मांसानि प्राणिनां जीवितैषिणाम् ।
हतानां च मृतानां च यथा हन्ता तथैव सः ॥
अनुमन्ता विशस्ता च निहन्ता क्रयविक्रयी ।
घातकाः सर्व एवैते संस्कर्ता षष्ठ उच्यते ॥
निर्देशेनानुमन्ता[6] च विशस्ता शासनात्तथा ।
हननेन तथा हन्ता धनेन क्रयिकस्तथा[7] ॥
विक्रयी[8] च धनादानात् संस्कर्ता तत्प्रवर्तनात् ।
धनेन चोपभोगेन[9] वधबन्धेन चाप्यथ ॥
त्रिविधस्तु वधो ज्ञेयो भोक्ता तत्रातिरिच्यते ।
घातकाः षट् समाख्याता भोक्ता तत्र तु सप्तमः ॥
षण्णां तेषां सकाशात्तु ह्युपभोक्तातिरिच्यते[10] ।
क्रेतारं भजते[11] पादः पादो भोक्तारमृच्छति ॥

1 वी. मि. आ., ५३२ ; गृ. र., ३८६.
2 आत्मार्थमात्मकाम्यत्वात्—ब ; आत्मार्थं स्वादुकाम्यत्वात्—द.
3 जीवघातं न घातयेत्—उ, गृ. र. ; जीवघातं न कारयेत्—वी. मि. आ.
4 जीवमांसोपयोजनम्—उ.
5 वी. मि. आ., ५३२–५३३ ; गृ. र., ३८६–३८७.
6 निर्देशादनुमन्ता—गृ. र.
7 क्रायकस्तथा—वी. मि. आ.
8 विक्रीय—वी. मि. आ.
9 धनेन चोपभोक्ता च—ना, ज.
10 भोक्ता तत्रातिरिच्यते—गृ. र.
11 व्रजते—गृ. र.

घातकं भजते[1] पादः पादमृच्छन्त्यतस्त्रयः[2] ।
यदि तत्खादको न स्यात् घातको न तथा भवेत् ॥
खादको घातकः क्रेता त्रयस्तुल्या न संशयः ।
न भूमेर्जायते मांसं न वृक्षात्तु प्ररोहति[3] ॥
घोरं प्राणिवधं कृत्वा तस्मान्मांसं विवर्जयेत् ।
यस्तु खादति मांसानि ब्राह्मणो वेदवित्तमः[4] ॥
स पच्यते निरालम्बे नरके तेन कर्मणा ।

[5]**मनुः**—[५, ५०]

यस्तु भक्षयते मांसं विधिं हित्वा पिशाचवत् ।
स लोकेऽप्रियतां याति व्याधिभिश्चैव पीड्यते ॥

[6]**यमः**

[7]भक्ष्याण्यपि च मांसानि यस्तु तानि न भक्षयेत् ।
अभक्षणेन मांसानां साक्षाद्धर्मश्च तुष्यति ॥
[8]सर्वेषामेव मांसानां महान् दोषस्तु भक्षणे ।
अभक्षणे तु धर्मः स्याद्विशिष्ट इति नः स्मृतम् ॥

[9]**मनुः**—[५, ५३–५४]

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।

1 व्रजते—गृ. र.
2 पादमिच्छन्त्यतस्त्रयः—उ, गृ. र; पादं पादमतस्त्रयः—गृ. र.
3 न च वृक्षात्प्ररोहति—वी. मि. आ., गृ. र.
4 वेदवित्तथा—गृ. र.
5 वी. मि. आ., ५३३.
6 न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥—इति मुद्रित**मनुस्मृति**पाठः.
7 अभक्षाण्यपि—उ.
8 वी. मि. आ., ५३३.
9 वी. मि. आ., ५३३–५३४; गृ. र., ३८७–३८८, attributes these verses to **यम**.

मांसानि तु न खादेद्यस्तयोः पुण्यफलं समम्[1] ॥
[2]फलमूलाशनैर्मेध्यैर्मुन्यन्नानां च भोजनैः ।
न तत्फलमवाप्नोति[3] यन्मांसपरिवर्जनात् ॥

[4]याज्ञवल्क्यः—[१, १८१]

सर्वान्कामानवाप्नोति हयमेधफलं तथा ।
गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात् ॥

[5]नन्दिपुराणे

क्लेदि दुर्गन्धि विकृतं जुगुप्सास्पदमेव च ।
मांसं न भक्षयेद्विद्वान् न स्वादु परमं हितम्[6] ॥
यश्च सम्यक् स्वधर्मस्थो गुरुशुश्रूषणे रतः ।
गच्छेल्लोकं शुभं मर्त्यो दिव्यं देवनिषेवितम्[7] ॥
तमेव दिवसं मांसाद्विरतो लोकमाप्नुयात् ।
यो मासं वर्जयेन्मांसं पुरुषः शुभमानसः ॥
स याति स्वर्गमतुलं दिव्यभोगसमृद्धिमान्[8] ।
यत्तपो [9]घोरसंकल्पं पुष्करेषु शतं समाः ॥
तप्त्वा फलमवाप्नोति तत्फलं मांसवर्जनात् ।
चन्द्रसूर्यग्रहे यस्तु दद्यात्पृथ्वीं चराचराम् ॥

1 पुण्यं समं स्मृतम्—वी. मि. आ.

2 'मेध्यैः' देवार्हैः। 'मुन्यन्नानि' नीवाराद्यन्नान्यकृष्टपच्यजनितानि।—मेधातिथिः.

3 न तस्य फलमाप्नोति—उ.

4 वी. मि. आ., ५३४; गृ. र., ३८८.

5 वी. मि. आ., ५३४—५३५; गृ. र., ३८८–३८९.

6 न च स्वादुरसं च यत्— वी. मि. आ.; इतः परं "भक्ष्याण्यपि हि मांसानि यस्तु तानि न भक्षयेत्। तथा" इत्यधिकमस्ति—ब, द, ना.

7 नित्यं देवनिवेदितम्—वी. मि. आ.

8 दिव्यलोकसमृद्धिमान्—ब, द, गृ. र.; दिव्यलोके समृद्धिमान्—वी. मि. आ.

9 घोरमतुलं—वी. मि. आ.

गयायां तु तपो घोरं [1]यश्चाब्दशतमाचरेत् ।
[2]एवंविधो यः परमांल्लोकान् संप्राप्नुयान्नरः ॥
लोकानिमान् समाप्नोति सर्वदा मांसवर्जनात् ।
यश्चोपदेशं कुरुते परस्य तु महात्मनः ॥
मांसस्य वर्जनफलं सोऽमांसादफलं लभेत् ।

[3]<u>महाभारते</u>

मासि मास्यश्वमेधेन यो यजेत शतं समाः ।
न खादति च यो मांसं सममेतद्युधिष्ठिर ॥

[4]<u>तथा</u>

यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम् ।
यश्चैकं वर्जयेन्मांसं समं वा स्यान्न वा समम्[5] ॥
कौमुदं तु विशेषेण शुक्लपक्षं नराधिप ।
वर्जयेत्सर्वमांसानि धर्मो ह्यत्र[6] विधीयते ॥
चतुरो वार्षिकान्मासान् यो मांसमपि वर्जयेत्[7] ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ॥
अथवा मासमप्येकं सर्वमांसान्यभक्षयन्[8] ।
अतीत्य सर्वदुःखानि सुखं जीवेन्निरामयः ॥
ये वर्जयन्ति मांसानि मासं पक्षमथापि वा[9] ।

1 यश्चाष्टशतमाचरेत्—वी. मि. आ.
2 एवं विद्वान् स परमान्—वी. मि. आ.; एवं विधाय परमान्—गृ. र.
3 वी. मि. आ., ५३५; गृ. र., ३८९.
4 वी. मि. आ., ५३५–५३६; गृ. र., ३८९–३९०.
5 'एकं' वर्षमिति शेषः—वी. मि. आ.; 'मांसं वर्जयेत्' मासमिति शेषः—गृ. र.
6 ह्येष—वी. मि. आ.
7 मांसं परिवर्जयेत्—ब, ज, ना, द, वी. मि. आ., गृ. र.
8 सर्वमांसानि वर्जयेत्—वी. मि. आ.
9 मासशः पक्षशोऽपि वा—वी. मि. आ., गृ. र.

तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥
मासं तु कौमुदं पक्षं वर्जितं सर्वराजभिः ।
सर्वभूतात्मभूतैस्तैर्विज्ञातार्थपरापरैः[1] ॥
[2]नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषा चानरण्येन दिलीपरघुसूनुभिः ॥
कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृपेण विष्वक्सेनेन तथैव शतबिन्दुना ॥
युवनाश्वेन च तथा शिबिनौशीनरेण च ।
मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण वा विभो[3] ॥
सत्यं वदत मासत्यं सत्यं धर्मः सनातनः ।
हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥
श्येनचित्रेण राजन्य[4] सोमकेन वृकेण च ।
देवत्रा रन्तिदेवेन वसुना सञ्जयेन च ॥
दुष्यन्तेन करूषेण रामालर्कनलैस्तथा ।
विरूपाश्वेन निमिना जनकेन च धीमता ॥
नीलेन पृथुना चैव वीरसेनेन चैव हि ।
इक्ष्वाकुणा शंभुना च श्वेतेन सगरेण च ॥
[5]अजेन धुन्धुना चैव तथैव च सुबाहुना ।
हर्यश्वेन च राजेन्द्र कृपेण भरतेन च ॥
[6]एतैश्चान्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मांसं ततस्ते स्वर्गमाप्नुवन् ॥
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रिया वृताः ।

1 सर्वभूतात्मभूतैश्च विज्ञातान्यपरापरैः—वी. मि. आ.

2 'नाभागेन' इत्यादिना राज्ञः प्रकृत्य—'एतैश्चान्यैश्च राजेन्द्रैः' etc.—गृ. र.

3 हरिश्चन्द्रेण वै विभो । अजेन धुन्धुना चैव etc.—वी. मि. आ.

4 राजेन्द्र—ब, द, ज.

5 वी. मि. आ., begins here after a gap of 8 lines.

6 गृ. र., begins here after omitting 14 lines in which the names of the kings are mentioned.

उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्वितैः[1] ॥
तदेवमुत्तमं धर्ममहिंसालक्षणं शुभम् ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥
[2]मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥

[3]बृहस्पतिः—[आचा., ८९; ८२]

रोगार्तोऽभ्यर्थितो वापि यो मांसं नात्त्यलोलुपः ।
फलं प्राप्नोत्ययत्नेन सोऽश्वमेधशतस्य तु ॥
मद्यं मांसं मैथुनं च भूतानां ललनं स्मृतम् ।
तदेव विधिना कुर्वन् स्वर्गमाप्नोति[4] मानवः ॥

[5]मनुः—[५, ५६]

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला[6] ॥

'निवृत्तिः' वर्जनसंकल्पः । 'महाफला' स्वर्गादिफला, भक्षणजन्यतृप्त्यपेक्षया स्वर्गादेर्महाफलत्वात् ॥

## अथ पशुहिंसाविधिप्रतिषेधौ

[7]तत्र मनुः—[५, २२–२३]

यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।

1 समन्विताः—ब, ज, द, गृ. र.
2 मधु मांसं च ये नित्यं सर्वे ते मुनयः स्मृताः—उ, वी. मि. आ., गृ. र.
3 वी. मि. आ., ५३६–५३७ ; गृ. र., ३८८.
4 स्वर्गं प्राप्नोति—ब, ना, द.
5 वी. मि. आ., ५३७ ; गृ. र., ३९०.
6 'न मांसभक्षणे दोषो' 'क्रीत्वा स्वयं वाप्युत्पाद्य' (मनुः, ५, ३२) इति तथायमपि श्लोकः । एवं 'मद्ये' क्षत्रियादीनाम् । 'मैथुने' तु सर्ववर्णानां दिवोदक्यापर्वकालादन्यत्र ।—मेधातिथिः.
7 वी. मि. आ ; ५३७.

भृत्यानां चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥
बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम् ।
पुराणेष्वपि यज्ञेषु[1] ब्रह्मक्षात्रसवेषु च ॥

'यज्ञार्थम्' इति दृष्टान्तार्थम् । 'प्रशस्ताः' भक्ष्यत्वेन प्रसिद्धाः । 'भृत्यानां वृत्त्यर्थं' प्रकारान्तरेण वर्तनासंभवे भृत्यभरणार्थम् । 'पुराणाः' ऋषियज्ञाः षड्विंशद्वत्सरादयः । तत्र हि मृगवधः श्रूयते—'संस्थितेऽहनि गृहपतिर्मृगयां याति । स तत्र यान् यान् मृगान् हन्ति तेषां तरसाः पुरोडाशा भवन्ति' इति । 'संस्थिते' समाप्ते । 'तरसाः' मांसमयाः ॥

[2]मनुर्विष्णुश्च—[५, ३९–४२, ४४]

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥[3]
ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः [4]पराः[5] ॥
मधुपर्के च सोमे[6] च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः[7] ॥

1 पुराणेष्वृषियज्ञेषु—मेधातिथिः.

2 'मनुः' इति वी. मि. आ., ५३७–५३८ ; गृ. र., ३९१ ; मनुः, ५, ३९–४२ ; ४४ ; विष्णुः, ५१, ६१ ; ६३—६५ ; ६७.

3 यो वधो यज्ञाङ्गभूतस्तन्निवृत्त्यर्थमेव 'स्वयंभुवा' प्रजापतिना 'पशवः' 'सृष्टाः' । 'स्वयमेव' इत्यर्थवादः । 'अस्य' जगतो विश्वस्य । 'यज्ञो' ज्योतिष्टोमादिः । 'भूत्यै' भूतिर्विभवः पुष्टिः स्फीतिः । तस्मात्तत्र यो 'वधः' सो 'अवधो' ज्ञेयः ।—मेधातिथिः.

4 पुरा—वी. मि. आ. ; पुनः—मेधातिथिः ; उत्सृती: पुनः—कुल्लूकः.

5 यज्ञे 'निधनं' गता 'उच्छ्रितीः' उत्कर्षं, जातितो देवगन्धर्वयोनित्वं द्वीपान्तरेषूत्तरकुरुप्रभृतिषु वर्षान्तरे वा जन्म 'प्राप्नुवन्ति' ।—मेधातिथिः.

6 यज्ञे for सोमे—वी. मि. आ., मेधातिथिकुल्लूकौ, मु. विष्णुः.

7 नान्यत्रेति कथंचन—मु. विष्णुः.

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः ।
आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ[1] ॥

[2]वसिष्ठः—[४, ५; ८]

पितृदेवतातिथिपूजायामप्येव पशुं हिंस्यादिति मानवम् । अथापि ब्राह्मणाय राजन्याय चाभ्यागताय महोक्षं महाजं वा पचेदेवमस्मा आतिथ्यं कुर्वन्ति ॥

'पितृदैवतम्' अष्टकाकर्म ॥

[3]यमपैठीनसी

नात्मार्थं पाचयेदन्नं नात्मार्थं घातयेत्पशून् ।
देवार्थं ब्राह्मणार्थं वा पचमानो न लिप्यते ॥

[4]मनुः, विष्णुश्च तृतीये

गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ।
नावेदविहितां हिंसामापद्यपि समाचरेत् ॥

1 वेदविहितो यः प्राणिवधः सोऽस्मिन् जगति 'चराचरे' स्थावरजङ्गमे 'नित्यो' अनादिः । यस्तु तन्त्रादिः सोऽन्वयव्यतिरेकभ्रान्त्या इदानींतनः । अतो वैदिकीं हिंसामहिंसामेव विद्यात् । अमुत्र प्रत्यवायाभावात् । 'वेदाद्धर्मो हि निर्बभौ' धर्मस्याधर्मस्य च यत्कथनं तद्वेदादेव ।—मेधातिथिः.

2 वी. मि. आ., ५३९.

3 वी. मि. आ., ५३९.

4 'मनुः' इति वी. मि. आ., ५३८–५३९; गृ. र., ३९१–३९२; मनुः, ५, ४३; ३७–३८; ४५; विष्णुः, ५१, ६६; ६०; ६८; 'सङ्गे' प्रस्तावात्पशुवधप्रसङ्गे 'घृतपशुं कुर्यात्' घृतपशुमेव कुर्यात् । पशुना यष्टव्ये तत्स्थाने घृतेन यजेत देवताः । तद्धि सामान्येन यागद्रव्यम् । अथवा 'पिष्टपशुं' पिष्टमयपशुप्रतिकृतिं कृत्वा देवताभ्य उपहरेत् । पिष्टेन वा पुरोडाशादि कृत्वा ।—मेधातिथिः.

[1]कुर्याद्घृतपशुं संगे कुर्यात् पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कथंचन ॥
यावन्ति पशुरोमाणि तावत्कृत्वेह मारणम् ।
वृथा पशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥
योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित्सुखमश्नुते[2] ॥

'गुरौ वसन्' ब्रह्मचारी । 'गृहे वसन्' गृहस्थः । 'अरण्ये वसन्' वानप्रस्थः । 'अवेदविहिताम्' अविहिताम् । 'आपदि' क्षुधादिक्लेशे । प्राणात्ययसंभावनायां तु विहितत्वात् कर्तव्यैव हिंसा । 'घृतपशुं' पशुकार्ये घृतम् । 'संगे' लोकाचारप्राप्तसीतायज्ञादौ पशुवधसंप्रयोगे, तत्र घृतं पिष्टं वा पशुं कुर्यादित्यर्थः[3] ॥

[4]याज्ञवल्क्यः—[१, १८०]

वसेत्स नरके घोरे दिनानि पशुरोमभिः ।
संमितानि दुराचारो यो हन्त्यविधिना पशून्[5] ॥

[6]मनुः—[५, ४६-४७]

यो बन्धनवधक्लेशं प्राणिनां न चिकीर्षति ।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥

1 श्लोकोऽयं मुद्रितविष्णुस्मृतिषु नोपलभ्यते.

2 सुखमेधते—ब, ना, द.

3 Quoted by वी. मि. आ., ५३८.

4 वी. मि. आ., ५३९.

5 प्राणात्ययादेरन्यत्र च लोभादिना यो हन्त्यविधिना पशून् वसेत् स नरके घोरे इति योज्यम्—विश्वरूपः.

6 वी. मि. आ., ५३९; गृ. र., ३९२.

यद्ध्यायति यत्कुरुते रतिं बध्नाति यत्र च ।
[1]तत्तदाप्नोत्ययत्नेन यो हिनस्ति न किंचन ॥

[2]हारीतः

यथात्मनस्तथान्येषां यो विद्वान् स्वस्ति चेच्छति ।
स सर्वलोकप्रवरे ब्रह्मलोके महीयते ॥

## अथ मद्यानि

[3]तत्र यमः

मांसं [4]समलमन्नानां मांसानां च मलं सुरा ।
मलं हि सर्वपापानां[5] सुरा धर्मेषु कथ्यते ॥
तस्माद्द्विजैर्न पेयैषा नैषा ग्राह्या कथंचन ।

'समलं' मलम् । 'धर्मेषु' धर्मशास्त्रेषु ॥

[6]मनुः, हारीतश्चतुर्थवर्जम्, यमश्च प्रथमचतुर्थयोः

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥
गौडी पैष्टी च माध्वी च[7] विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥
यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् ।

1 तदवाप्नोत्ययत्नेन—मेधातिथिकुल्लूकौ; तत्तदाप्नोति यत्नेन—गृ. र.

2 वी. मि. आ., ५३९–५४०; गृ. र., ३९२.

3 वी. मि. आ., ५४८; गृ. र., ३९३.

4 शमलमन्नानां—वी. मि. आ.

5 सर्वभूतानां—गृ. र.

6 मनुः,—इति वी. मि. आ., ५४८–५४९; गृ. र., ३९३–३९४; मनुः, ११, ९३–९७.

7 गौडी माध्वी च पैष्टी च—उ, वी. मि. आ., गृ. र.

[1]तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥
अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत्।
अकार्यमन्यत् कुर्याद्वा ब्राह्मणो मदमोहितः ॥
यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति ॥

'गौडी' गुडकार्यं मद्यम्। 'पैष्टी' पिष्टकार्यम्। 'माध्वी' मधुकार्यम्। 'सुरा' मुख्या पैष्टी। 'यथैवैका' इति, यथा एका पैष्टी त्रिभिरपि द्विजातिभिर्न पातव्या तथा 'द्विजोत्तमैः' ब्राह्मणैः 'सर्वा एव न पातव्या'। हारीते तु द्विजातिभिरिति पाठः। तत्र च द्विजातिशब्दो ब्राह्मणपरः। 'तद्ब्राह्मणेन नात्तव्यम्' इति वाक्यशेषात्।

कामादपि हि राजन्यो वैश्यो वा सुसमाहितः।
पिबेतां मधु तावत्तु न दोषं कंचिदृच्छतः ॥

इति यमवचनात्[2]। 'यक्षरक्ष' इति, यस्माद्यक्षरक्षःपिशाचानामेतदन्नं यन्मद्यं मांसं सुरासवं तस्माद्ब्राह्मणेन न भोक्तव्यम् ॥

[3]यमः

मद्यं पीत्वा तु यो विप्रो ब्रह्म व्याहरते क्वचित्।
घृताहुतिसहस्रेण न स किंचिदुपाश्नुते[4] ॥

[5]तथा

ब्राह्मण्यमीहते यस्तु [6]यजमानः पुनः पुनः।

1 ब्राह्मणेन च नात्तव्यं—गृ. र.
2 Quoted by गृ. र., ३९४.
3 वी. मि. आ., ५४९; गृ. र., ३९५.
4 किञ्चिदुपासते—उ.
5 वी. मि. आ., ५४९; गृ. र., ३९५.
6 जायमानः—गृ. र.

न तेन मद्यं पातव्यं दातव्यं न च कस्यचित् ॥

[1]उशना

मद्यमपेयमदेयमनिर्ग्राह्यम् ॥

'अनिर्ग्राह्यम्' अस्वीकार्यम् ॥

'[2]वर्जयेद्' इत्यनुवृत्तौ गौतमः—[२, २६]

मद्यं नित्यं ब्राह्मणः ॥

[3]बृहस्पतिः—[आचा., ८५]

सौत्रामण्यां तथा मद्यं श्रुतौ भक्ष्यमुदाहृतम् ॥

[4]विष्णुः—[२२, ८२-८४]

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न स्प्रष्टव्या[5] द्विजातिभिः ॥
माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसे ।
मृद्वीकारसमाध्वीके मैरेयं नालिकेरजम् ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः[6] ॥

'द्विजातिभिः' ब्राह्मणैः । 'माधूकं' मधुपुष्पभवम् । 'ऐक्षवम्' इक्षुरसभवम् । 'टाङ्कं' टङ्कः कपित्थविशेषः, तद्भवम् । 'कौलं' कोलिफलजम् । 'खार्जूरं' खर्जूरफलजम् ।

1 वी. मि. आ., ५४९; गृ. र. ३९४.
2 गृ. र., ३९५; वी. मि. आ., ५४९.
3 वी. मि. आ., ५४९; गृ. र., ३९५.
4 वी. मि. आ., ५४९—५५०; गृ. र., ३९४.
5 पातव्या—मु. विष्णुः;
6 स्पृष्ट्वा चैतानि दुष्यतः—वी. मि. आ.; स्पृष्ट्वा चेतो न दुष्यतः—गृ. र.

'पानसं' कण्टकिफलजम्। 'मृद्वीकारसं' द्राक्षाद्रवजम्। 'मैरेयं' धातुपुष्पं गुडधान्याम्बुसहितमिति शब्दार्णवे वाचस्पतिः[1] ॥

[2]भक्ष्याभक्ष्यप्रकरणे देवलः

अयातयामं रसवत् प्रत्यग्रं सुपरिश्रुतम्।
द्रव्यं द्रव्येषु धर्मज्ञैरेतन्मेध्यतमं स्मृतम् ॥
सुरामरिष्टं मैरेयं मधु माध्वीकमासवम्।
धान्याम्बु शुक्तं वर्ज्ये[3] तु न पेयं ब्राह्मणैर्विदुः ॥

'अयातयामम्' अपरिभुक्तम्। 'रसवत्' अगलितरसम्। 'परिश्रुतं' वस्त्रपूतम्। इत्थंभूतमपरिश्रुतमभोज्यम्। 'अरिष्टं' मद्याकारादिकद्रव्यं खादिरादिभिर्विनिर्मितम्। 'आसवं' संधानकम्। 'धान्याम्बु शुक्तं' धान्याम्बु शुक्तं जातम् ॥

## अथ भोजनोत्तरकर्म

[4]तत्र दक्षः—[२, ६८–६९]

भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्।
इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ॥
अष्टमे लोकयात्रा तु बहिःसंध्या ततः पुनः ॥

'सुखमास्थाय' अत्र परिणामानुकूलां सुखावस्थितिं कुर्यात् ॥

1 "मैरेयं धातकीपुष्पगुडधानाम्लसंभवम्" माधवोक्ते मद्यविशेषे—See वाचस्पत्य of तारानाथतर्कवाचस्पति p. ४७६५. Also see शब्दकल्पद्रुम, p. ७८६.

2 गृ. र., ३९५.

3 शुक्लवर्णे—गृ. र; शुष्कं वर्ज्ये —उ.

4 वी. मि. आ., ५५० ; गृ. र. ३९६.

[1]याज्ञवल्क्यः—[१, ११४]

उपास्य पश्चिमां संध्यां हुत्वाग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ[2] संविशेत्[3] ॥

'तान्' अग्नीन् । 'उपास्य' आराध्य । 'संविशेत्' शयीत ॥

[4]दक्षः—[२, ७०–७१ ; ७४]

होमो भोजनकालश्च यच्चान्यद्गृहकृत्यकम् ।
कृत्वा चैव ततः पश्चात्स्वाध्यायं किंचिदाचरेत् ॥
प्रदोषपश्चिमौ यामौ वेदाभ्यासरतिर्नयेत्[5] ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥
अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नेव च लीयते ।
तस्मात्सर्वप्रयत्नेन कर्तव्यं सुखमिच्छता ॥
शर्वर्या मध्यमौ यामौ हुतशेषं हविश्च यत् ।
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥

'अस्मिन्' इति प्रदोषचतुर्थयामद्वये । 'प्रयुञ्जानो' वेदं पठन् । 'अस्मिन्' ब्रह्मणि । 'कर्तव्यं' वेदाध्ययनमिति शेषः ॥

[6]विष्णुपुराणे—[२, १२, २९–३४]

शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति ।

1 गृ. र., ३९६ ; वी. मि. आ., ५५४.
2 नातितृप्याथ—विश्वरूपः.
3 द्वितीयभोजनकालार्थः श्लोकः । पूर्वभोजनविधिकार्त्स्न्ये प्राप्ते भृत्यैः सहैवाश्नीयात् । न पौर्वापर्येणेत्यर्थः । अतश्च नान्तरा भोजनम् ।—विश्वरूपः.
4 गृ. र., ३९६ ; वी. मि. आ., ५५५.
5 वेदाभ्यासेन तौ नयेत्—ना, गृ. र ; वेदाभ्यासरतिर्भवेत्—वी. मि. आ.
6 ब्रह्मपुराणे—इति गृ. र., ३९६—३९७.

सन्निवेशं च तस्यापि शृणुष्व मुनिसत्तम ॥
[1]यदह्ना कुरुते पापं [2]दृष्ट्वा तं निशि मुच्यते ।
यावत्यश्चेह ताराश्च शिशुमाराश्रिता दिवि ॥
तावन्त्येव च वर्षाणि जीवन्त्यभ्यधिकानि तु ।
उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो हनुः[3] ॥
यज्ञोऽधरश्च विज्ञेयो धर्मो मूर्धानमाश्रितः ।
हृदि नारायणश्चास्ते अश्विनौ पूर्वपादयोः ॥
वरुणश्चार्यमा चैव पश्चिमे तस्य सक्थिनी ।
शिश्नः संवत्सरस्तस्य मित्रोऽपानं समाश्रितः ॥
पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः ।
तारकाशिशुमारस्य नास्तमेति चतुष्टयम् ॥

[4]शङ्खलिखितौ

त्रयाणामपि वर्णानां पूर्वरात्रेषु जागरः[5] ॥

1 वी. मि. आ., ५५५-५५६.
2 तदह्ना प्रतिमुच्यते—उ.
3 मनुः—गृ. र.
4 वी. मि. आ., ५५५.
5 पूर्वरात्रे प्रजागरः—ज, वी. मि. आ.

॥ ८ ॥

# अथ रात्रिकृत्यम्

[1]विष्णुपुराणे [३, ११, १०८-११०]

कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेदस्फुटितां शय्यामपि दारुमयीं नृप ॥
नाविशालां न वा भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ॥
प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥

[2]विष्णुः—[७०, १-१७]

आर्द्रपादो न सुप्यात् । नोत्तरापरशिराः । न नग्नः । नानुवंशम् । नाकाशे । न पालाशे शयने । न पञ्चदारुकृते । न गजभग्नकृते । न विद्युद्दग्धकृते । न भिन्ने । नाग्निप्लुष्टे । न घटसिक्तजले । न श्मशानशून्यालयदेवतालयेषु । न चपलमध्ये । न नारीमध्ये[3] । न धान्यगोगुरुहुताशनसुराणामुपरि ।

1 The heading रात्रिकृत्यम् and the verses from *Viṣṇupurāṇa* are missing in all manuscripts of *Kalpataru* and *Gṛhastharatnākara* but restored from—*Vīramitrodaya*, Ānhikaprakāśa p. 556.

2 वी. मि. आ., ५५६ ; गृ. र., ३९७.

3 नारिमध्ये—उ ; 'न नारीमध्ये' omitted by ब, द and वी. मि. आ.

नोच्छिष्टः । न दिवा स्वपेत् । न संध्ययोः । न भस्मनि । देशे न चाशुचौ । न चार्द्रे । न पर्वतमस्तके ॥[1]

'अपरः' पश्चिमः । 'अनुवंशं' वंशदैर्घ्यानुगतः । वंशः गृहमूर्धन्यदीर्घकाष्ठम् । 'आकाशे' अनावृतदेशे । 'पञ्चदारुकृते' पञ्चजातीयदारुकृते । 'चपलो'ऽत्र व्यसनी । 'आर्द्रे' देश इत्यनुवृत्तः ॥

[2]हारीतः

न संधिवेलायां शयीत । नान्यपूर्वे । नानुवंशास्तीर्णे । नाश्मपीठोपधाने । न तिर्यगुदक्प्रत्यक्शिराः । न नग्नः । नाशुचिः । नासने । नोच्छिष्टः । नो भग्ने[3] । न प्रगे । नोच्चैर्निशायां भाषेत ॥

'अन्यपूर्वे' पूर्वोपभुक्ते । 'प्रगे' प्रातः ॥

'सुप्यात्प्रत्यक्शिराः' इत्यनुवृत्तौ—

शङ्खलिखितौ[4]

न विशीर्णखट्वायाम् । [5]नान्यवर्णोपसेवितायामनभ्युक्ष्य । न भूतयक्षग्रहायतनेषु । न श्मशानवृक्षच्छायासु । न पर्वणि रभसोत्सवे वा ॥

'पर्व' प्रतिपत्पञ्चदश्योः संधिः । 'रभसोत्सवे' हर्षोत्पादकपुत्रजन्माद्युत्सवे ॥

1 नोच्छिष्टो न दिवा सुप्यात्संध्ययोर्न च भस्मनि ।
देशे न चाशुचौ नार्द्रे न च पर्वतमस्तके ॥—मु. विष्णुः.

2 वी. मि. आ., ५५६-५५७ ; एतानि सूत्राणि पैठीनसीयसूत्रेषु पठ्यन्ते गृहस्थरत्नाकरे, ३९८.

3 न युगे—वी. मि. आ.

4 वी. मि. आ., ५५७ ; गृ. र., ३९९.

5 नान्यवर्णोपवेशितायां—ज, वी. मि. आ.

[1]**मनुः**—[४, ५७]

**नैकः सुप्याच्छून्यगृहे ॥**

**गौतमः**—[९, ६०]

**न कदाचिद्रात्रौ नग्नः ॥**

**सुप्यादिति शेष इति भर्तृयज्ञः ॥**

[2]**उशना**

**न तैलेनाभ्यक्तशिराः [3]स्वपेत् ॥**

[4]**पैठीनसिः**

**न शीर्णायां खट्वायामुपविशेत् । नाद्वारेण प्रविशेत् । तथा नादीक्षितः कृष्णचर्मणि शयीत[5] ॥**

**बौधायनः**—[२, ४, २४]

**न दिवा स्वप्नशीलेन न च सर्वान्नभोजिना ।**
**कामं शक्यं [6]नभो गन्तुमारूढपतितेन वा ॥**

[7]**आपस्तम्बः**—[१, ३२, ६]

**सदा निशायां दारान् प्रत्यलंकुर्वीत[8] ॥**

1 गृ. र., ३९८.

2 वी. मि. आ., ५५७; गृ. र., ३९८.

3 शयीत—गृ. र.

4 गृ. र., ३९८.

5 एतदुपरि पूर्वोक्तहारीतसूत्राणि 'न सन्धिवेलायां शयीत' इत्यादीनि पैठीनसीयत्वेन पठ्यन्ते **गृहस्थरत्नाकरे**.

6 ततो गन्तुं—ब, ज, द.

7 वी. मि. आ., ५५८.

8 'दारं', इति **हरदत्त**पाठः; 'दारं प्रति' इति वचनादुपगमनार्थमलंकरणम् । तेन भार्याया उपगमनायोग्यत्वे नायं नियमः ॥—**हरदत्तः**.

[1]अथ मनुः—[३, ४५–५०]

ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेदेनां [2]तद्व्रतो रतिकाम्यया ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सद्भिर्गर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥
[3]निन्द्यासु चान्यास्वष्टासु स्त्रियो रात्रिषु वर्जयेत् ।
ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन् ॥

'ऋतुः' स्त्रीणां गर्भग्रहणयोग्यावस्था, तदुपलक्षितः कालः स 'ऋतुकालः'। तत्राभिगमनमेव व्रतं यस्य स 'ऋतुकालाभिगामी'। 'व्रते'[4] इति णिनिः। 'पर्ववर्जम्' इति, ऋतावनृतौ च। 'तद्व्रतः' भार्यारतिकाम्यया गमनमेव व्रतं यस्य स तथा। एतच्च गमनं सकामाया रक्षणार्थम्। 'स्वाभाविक'ग्रहणाद्रोगादितोऽन्यथापि भवतीति सूचितम्। 'एकादश्या'दिरात्रयोऽत्र ऋतूपक्रमापेक्षया न तिथ्यपेक्षया। 'अयुग्मासु' विषमासु पञ्चम्यादिषु रात्रिषु। 'संविशेत्' अभिगच्छेत्। 'समे' इति, समे तुल्ये शुक्रे

1 वी. मि. आ., ५५८–५५९ ; गृ. र., ३९९–४००.
2 तद्धेतो—वी. मि. आ.
3 निन्द्यासु षट्स्वपि हि—गृ. र.
4 ३–२–८०.

स्त्रीपुंसयोः। 'अपुमान्' नपुंसकः। 'युगपद्यत्र वर्तेते विद्यात्तत्र नपुंसकम्' इति देवलवचनात्। 'पुंस्त्रियौ वा' इति, द्विधाभूते तु सम एव स्त्रीपुरुषशुक्रे स्त्रीपुंसयुगलं जायते। 'क्षीणे' निःसारे। 'अल्पे' परिणामतः। 'विपर्ययो'ऽत्र गर्भानुत्पत्तिः। 'निन्द्यासु' षट्सु, आद्याश्चतस्र एकादशी त्रयोदशी चेत्येतासु। 'अष्टासु चान्यासु' अनिन्द्यास्वपि यासु कासुचिद्रात्रिषु स्त्रियो वर्जयेत्। रात्रिद्वितय एव च स्त्रियोऽभिगच्छन् 'ब्रह्मचार्येव भवति' ब्रह्मचर्यफलं प्राप्नोतीत्यर्थः। 'यत्र तत्राश्रम' इति, गृहस्थोऽपि सन्॥

यमः

ऋतुस्तु षोडशाहानि रजन्योऽष्टौ विनिन्दिताः।
तासामाद्याश्चतस्रस्तु सप्तम्येकादशी च या॥
त्रयोदशी पञ्चदशी नवमी पञ्चमी तथा।
युग्मासु पुत्रा जायन्ते ह्ययुग्मासु च योषितः॥
युगपद्यत्र वर्तेते विद्यात्तत्र नपुंसकम्।
पुरुषो हीयते यत्र योषित्तत्राभिजायते॥
पुरुषो ह्यधिको यत्र पुमांस्तत्राभिजायते।
[1]यदि संयोगकाले तु पुरुषो रागमोहितः॥
द्विधा समुत्सृजेच्छुक्रं यमलं तत्र जायते।
शुक्रशोणितवैषम्याज्जायते कृष्णपिङ्गलः॥
एवमुत्पादिताः पुत्रा म्रियन्ते वाऽगतायुषः।

'वर्तेते' प्रवर्तेते। एतच्चाल्पशुक्रत्वोपलक्षणम्। 'हीयते' शुक्रतः। 'अधिको'ऽपि शुक्रत एव। 'वैषम्यं' वैकृतम्।

1 गृ. र., ४००,

'कृष्णपिङ्गल' इत्यनेन वर्णोपलक्षणम्। 'एवमुत्पादिताः' अनिन्दितरात्रिजनितगर्भाधानजनिताः। 'अगतायुषः' संपूर्णायुषः॥

[1]याज्ञवल्क्यः—[१, ७९-८१]

षोडशर्तुर्निशाः स्त्रीणां [2]तस्मिन्युग्मासु संविशेत्।
ब्रह्मचार्येव [3]पर्वाण्याद्याश्चतस्रस्तु वर्जयेत्॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्॥
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्।
स्वदारनिरतश्चापि स्त्रियो रक्ष्या यतः स्मृताः॥

'पर्वाणि' पौर्णमास्यामावस्याष्टमीचतुर्दशीसंक्रान्तयः। 'क्षामा' अल्पबला[4]। क्षामता च रजस्वलाव्रतैर्यदि न भवति तदाऽऽवृत्या लघ्वाहारादिना कर्तव्या। 'सुस्थ इन्दौ' बलवति चन्द्रे। इन्दुग्रहणं शुभग्रहान्तरोपलक्षणार्थम्। 'सकृत्' एकस्यां रात्रावेकवारं न द्विर्गच्छेदित्यर्थः। 'लक्षण्यं' शुभलक्षणयुक्तम्॥

[5]हारीतः

चतुर्थेऽहनि स्नातायां युग्मासु गर्भाधानाद्युपेतो ब्रह्मगर्भं संदधाति॥

1 वी. मि. आ., ५५९—५६०; गृ. र., ४०२—४०३.
2 तासां for तस्मिन्—गृ. र.
3 पर्वाद्याश्चतस्रश्च विवर्जयेत्—गृ. र.
4 स्वल्पबला—ज.
5 वी. मि. आ., ५६०.

[1]महाभारते

स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥

एतद्वचनाच्च 'तासामाद्याश्चतस्र' इति [2]मानवीयो 'न चतुर्थ आह्वयेद्' इति च पैठीनसीयो निषेधोऽपत्यगताल्पायुष्ट्वादिदोषार्थ इति तात्पर्यम्। 'चतुर्थीप्रभृत्याषोडशीमुत्तरोत्तरां प्रजानिःश्रेयसार्थम्' इत्यापस्तम्बगृह्यवचनात्[3] ॥

देवलः

ब्राह्मण्या द्वादशाहं स्याद्वेदोक्तमृतुधारणम्।
दशाष्टौ षट् च शेषाणां विधीयन्तेऽनुपूर्वशः ॥
एतेष्वपि त्र्यहं पूर्वं वर्जयित्वा रजस्वलाम्।
शुद्धां स्नातां ततो भार्यां समेयुः पुत्रकारणात् ॥

इदं तु ब्राह्मणादीनां द्वादशाहादिऋतुधारणवचनं गम्यत्वाभिप्रायं न ऋतुकालाभिप्रायम्। "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडशः स्मृताः" इति [4]मनुवचनविरोधात्। 'शुद्धां' कालतः ॥

बृहस्पतिः—[सं., ३०; ३४–३५; ३३]

ऋतुकालाभिगमनं कुर्यात्पर्वाणि वर्जयेत्।
[5]स्त्रियाः शुक्रेऽधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत् ॥
तस्माच्छुक्रविवृध्यर्थं वृष्यं स्निग्धं च भक्षयेत्।
लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतम् ॥

1 वी. मि. आ., ५६०.
2 मनुः, ३, ४७.
3 आपस्तम्बगृह्यसूत्रम्, ३, ९, १.
4 मनुः, ३, ४६.
5 वी. मि. संस्कारप्रकाशः, १६०.

ऋतुकालेऽभिगमनं पुंसा कार्यं प्रयत्नतः ।
सदैव वा पर्ववर्जं स्त्रीणामभिमतं हि तत् ॥

गौतमः—[५, १-२]

ऋतावुपेयात् । सर्वत्र वा प्रतिषिद्धवर्जम् ॥

[1]देवलः

अतीर्थगमनात्पुंसस्तीर्थसंगूहनात् स्त्रियाः ।
उभयोर्धर्मलोपः स्याद्द्वेषेण तु विशेषतः ॥
यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत् ।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा ॥

'तीर्थम्' ऋतुः । 'संगूहनं' प्रच्छादनम् । 'अपुत्राम्' इति, इतरासु पुत्रवतीषु मध्ये ऋतुयौगपद्येऽपि तामेव प्रथमतो गच्छेत् । 'ग्रहणक्रमशः' ऋतुग्रहणक्रमेण ॥

[2]आपस्तम्बः—[२, १, १७-२३; २, २, १]

ऋतौ च सन्निपाते [3]दाराणामनुव्रतम्[4] । अन्तरालेऽपि दार एव[5] । ब्राह्मणवचनाच्च संवेशनम्[6] । स्त्रीवाससैव सन्नि-

1 वी. मि. आ., ५६०.

2 वी. मि. आ., ५६२-५६३.

3 दारेणानुव्रतम्—हरदत्तः.

4 रजोदर्शनादारभ्य षोडशाहोरात्राः ऋतुः । तत्र संनिपातः संप्रयोगो दारेण सह कर्तव्यः । छान्दसमेकवचनम्, नित्यं बहुवचनान्तो हि दारशब्दः । अनुव्रतं शास्त्रतो नियमो व्रतं, तदनुरोधेन ।—हरदत्तः.

5 अन्तरालं मध्यं ऋत्वोरन्तराले मध्येऽपि संनिपातः स्यात्, दार एव सकामे सति । भार्यायामेवेच्छन्त्यां तद्रक्षणार्थमवश्यं संनिपतेदिति ॥—हरदत्तः.

6 यदिदमनन्तरोक्तं संवेशनं तत्र ब्राह्मणवचनं प्रमाणं 'काममाविजनितोः संभवाम' (तै. सं., २. ५. १. ४) इति ।—हरदत्तः.

पातः स्यात्[1] । यावत्सन्निपातं च सह शय्या । ततो नाना । उदकोपस्पर्शनम्[2] । अपि वा लेपान् प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम्[3] ॥

'सन्निपातः' संयोगः । 'अनुव्रतं' पर्वादिवर्जनरूपं व्रतमनुगम्येत्यर्थः । 'अन्तराले' अनृतौ । 'ब्राह्मणम्' अत्र वेदभागः, "अब्रुवन् वरं वृणामहे[4]" इत्यादि तैत्तिरीये[5] । 'स्त्रीवासः' स्त्रीसंयोगार्थवासः[6] । 'नाना' पृथक् शयितारौ स्याताम् । 'उदकोपस्पर्शनं' स्नानम् । एतदृतौ । अनृतौ च 'प्रोक्षणम्' । [7]यत आह—

वृद्धशातातपः[8]

ऋतौ तु गर्भशाङ्कित्वात्स्नानमेव विधीयते[9] ।
अनृतौ तु सदा कार्यं शौचं मूत्रपुरीषवत् ॥ इति ।

[10]आपस्तम्बः—[१, ३२, २]

मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत[11] ।

1 स्त्र्युपभोगार्थं वासः स्त्रीवासः । तेन संनिपात एव स्यात् । न तेन सुप्रक्षालितेनापि ब्रह्मयज्ञादिकृत्यमिति ।—हरदत्तः.

2 यावत्संनिपातमेव दम्पत्योः सहशयनम् । ततः पृथक् शयीयाताम् । ततो द्वयोरपि उदकोपस्पर्शनं स्नानं कर्तव्यम् । इदमृतुकाले ॥—हरदत्तः.

3 यदि वा रेतसो रजसश्च ये लेपास्तानद्भिर्मृदा च 'प्रक्षाल्य' 'आचम्य' 'अङ्गानां शिरःप्रभृतीनां प्रोक्षणं कर्तव्यम् । इदमनृतुकाले ॥—हरदत्तः.

4 अब्रुवन् वरं वृणीमहे—उ ; अब्रुवन् वरं वृणीम—वी. मि. आ.

5 तै. सं., २. ५. १. ५.

6 संभोगार्थं वासः—ब, द.

7 यदाह—ब, द.

8 वी. मि. आ., ५६१ ; गृ. र., ४००.

9 स्नानं मैथुनिनः स्मृतम्—ना, गृ. र.

10 वी. मि. आ., ५६१.

11 मिथुनीभूय मैथुनं कृत्वा तया सह भार्यया सह तां रात्रिं सर्वां न शयीत ।—हरदत्तः,

[1]वृद्धशातातपः

द्वावेतावशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

'शुचित्वं' स्नानप्रोक्षणव्यतिरेकेणापि ॥

[2]गौतमः—[९, २६]

न मिथुनीभूय[3] शौचं प्रति विलम्बेत् ॥

[4]पराशरः—[४, १५]

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
[5]स गच्छेन्नरकं घोरं ब्रह्महेति तथोच्यते ॥

[6]यमः

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः ॥
भार्यामृतुमुखे यस्तु सन्निधौ नोपगच्छति ।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥

[7]देवलः

[8]यः स्वदारानृतुस्नातान् [9]सुस्थश्चेन्नोपगच्छति ।

1 वी. मि. आ., ५६१ ; गृ. र., ४००.
2 वी. मि. आ., ५६१ ; गृ. र., ४००.
3 मिथुनीभूत्वा—मस्करी.
4 वी. मि. आ., ५६१ ; गृ. र., ४००.
5 घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः—इति मुद्रितपराशरपाठः.
6 वी. मि. आ., ५६१ ; गृ. र., ४०१.
7 वी. मि. आ., ५६२ ; गृ. र., ४०१.
8 स्वदारांश्च ऋतुस्नातान्—गृ. र.
9 स्वस्थश्चेत्—वी. मि. आ.

[1]भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनाश्य सः ॥

'सुस्थः' रोगादिरहितः ॥

[2]**बौधायनः**—[४, १, १९; २१]

त्रीणि वर्षाण्यृतुमतीं यो भार्यां नोपगच्छति[3] ।
स तुल्यं [4]ब्रह्महत्याया दोषमृच्छत्यसंशयम्[5] ॥
ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
[6]तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति ॥

[7]अथ **मनुः**—[४, ४०–४२]

नोपगच्छेत् प्रमत्तोपि स्त्रियमार्तवदर्शने ।
समानशयने चैव न शयीत तया सह[8] ॥
[9]रजसाभिप्लुतां नारीं [10]नरस्य ह्युपगच्छतः ।
प्रज्ञा तेजो बलं[11] चक्षुरायुश्चैव प्रहीयते ॥
[12]तां विसर्जयतस्तस्य रजसा समभिप्लुताम् ।
[13]प्रज्ञा लक्ष्मीर्यशश्चक्षुरायुश्चैव प्रवर्धते ॥

1 स तुल्यं ब्रह्महत्याया दोषमृच्छत्यसंशयम्—ब, द, ज.
2 वी. मि. आ., ५६२ ; गृ. र., ४०१.
3 नैव गच्छति—ना ; नाधिगच्छति—मु. बो.
4 भ्रूणहत्याया:—ना ; भ्रूणहत्यायै—मु. बो.
5 यथा गर्भप्रध्वंसने भ्रूणहत्या भवति तथा तत्प्रागभावेऽपि, अविशेषादित्यभिप्राय:—गोविन्दस्वामी.
6 भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनाश्य सः—ब, द.
7 वी. मि. आ., ४६२ ; गृ. र., ४०१.
8 'प्रमत्त:' कामशरै: पीडितोऽपि । 'आर्तवं' स्त्रीलिङ्गशोणितं मासि मासि प्रसिद्धम् । तद्दर्शने न गच्छेत् । एकस्यां शय्यायां च 'तया सह न शयीत' ।—मेधातिथि:.
9 रजसा विप्लुतां—गृ. र.
10 नरस्याभ्युपगच्छत:—वी. मि. आ., गृ. र.
11 यश: for बलं—ब, ज, ना, द, वी. मि. आ., गृ. र.
12 तां विपर्यस्यतस्तस्य—वी. मि. आ ; तां विवर्जयतस्तस्य—मेधातिथिकुल्लूकौ.
13 प्रज्ञा तेजो बलं चक्षुरायुश्चैव—मेधातिथिकुल्लूकौ.

[1]देवलः

अशुद्धदिवसेष्वेतां मैथुनार्थं यदि व्रजेत् ।
आयुः प्रज्ञा च धर्मश्च तस्य पुंसः प्रहीयते ॥
तस्मात्त्रिरात्रं चाण्डालीं पुष्पितां परिवर्जयेत् ।
अवेक्षेत च तां नित्यं रथ्याभस्मनिषेवणैः ॥

'अवेक्षेत' रक्षेत । 'रथ्याभस्मनिषेवणैः' इत्यत्राध्याहृतोत्सुकशब्दयोगे तृतीया[2] । तेन तत्रौत्सुक्यं निवारयेदित्यर्थः ॥

[3]वसिष्ठः—१२, ५–७]

न मलिनवाससा सह [4]संविशेत् । न रजस्वलया । नायोग्यया ॥

'अयोग्या' अप्राप्तयौवना ॥

[5]गौतमः—[९, २९–३२]

नाकल्यां नारीमभिरमयेत्[6] । न रजस्वलाम् । न चैनां श्लिष्येत् । न कन्याम् ॥

'अकल्यां' रोगिणीम् । 'न कन्यां श्लिष्येत्' न रमयेदित्यर्थः ॥

1 गृ. र., ४०१–४०२.

2 'प्रसितोत्सुकाभ्यां तृतीया च,' (२–३–४४) इति तृतीया—गृ. र.

3 वी. मि. आ., ५६४; गृ. र., ४०२.

4 संवसेत्—वी. मि. आ.; संवसेत—मु. वसिष्ठः.

5 गृ. र., ४०२.

6 अस्वस्थशरीरां अनलङ्कृतशरीरां वा 'अकल्यां नारीं' स्त्रियं 'नाभिरमयेत्'। अभीत्युपगमार्थम् । ततो विनोदार्थायाः क्रीडाया अप्रतिषेधः ।—मस्करी.

[1]श्राद्धानन्तरं शङ्खलिखितौ

ऋतुस्नातां तदहोरात्रं परिहरेत्। नार्तवे। न दिवा मैथुनं व्रजेत्। क्लीवा अल्पवीर्याश्च दिवा प्रसूयन्तेऽल्पायुषश्च। तस्मादेतद्वर्जयेत् प्रजाकामः। पितॄणां नेह वै तन्तुं विच्छिन्द्यात्। प्रयतेताच्छेदाय येनाप्रतिष्ठः पतति। तस्मात्प्रतिष्ठाकामः प्रजया प्रतिष्ठेत्॥

'तन्तुं' संतानम्। 'अच्छेदाय' अविच्छेदाय संतानस्य। 'येन' यस्मात्। 'नो'शब्दो निषेधे। 'अप्रतिष्ठः' प्रजानुत्पत्त्याऽप्राप्तप्रतिष्ठः सन् 'पतति'। तस्मादुत्पत्त्यर्थं यतितव्यम्॥

[2]विष्णुः—[६९, १-१७]

नाष्टमीचतुर्दशीषु[3] स्त्रियमुपेयात्। न श्राद्धं भुक्त्वा। न दत्वा[4]। नामन्त्रितः[5] श्राद्धे। न व्रती। न दीक्षितश्च। न देवायतने। न श्मशानशून्यालयेषु[6]। न वृक्षमूलेषु[7]। न दिवा। न संध्ययोः। न मलिनाम्[8]। नाभ्यक्ताम्। नाभ्यक्तः। न रोगार्ताम्। न रोगार्तः।

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोधिकाम्।

1 गृ. र., ४०२.

2 गृ. र., ४०३-४०४; वी. मि. आ., ५६४.

3 नाष्टमीचतुर्दशीपञ्चदशीषु—मु. विष्णुः.

4 न श्राद्धं दत्वा—गृ. र.

5 नोपनिमन्त्रितः—मु. विष्णुः.

6 न देवायतनश्मशानशून्यालयेषु—वी. मि. आ., मु. विष्णुः.

7 Omitted by all mss.

8 न मलिनाम्। न मलिनः।—मु. विष्णुः.

नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः ॥

'दीक्षितः' दीक्षाख्यसंस्कारवानवभृतेष्टिं यावत्। तत्र दीक्षोन्मोचनात्। 'रोगार्ता' व्याधिपीडिताम्, स्त्रियः पुरुषस्य वोपगमनजन्यो तत्संवर्धनीयो वा रोगो विवक्षितः। 'वयोधिका' अत्रोपरतरजस्का ॥

[1]मनुः—[४, १२८]

अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम्।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥[2]

[3]वसिष्ठः—[१२, २१–२४]

ऋतुकालाभिगामी स्यात् पर्ववर्जं स्वदारेषु। नातीर्थमुपेयात्[4]।

'तीर्थम्' अत्र योनिः ॥

अथाप्युदाहरन्ति—

यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम्।
भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः[5] ॥
[6]या स्यादनतिचारेण रतिः सा धर्ममाश्रिता।

'अनतिचारेण' योन्यनतिक्रमेण ॥

1 गृ. र., ४०४.

2 'ब्रह्मचारी भवेत्' ब्रह्मचारिधर्मो मैथुननिवृत्तिरतिदिश्यते न पुनर्भिक्षाचरणादिः। 'अप्यृता'विति संबन्धात्तदेव हृदयमागच्छति।—मेधातिथिः.

3 गृ. र., ४०४.

4 अतिर्यग्गुपेयात् for नातीर्थमुपेयात्—मु. वसिष्ठः.

5 मांसरेतोभुजः सदा—गृ. र.

6 या स्यादनित्यचारेण—मु. वसिष्ठः; या स्यादनभिचारेण—द, ब, गृ. र.

[1]अपि च काठके प्रवचने विज्ञायते । [2]अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयीरन्निति स्त्रीणामिन्द्रदत्तो वर इति ॥

[3]बौधायनः

यस्तु पाणिगृहीताया मुखे गच्छति मैथुनम् ।
तस्येह निष्कृतिर्नास्तीत्येवमाह प्रजापतिः ॥

[4]पैठीनसिः

अयुग्मेनावपेत् स्त्री जायते युग्मे पुमान् भवति । संवृते देशे मैथुनार्थमाह्वयेत् । न प्रथमे । न द्वितीये । न तृतीये । न चतुर्थे आह्वयेत् ॥

## अथ रजस्वलाधर्माः

[5]तत्र हारीतः

रजः प्राप्ता चेदधः[6] शयीत । न देवकार्यं कुर्वीत । भूमौ कार्ष्णायसे पाण्यां मृन्मये वाऽश्नीयात् ॥

'रजः प्राप्ता' रजः प्राप्तवती । 'अधः' भूमौ । अस्पृश्यत्वादेव तस्याः साक्षाद्देवकार्यकरणनिषेधे सिद्धे 'न देवकार्यं कुर्याद्' इत्यभिसंधानं तदन्नप्रेक्षणं तद्द्रव्यपुष्पनैवेद्याद्यवेक्षणमपि न कुर्यादित्येतदर्थम् । 'कार्ष्णायसम्' अयःपात्रम् ॥

1 वी. मि. आ., ५६४.

2 अद्य श्वो वा—वी. मि. आ.; 'अद्य श्वो वा विजनिष्यमाणाः' आसन्नप्रसवा इत्यर्थः इति च व्याख्यातम्.

3 गृ. र., ४०५.

4 गृ. र., ४०५.

5 गृ. र., ४०६.

6 चाधः for चेदधः—गृ. र.; रजः प्राप्तावधः—उ.

[1]वसिष्ठः—[५, ६–१०]

त्रिरात्रं रजस्वलाऽशुचिर्भवति। सा नाञ्ज्यात्। नाभ्यञ्ज्यात्। नाप्सु स्नायात्। अधः शयीत। न दिवा सुप्यात्। नाग्निं स्पृशेत्। न रज्जुं विसृजेत्। न दन्तान् धावयेत्। न मांसमश्नीयात्। न ग्रहान्निरीक्षेत। न हसेत्। न किंचिदाचरेत्। नाञ्जलिना पिबेत्। न खर्वेण पिबेत्। न लोहितायसेन वा। विज्ञायते हि। इन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसंबद्धोऽहमित्येवमात्मानममन्यत। तं सर्वाणि भूतान्यभ्याक्रोशन् भ्रूणहन्निति। स स्त्रिय उपाधावदस्यै मे भ्रूणहत्यायै तृतीयं प्रतिगृह्णातेति। ता अब्रुवन् किं नो भूयादिति। सोऽब्रवीद्वरं वृणीध्वमिति। ता अब्रुवन्नृतौ प्रजां विन्दामह इति काममाविजनितोः संभवामेति। तथेति ताः प्रतिजगृहुः। सैषा ब्रह्महत्या मासि मास्याविर्भवति। तस्माद्रजस्वलाया अन्नं नाश्नीयात्। भ्रूणहत्याया एवैषा रूपं प्रतिमुच्यास्ते। तदाहुरञ्जनाभ्यञ्जनमेवास्या न प्रतिग्राह्यं तद्धि स्त्रिया अन्नमिति। [2]तस्मात्तस्या अन्नं न बीभत्सन्ते मैवं मेधमुपागादिति।

उदक्याऽन्वासते[3] येषां ये च केचिदनग्नयः।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः॥

'ग्रहान्' आदित्यादीन्। 'किंचित्' गृहलेपनाद्यपि। 'खर्वो' वामहस्तः। 'लोहितायसेन' ताम्रपात्रेण। 'पाप्मगृहीतममन्यत' पापगृहीतोऽहमिति मतिं कृतवान्। 'आवि जनितोः

1 गृ. र., ४०६.

2 तस्मात्तस्यै च तत्र च बीभत्सन्ते मेयमुपागादिति—मु. वसिष्ठः.

3 उदक्यास्त्वासते—मु. वसिष्ठः.

संभवाम' इति, 'आविजननाद्' आप्रसवात् 'संभवाम' मिथुनीभवामेत्यर्थः। 'आविजनितो'रिति "भावलक्षण"[1] इत्यादिना तोसुन्प्रत्ययः। 'प्रतिमुच्य' आबन्ध्य। 'अञ्जनमभ्यञ्जनं च' 'अञ्जनं' मैथुनं स्नेहद्रव्यलक्षणसाम्यात्, 'अभ्यञ्जनम्' अत्रालिङ्गनम्। अञ्जनमपि तस्य वृत्तेः। 'न चैनां श्लिष्येद्' इति [2]गौतमवचनानुसारात्। 'अश्नीयाद्' उपभुञ्जीत। 'भ्रूणहत्या' अत्र ब्रह्महत्या। यतस्तयाञ्जनाभ्यञ्जनमेवान्नं, तस्मात्तस्या ओदनादिरूपमन्नं 'न बीभत्सन्ते' न निन्दन्ति। यद्यञ्जनाभ्यञ्जनमात्रे साऽशुचिस्तदा यज्ञचर्यायां सा शुचिः स्यादित्याह—'मैवं मेधमुपागाद्' इति। 'मेधो' यज्ञः। मैवंविधा सति यज्ञं गच्छेदित्यर्थः। 'अन्वासते' उपासनां कुरुते॥

[3]पैठीनसिः

अथ रजस्वलां परिहरेत्। त्वाष्ट्रं विश्वरूपं जघान वज्रेणेन्द्रः। तं देवा भ्रूणहन्नित्येवमवदन्। स स्त्रिय उपाधावदस्यै मे भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीत वरं दास्यामीति। ततोऽस्यांशं तृतीयं ब्रह्महत्यायाः स्त्रियः प्रपद्यन्ते। एवं भूमिर्वनस्पतयश्चैकैकम्। तासां वरान् तुष्टः प्रायच्छत्। भूमेः स्थिरत्वं वृक्षाणां छिन्नप्ररोहणं स्त्रीणां सर्वकाले संभोगः। तस्माद्रजस्वलां नोपासीत। ब्रह्महत्याप्रयुक्तां तां चतूरात्रेण स्नातां सर्वकर्माणि कारयेत्॥

'सर्वकर्माणि' देवपितृव्यतिरिक्तानि॥

1 ३-४-१६.
2 गौतमः, ९, ३१.
3 गृ. र., ४०८.

[1]पुनः पैठीनसिः

त्रिरात्रं मलवद्वासो धारयमाणा न स्नायात्। नाभ्यञ्ज्यात् । न नखान्निकृन्तेत् । नापमार्जयेत् । न रज्जुं स्पृशेत्। न दन्तान् धावयेत्। न स्रजं धारयेत्। न गन्धान् सेवेत। न कृणीयात्। न खर्वेण पिबेत्। न पर्णैः। न प्रपाणिः। न गोपीथे। न गवामिव जलपानम्। अत्रैव तैत्तिरीयश्रुतिः—यां मलवद्वाससं संभवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यप्रगल्भो या स्नाति तस्या अप्सु मारुको याभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबौ या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय ॥ इति।

[2]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्डेऽहोरात्रकृत्यानि ॥

1 गृ. र., ४०८.

2 इति श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकाण्डेऽहोरात्रकृत्यम्—अ.

॥ १ ॥

# अथ पर्वकृत्यानि

[1]तत्र मनुः—[४, १५०]

सावित्रान् शान्तिहोमांश्च कुर्यात् पर्वसु नित्यशः।
पितॄंश्चैवाष्टकास्वर्चेन्नित्यमन्वष्टकासु च ॥

'सावित्राः' सवितृदेवताकाः। ते च गायत्र्याक्षत-द्रव्येण कार्याः।

शान्तिकामस्तु जुहुयाद्गायत्र्या चाक्षतैः शुचिः।

इति शङ्खवचनात्। धर्मद्वारा ऐहिकानिष्टनिवृत्तिः 'शान्तिः'। 'पर्वसु' चतुर्दश्यादिषु। 'नित्य'ग्रहणात् पर्वस्ववश्यकर्तव्यता प्रतीयते ॥

[2]विष्णुः—[७१, ८६-८९]

पर्वसु च शान्तिहोमान्[3] कुर्यात्। न तृणमपि छिन्द्यात्। [4]अलंकृतस्तिष्ठेत्। एवमाचारसेवी स्यात् ॥

'छिन्द्यात्' हिंस्यात् ॥

1 गृ. र., ४०९; वी. मि. समयप्रकाशः, २५४-२५५.
2 गृ. र., ४०९; वी. मि. स., २५४.
3 पर्वसु शान्तिहोमं—मु. विष्णुः; पर्वणि होमान्—गृ. र.
4 अलंकृतश्च—मु. विष्णुः.

[1]**आपस्तम्बः**—[१, ३१, २१–२२]

दिवादित्यः सत्त्वानि गोपायति नक्तं चन्द्रमाः। तस्मादमावास्यायां निशायां स्वाधीय आत्मनो गुप्तिमिच्छेत् प्रायत्यब्रह्मचर्यकालेचर्यया च। सह ह्येतां रात्रिं सूर्याचन्द्रमसौ वसतः॥[2]

'स्वाधीयः' भृशतरम्। 'गुप्तिः' रक्षा। 'प्रायत्येन' अप्रायत्यनिमित्तदृष्टार्थरथ्योपसर्पणवर्जनादिना सम्यक् शौचाचमननिष्पादनेन। एवं 'ब्रह्मचर्येण'। 'कालेचर्यया' मुख्यकाल एव प्रातरादौ तत्कर्मकरणेन॥

[3]**छन्दोगपरिशिष्टे कात्यायनः**

पौर्णमासीममावास्यामधःस्वापो विधीयते।
अनाहिताग्नेरप्येष पश्चादग्नेर्विधीयते॥

'अनाहिताग्निः' अत्र स्मार्ताग्निमान्॥

[4]**बौधायनः**—[१, २१, १९–२१]

पर्वसु च नाधीयीत। न मांसमश्नीयात्। न स्त्रियमुपेयात्। पर्वसु हि रक्षःपिशाचा व्यभिचारवन्तो[5] भवन्ति॥

1 गृ. र., ४१०; वी. मि. स., २५५.

2 दिवा अहन्यादित्यः सत्त्वानि गोपायति प्राणिनो रक्षति आलोकदानेन। नक्तं रात्रौ चन्द्रमाः। तस्मादमावास्यायां निशायां रात्रौ स्वाधीयः बाढतरं भृशतरं आत्मनो गुप्तिं रक्षणमिच्छेत्। केन प्रकारेण? प्रायत्यब्रह्मचर्याभ्यां कालेचर्यया च। प्रयतस्य भावः प्रायत्यं, नित्यप्रायत्यात् अधिकेन प्रायत्येन स्नानादिजेन ब्रह्मचर्येण मैथुनत्यागेन काले कृतया चर्यया च देवतार्चनजपादिकया। एतां रात्रिं सर्वामेव रात्रिं सूर्याचन्द्रमसौ सह वसतः॥—**हरदत्तः**.

3 गृ. र., ४१०; वी. मि. स., २५५; **हेमाद्रिः, कालनिर्णये**, (हे. का.,) ६८३.

4 गृ. र., ४१०; वी. मि. स., २५०; हे. का., ६८४.

5 अभिचारवन्ति गृ. र.; पर्वसु रक्षांसि पिशाचाश्च व्यभिचारवन्तः। वि वैविध्ये, अभीत्याभिमुख्ये, चरतिः गमने भक्षणे च वर्तते। पर्वसु विविधं गच्छन्ति विविधं भक्षयन्ति च। पर्वसु स्त्र्यभिगमनमांसाशनवन्तीत्यर्थः। तद्यदि मनुष्या अपि कुर्युः, तान् रक्षःपिशाचा बाधन्ते। अतोऽस्मादेव भयान्निवर्तितव्यम्॥—**गोविन्दस्वामी**.

[1]पैठीनसिः

न पर्वसु तैलं क्षुरं मैथुनं मांसमित्युपेयात्। नामावास्यायां हरितानि छिन्द्यात्॥

'उपेयाद्' उपभुञ्जीत॥

[2]विष्णुपुराणे—[२, १२, १०]

छिनत्ति वीरुधो यस्तु वीरुत्संस्थे [3]दिवाकरे।
पत्रं वा [4]पातयत्येकं ब्रह्महत्यां स विन्दति॥

'वीरुत्संस्थे' वनस्पतिस्थिते[5]॥

[6]यमः

आसप्तमं कुलं हन्ति शिरोऽभ्यङ्गे चतुर्दशी।
मांसाशने पञ्चदशी कामधर्मे तथाष्टमी॥

[7]वृद्धशातातपः

दन्तकाष्ठममावास्या मैथुनं च चतुर्दशी।
हन्ति सप्तकुलं तस्य तैलग्रहणमष्टमी॥
[8]षष्ठ्यष्टमी पञ्चदशी उभौ पक्षौ चतुर्दशी[9]।

1 गृ. र., ४१०; हे. का., ६८४.
2 वामनपुराणे—इति गृ. र., ४१०–४११; मत्स्यपुराणे—इति वी. मि. स., २५०; हे. का., ६८५.
3 निशाकरे—ब, ना, द.
4 पाटयेत्तेषां—वी. मि. स.; पातयत्येषां—हे. का.
5 गते—ब, ना, द.
6 गृ. र., ४११.
7 गृ. र., ४११; हे. का., ६८५.
8 व्यासः—इति वी. मि. स., २४९.
9 पक्षद्वयचतुर्दशी—वी. मि. स.

अत्र सन्निहितं पापं तैले मांसे क्षुरे भगे ॥
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा ।
क्षुरकर्म चतुर्दश्यां तथा पर्वणि मैथुनम्[1] ॥

सर्वपर्वसु षष्ठ्यां च सामान्येनैव सर्वतैलादिनिषेधे[2] सिद्धे [3]तिथिविशेषसंबन्धेन तैलादिविशेषनिषेधो दोषविशेषार्थः ॥

[4]देवलः

पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारदः ।
तैलं मांसं व्यवायं च क्षुरं च परिवर्जयेत्[5] ॥

अत्र षष्ठ्यादिशब्देन तिथिवाचिना चन्द्रगत्यवच्छिन्नकालविशेषप्रतिपादनाद्यावत्षष्ठ्यादितिथिकालमेव मांसादिनिषेधः, न तु तदुपलक्षणतोऽहोरात्रे । उपलक्षणपरत्वे प्रमाणाभावात् । अत एव देवपितृकृत्ययोः पूर्वाह्णापराह्णयोर्विहितत्वात् तत्कालव्यापितिथ्यादरः ॥

[6]विष्णुपुराणे—[३, ११, ११८–१२०]

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांससंभोगी पर्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं [7]नृप ॥

1 कामभोगश्चतुर्दश्याममायां च क्षुरक्रिया—वी. मि. स.
2 प्रतिषेधे—ना, गृ. र.
3 तत्तत्तिथि—ब, द, गृ. र.
4 गृ. र., ४११; मनुः—इति वी. मि. स., २५०; हे. का., ६८४.
5 क्षुरकर्म विवर्जयेत्—गृ. र; क्षुरं चैव विवर्जयेत्—वी. मि. स., हे. का.
6 गृ. र., ४१२; वी. मि. स., २४९–२५०.
7 ध्रुवम्—ना.

अशेषपर्वस्वेतेषु तस्मात्संयमिभिर्नरैः ।
भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैः सदा ॥

[1]वराहपुराणे

चाण्डालशपथेषु—
षष्ठ्यष्टम्यमावास्या उभौ पक्षौ चतुर्दशी ।
अस्नातानां गतिं यास्ये यद्यहं नागमे पुनः ॥

[2]भविष्यपुराणे

सप्तम्यां स्पृशतस्तैलमिष्टा भार्या विनश्यति ।

[3]वामनपुराणे

नन्दासु नाभ्यङ्गमुपाचरेत
क्षौरं च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित् परिवर्जनीया
भद्रासु सर्वाणि समाचरेत[4] ॥
नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरं च शुक्रेऽथ कुजे च मांसम् ।
बुधे तु योषां न समाचरेत
शेषेषु सर्वाणि सदैव कुर्यात् ॥
चित्रासु हस्ते श्रवणे च तैलं
क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं
योषिन्मघाकृत्तिकसोत्तरासु ॥

1 गृ. र., ४१२.
2 गृ. र., ४१२.
3 गृ. र., ४१३; हे. का., ६८८.
4 समारमेत—गृ. र., हे. का.

[1]वराहपुराणे

वैष्णवं प्रकृत्य वराह उवाच—

षष्ठ्यष्टमी चामावास्या उभे पक्षे चतुर्दशी ।
मैथुनं नैव सेवेत द्वादशीं च मम प्रियाम्[2] ॥
अष्टम्यां च चतुर्दश्यां षष्ठ्यां च द्वादशीं तथा ।
अमावास्यां चतुर्थ्यां च मैथुनं योऽधिगच्छति[3] ॥
तिर्यग्योनिं स गच्छेच्च मम लोकं न गच्छति ।

[4]मनुः—[४, १२८]

अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ [5]स्नातको द्विजः[6] ॥

नन्दिपुराणे[7]

यदि वा न समर्थः स्यात्[8] सदा मांसविवर्जने ।
वर्जयेदयने मुख्ये कृतस्वर्गमतिर्नरः ॥
चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
तथा पञ्चदशी वर्ज्या षडशीतिमुखानि च ॥

1 गृ. र., ४१२ ; हे. का., ७२४–७२५.

2 ११६, ४ ; मैथुनं नाभिसेवेत द्वादश्यां च तथा प्रिये—इति मुद्रितपाठः.

3 १२२, २, ६ ; अष्टम्यां च चतुर्दश्यां मैथुनं यो न गच्छति ।
तिर्यग्योनिं न गच्छेत मम लोकाय गच्छति ॥—इति मुद्रितपाठः.

4 गृ. र., ४१३ ; हे. का., ७२४.

5 प्रत्यहं द्विजः—गृ. र.

6 ब्रह्मचारी 'भवेत्' ब्रह्मचारिधर्मो मैथुननिवृत्तिरितिदिश्यते । न पुनर्भिक्षाचरणादिः । 'अप्यृता'विति संबन्धात्तदेव प्रथमं हृदयमागच्छति । अन्ये मधुमांसनिवृत्तिमपीच्छन्त्येतेष्वहःसु ॥—मेधातिथिः.

7 हे. का., ६९१.

8 यदि नाम चतुर्दश्यां—हे. का.

संक्रमं वापि सूर्यस्य विषुवौ चापि वार्षिकौ ।
मांसात्तु विरतो [1]नित्यं स्वर्गं याति दिनत्रयम् ॥
अथवाश्वयुजं मासं वर्जयेन्मांसभक्षणम् ।
मासषट्कं कृतं पुण्यं लभेताश्वयुजान्नरः ॥
मांसभोजनसंत्यागात् पुरुषः [2]शुद्धमानसः ।
यो नरः कार्तिकं मासं मांसं तु परिवर्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसविवर्जनात् ॥

## अथ संक्रान्तिनिर्णयः

तत्र देवीपुराणे[3]

द्वादशैव समाख्याताः समाः संक्रान्तिकल्पनाः ।
सप्तधा सापि बोद्धव्या एकैकं च यथा शृणु ॥
मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रैर्ध्वाङ्क्षीं विजानीयादुग्रैर्घोरा प्रकीर्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी ।
मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षैस्तु संक्रमे ॥
त्रिचतुःपञ्चसप्ताष्टनवद्वादश एव च ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥
अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः ।
सान्निध्यं तु भवेत्तत्र ग्रहाणां संक्रमे रवेः ॥

1 मर्त्यो—ज, हे. का.

2 शुभमानसः—ब, द.

3 कृत्यरत्नाकरः, (कृ. र.), ६१३–६१४; वी. मि. स., १३२; हे. का., ४०७, ४०८–४०९, ४१८–४१९, ४११.

व्यवहारो भवेल्लोके चन्द्रसूर्योपलक्षितः ।
काले विकलते सर्वं ब्रह्माद्यं सचराचरम् ॥
पुण्यपापविभागेन फलं देवी प्रयच्छति ।
एकधापि कृतं यस्मिन् कोटिकोटिगुणं भवेत् ॥
धर्माद्विवर्धते ह्यायू राज्यपुत्रसुखादयः ।
अधर्माद्व्याधिशोकादि विषुवायनसन्निधौ ॥
विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम् ।
एवं विष्णुपदे चैव षडशीतिमुखेषु च ॥

'कल्पनाः' भेदाः । 'समाः' तुल्याः । संक्रान्तिमात्ररूपतया चेष्टानिष्टफलजनकतामात्रसाम्येन वक्ष्यमाणास्तु विशेषा अयनादिविशेषरूपतया । यद्यपि कदाचिन्मलमासेन सह त्रयोदश मासा भवन्ति तथापि संक्रान्तयो द्वादश, न त्रयोदशेत्येवकारेण सूचितम् । 'ध्रुवाणि' स्थिराणि त्रीण्युत्तराणि रोहिणी च । 'मृदूनि' अनुराधाचित्रारेवतीमृगशीर्षाणि । 'क्षिप्राः' लघवः हस्ताश्विनीपुष्याः । 'उग्राः' पूर्वात्रयं भरणी मघा च । 'चराः' पुनर्वसुश्रवणधनिष्ठा स्वातीशतभिषाः । 'क्रूराः' तीक्ष्णाः, ते च मूलाज्येष्ठाश्लेषार्द्राः । 'मिश्रा' कृत्तिका विशाखा च । 'क्रमेण' यथासंख्येन । 'पारमार्थिकं' मुख्यं फलम् । सूक्ष्मसंक्रान्तिकाले वसोर्धारादिप्रयोगानुष्ठानजन्यं यत्पुण्यं तदेतास्वपि नाडिकास्वित्यर्थः । 'ताः' घटिकाः । पुण्यहेतुत्वात् 'पुण्यम्' । 'भोगो' व्याप्तिः । सूक्ष्मसंक्रमणकालसन्निधाने च पुण्यतमत्वमिति यावत् । 'सान्निध्यम्' इत्यादिकैस्तस्यैव कालस्य स्तुतिः ।

[1]**शातातपः**

अर्वाक् षोडश विज्ञेया नाड्यः पश्चात्तु षोडश ।

1 कृ. र., ६१४ ; हे. का., ४१७.

कालः पुण्योऽर्कसंक्रान्तौ विद्वद्भिः परिकीर्तितः ॥

इत्युभयतः षोडशनाडीनां पुण्यतामाह ॥

[1]तथा जाबालिरपि

"संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः" इति। एतद्वाक्यदर्शनाच्च पञ्चदशनाडीभोगोऽप्युभयत एव बोद्धव्यः। 'विकलते' स्वभावाच्च्यवते। 'देवी' दुर्गा। [2]संक्रान्त्युपक्रमे देवीपुराण एव—

समाऽयनऋतुमासपक्षाहादिक्रमेण तु।
स्थूलसूक्ष्मविभागेन देवी सर्वगता विभो ॥

इत्यभिधानात्। 'सन्निधौ' भोगकाले। 'विष्णुपदीषडशीतिमुख'स्वरूपमुक्तं ज्योतिःशास्त्रे[3] यथा—

धनुर्मिथुनकन्यासु मीने च षडशीतयः।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता ॥ इति।

[पुनर्देवीपुराणे][4]

अयनेषु विकल्पो यस्तन्मे निगदतः शृणु।
यावद्विंशत्कला भुक्ता तत्पुण्यं चोत्तरायणे ॥
निरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने।
[5]अर्धरात्रे त्वसंपूर्णे दिवापुण्यमनागतम् ॥
संपूर्णे चार्धरात्रे च उदयास्तमयेऽपि वा।
[6]मानार्धे भास्करे पुण्यमपूर्णे शर्वरीदले ॥

1 तथा जाबालोऽपि—उ, कृ. र., ६१४.
2 कृ. र., ६१५; हे. का., ४१८–४१९.
3 कृ. र., ६१५.
4 कृ. र., ६१५; हे. का., ४१९.
5 हे. का., ४२४.
6 कृ. र., ६१६; हे. का., ४२४.

संपूर्णे तूभयोर्देयमतिरेके परेऽहनि ।
[1]षडशीतिमुखेऽतीते वृत्ते वा विषुवद्वये ॥
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ।
[2]आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् ॥
अर्धरात्रे व्यतीते तु विज्ञेयं चापरेऽहनि ।

'विंशत्कला' विंशतितमी कला संक्रान्तिक्षणादूर्ध्वं यावद्भवति तावत्पुण्यम्। 'निरंशे' अंशकशून्ये, संक्रान्तिकाले हि भास्करोऽंशकरहितो भवति। 'दिनं' च रविसंस्कारसंस्कृतास्त्रिंशन्नाडिका इति ज्योतिर्विदः, 'तदन्ते' पुण्यमिति। 'दिवा पुण्यमनागतं' संक्रमपुण्यं यद्दिवा तेन संक्रान्तिकालादर्वागेव दिवाभागे संक्रान्तिकृत्यं कर्तव्यमित्यर्थः। 'संपूर्णे अर्धरात्रे' उदयोपक्रममस्तमयान्तम्। 'मानार्धं पुण्यं' 'मानं' दिनमानम्, 'तदर्धं' भास्करोपलक्षिते काले। 'दलम्' अर्धम्। अत्रापि मानार्धमित्यनुषङ्गः। 'संपूर्णे अर्धरात्रे' संक्रान्तौ सत्याम् 'उभयोः' पूर्वापरदिनयोः 'मानार्धं' 'देयं' योज्यमित्यर्थः। 'अतिरेके परेऽहनि' अत्रापि मानार्धं देयमित्यनुषङ्गः। 'वृत्ते' अतीते। एवं च रात्रौ द्वादशस्वपि रविसंक्रान्तिष्वर्धरात्रादर्वाक् संक्रमणे पूर्वदिनोत्तरार्धं पुण्यम्। संपूर्णे त्वर्धरात्रे पूर्वदिनस्योत्तरार्धमुत्तरदिनस्य पूर्वमर्धं पुण्यम्। अर्धरात्रादनन्तरं तूत्तरदिनस्य पूर्वमर्धं पुण्यम्। 'षडशीतिमुखेऽतीते' इत्यादि तु पारिशेष्याद्दिनसंक्रान्तिविषयम्। उभयतः पञ्चदशषोडशनाडीनां पुण्यत्वमपि दिनसंबन्धिविष्णुपदीमात्रविषयं पारिशेष्यात्। 'आदा'वि-

1 कृ. र., ६१९–६२० ; हे. का., ४२५.
2 कृ. र., ६१६ ; हे. का., ४२६.

त्यादि, 'आदौ' पूर्वदिन एव। 'अभिन्ना' पूर्वदिने संक्रान्तिकाले चैकैव। एतेनार्धरात्रिसंक्रमणे यदुभयतः पुण्यकथनं तद्भिन्नतिथिविषयम्। 'अर्धरात्रे व्यतीते तु' पूर्वेणाह्ना तिथ्यभेदेऽपि परस्यैव पूर्वमर्धं पुण्यमिति तात्पर्यार्थः ॥

[1]तथा

[2]मन्दा विप्रजने शस्ता मन्दाकिन्यपि राजनि ।
ध्वाङ्क्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा[3] ॥
महोदरी तु चोराणां शौण्डिकानां जयावहा ।
चाण्डालपुल्कसानां तु ये चान्ये क्रूरकर्मिणः ॥
सर्वेषां [4]कारुकाणां तु मिश्रिता भूतिवर्धिनी ।
नृपाः पीड्यन्ते पूर्वाह्णे मध्याह्ने तु द्विजोत्तमाः ॥
अपराह्णे तथा वैश्याः शूद्राश्चास्तमये रवौ ।
पिशाचास्तु प्रदोषे तु अर्धरात्रे तु राक्षसाः ॥
अर्धरात्रे व्यतीते तु पीड्यन्ते नटनर्तकाः ।
उषःकाले तु संक्रान्तौ हन्ति गोस्वामिनो [5]जनान् ॥
हन्ति प्रव्रजितान् सर्वान् संध्याकाले तु संक्रमः[6] ।
[7]एष स्थूलविभागस्तु[8] भुक्तिकामस्य कीर्तितः ॥
परमार्थेन [9]या संख्या कथयामि नृपोत्तम ।
स्वस्थे नरे सुखासीने यावत्स्पन्दति लोचनम् ॥

1 कृ. र., ६१७–६१८.
2 Line omitted by उ and कृ. र.
3 सुखप्रदा—कृ. र.
4 कारुकाराणां—कृ. र.
5 द्विजान्—ब, द.
6 न संशयः for तु संक्रमः—कृ. र.
7 हे. का., ४१६–४१७.
8 एतत् तत्स्थूलभागस्तु—कृ. र.
9 यत्संख्या—कृ. र.

तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः[1] ।
तत्पराच्छतमो भागस्त्रुटिरित्यभिधीयते ॥
[2]त्रुटेः सहस्रभागो यः स कालो रविसंक्रमे ।
तत्काले तु द्रवीभूतं[3] त्रैलोक्यं सचराचरम् ॥
व्यतीपाते तु चैवं स्याद्भवेत्पुण्यं ततोऽधिकम् ।
अत्र ब्रह्मापि संदिग्धमुवाच सुरसत्तम ॥
दानाध्ययनजप्यादि [4]विशिष्टं वह्निहोमतः ।
वसोर्धारासु लभते[5] त्वन्यथा न कथंचन ॥

[6]शातातपः

अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥
[7]अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश ।
कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्तितः ॥
संक्रान्तौ यानि देयानि हव्यकव्यानि [8]कर्तृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥

[9]ब्रह्मपुराणे

तुलां प्रत्यागते सूर्ये विषुवद्दिवसे सति ।

1 कालस्तत्परिकीर्तितः—ज.
2 त्रुटेः सहस्रभागस्तु यः कालो—कृ. र.
3 द्रवीभूते—ब, द.
4 विस्पष्टं—ब, ज, ना, द; विस्पष्टं—हे. का.
5 लभ्येत—ना, कृ. र.
6 कृ. र., ६१७; हे. का., ४१७.
7 कृ. र., ६१४.
8 दातृभिः—ज, कृ. र.
9 कृ. र., ४०३.

ब्राह्मणेभ्यः प्रदेयानि [1]सस्यान्यभिमतानि च ॥
मेषादित्रयसंक्रान्तौ चण्डांशुस्तूत्तरायणे ।
ब्रह्मलोकं तु गच्छन्ति देवाः सर्वे सवासवाः ॥
तस्मान्मासत्रयं तेषां प्रतिमाः शैलसंभवाः ।
आच्छाद्य घृतवस्त्राभ्यां तथा रक्ष्याश्च नित्यशः ॥
पुष्पैर्वस्त्रैः सकामैस्तु [2]गृहीतव्यास्तु सर्वदा ।
पूज्याः प्रतिदिनं ताश्च तथा विप्रास्तु भोजनैः[3] ॥
तर्पणीयास्तथा गावस्तृणेन लवणाम्बुभिः ।
वह्निर्नित्यं च प्रज्वाल्यो नृणां कायाग्निवर्धनः ॥

'मेषो' अत्र मकरः । 'शैलसंभवाः' पाषाणनिर्मिताः ॥

तथा

[4]मेषं जिगमिषौ सूर्ये शैशिरं घृतकम्बलम् ।
अपास्य देहाद्देवेभ्यः[5] पूजा कार्या प्रयत्नतः ॥

[6]कालिकापुराणे

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।
एतानि पञ्चरत्नानि विन्यसेल्लिङ्गमूर्धनि ॥
रत्नानां चाप्यभावे तु कर्षं कर्षार्धमेव वा ।
सुवर्णं योजयित्वा च तस्मिन्नेवोत्तरायणे ॥
विधिवच्च तथाभ्यर्च्य गव्येनाज्येन भूरिणा ।

1 शस्तान्यभिनवानि च—द, ब; सस्यानि विविधानि च—ज; सस्यान्यभिनवानि च—ना; शस्यान्यभिनवानि च—कृ. र.
2 प्रदातव्यास्तु—ब, द.
3 विप्राः सुभोजनैः—ज.
4 हे. का., ४१३.
5 देयाद्देवेभ्यः—हे. का.
6 हे. का., ४१३–४१४.

प्रक्षाल्य मर्दयित्वापि [1]दद्याच्च घृतकम्बलम् ॥
दत्वा चोपस्करं भूयो ब्राह्मणान् यतिभिः सह ।
संभोज्य दक्षयित्वा तु कल्पयेदनिवारितम् ॥
उपोष्य सर्वमेतद्धि[2] कुर्याद्भक्तिपुरःसरम् ।
पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्स्वयम् ॥
तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्तनं बुधः ।
देवतानां पितॄणां च उभाभ्यां तर्पणं तथा ॥
होमं तैश्च प्रकुर्वीत [3]सर्वदा चोत्तरायणे ।
तान् वै देवाय विप्रेभ्यो हाटकेन समं ददेत् ॥
सकृदेवं[4] करोत्येवं चित्तं शम्भौ निवेश्य यः ।
उत्तरायणमासाद्य नरः कस्मात्स शोचते ॥

'[5]कुलिशं' हीरकम् । 'दक्षयित्वा' दक्षिणया संपूज्य । 'कल्पयेत्' भोजनमिति शेषः । 'पारयेत्' पारणं कुर्यात् । तिलस्नानपारणयोर्नात्र क्रमो विवक्षितः । 'उभाभ्याम्' इति तादर्थ्ये चतुर्थी ॥

[6]ब्रह्मपुराणे

शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ।
महाजया तदा स्याद्धि[7] सप्तमी भास्करप्रिया ॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।

1 प्रदद्यात्—ब, ज, ना, द.
2 सर्वमेवैतत्—हे. का.
3 सर्वदैवोत्तरायणे—ना, हे. का.
4 यत्नादेव—हे. का.
5 Commentary reproduced by हे. का., ४१३–४१४.
6 हे. का., ४१४.
7 स्याद्धि—ब, द; सा वै—हे. का.

सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा ॥
यस्त्वस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम् ।
सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत् ॥
पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः ।
विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् ॥
कर्बुरेण विमानेन किङ्किणीजालमालिना ।
तेजसा रविसंकाशः कान्त्यात्रेयसमो भवेत् ॥
स्थित्वा तत्र चिरं कालं राजा भवति किंजयः ।
महाजयैषा कथिता सप्तमी त्रिपुरान्तक ॥
यामुपोष्य नरो भक्त्या [1]ह्यचलामब्जजां लभेत् ।
ततो याति परं ब्रह्म यत्र गत्वा न शोचति ॥

## अथ ग्रहणनिर्णयः

तत्र जाबालिः[2]

संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥

[3]चन्द्रसूर्योपरागस्य निमित्तत्वप्रतिपादनाज्ज्ञातस्यैव च निमित्तत्वाज्ज्ञानमात्रे प्राप्ते 'यावद्दर्शनगोचर' इति

1 अचलान् मङ्गलान् लभेत्—हे. का.

2 कृ. र., ६२५; हे. का., ३८८.

3 Quoted by कृ. र., ६२५–६२६; हेमाद्रिणा—"तत्र केचिदाहुः" इत्यारभ्य 'चन्द्रसूर्योपरागस्य' इत्यादि 'स्नानादिकं कर्तव्यम्' इत्यन्तमनूद्य, "तदयुक्तम्, चक्षुर्जनितज्ञानविषयविवक्षायाम्—'नेक्षेतोद्यन्तमादित्यं नास्तगं तु कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्' इति मनुना (४, ३७) गृहस्थस्य ग्रस्तादित्यदर्शननिषेधात् स्नानाद्यभावप्रसंगात्। तद्बाधे तु स एव दोषः" इति विस्तरेण दूषितम्। चण्डेश्वरस्तु (६२६–६२७) कल्पतरुकारमतं पारिजातादिदूषितं निरस्य प्रतिष्ठापयति। मित्रमिश्रस्तु वी. मि. समयप्रकाशे (१२१–१२६) विस्तरशो विचारयन् "समाने देशे चाक्षुषत्वयोग्यमुपरागं शास्त्रतो ज्ञात्वा तत्तत्काले स्नानं कुर्यात्" इति राद्धान्तयामास.

'राहुदर्शन' इति वचनाच्च चाक्षुषज्ञानविषयस्यैव निमित्तता। चाक्षुषज्ञाने दर्शनपदस्य मुख्यत्वात्। तेन न मेघादिच्छन्ने स्नानादिकं कर्तव्यम्। एवं ग्रस्तास्तमिते परेऽह्नि यन्मुक्तदर्शनं तच्चाक्षुषमेव[1] ॥

[2]विष्णुः—[६८, १, ३]

चन्द्रार्कोपरागे नाश्नीयात्। अमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा परेऽहनि ॥

[3]शातातपः

अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥
सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः।
धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत् ॥
[4]अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥

'अहोरात्रोषितः' पूर्वस्मिन् दिने कृतोपवासः[5]। अहोरात्रभोजनं तु फलार्थमिति भाउल्लस्मृतिः ॥

तथा

[6]नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्।

1 तदपि चाक्षुषमेव—ना.

2 कृ. र., ६२६.

3 कृ. र., ६२६; विष्णुशातातपौ—इति हे. का., ३८०.

4 विष्णुः—इति हे. का., ३८३.

5 अत्र केचिद् 'अहोरात्रोषितः पूर्वस्मिन् दिने कृतोपवास' इति व्याचक्षते तदयुक्तम्। चन्द्रसूर्यग्रहसंबद्धाहोरात्रपरित्यागेनाहोरात्रान्तरग्रहणे प्रमाणाभावात्।—हे. का., ३८३.

6 कृ. र., ६२६–६२७; हे. का., ३८०.

ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाच्च मुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
स्नात्वा दृष्ट्वापरेऽह्नयद्याद्ग्रस्तास्तमितयोस्तयोः ॥

'मुक्तयोः' सूर्यचन्द्रयोः । 'महानिशा' रात्रेः प्रथमार्धप्रहरादूर्ध्वं मुहूर्तचतुष्टयम् ॥

[1]ब्रह्मपुराणे

नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्ययोः ।
मुक्तयोश्च कृतस्नानः पश्चात्कुर्यात्स्ववेश्मनि[2] ॥

'कुर्याद्' इति, [3]अशनमिति विपरिणतमनुषज्यते ॥

[4]तथा

नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः ।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नातः श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ॥

[5]देवीपुराणे

कार्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसंगमे ।
मार्गे तु ग्रहणं प्रोक्तं देविकायां[6] महामुने ॥

1 कृ. र., ६२७; हे. का., ३७९.
2 पश्चाद्भुञ्ज्यात्स्ववेश्मनि—हे. का.
3 यत्र तु पश्चात्कुर्यादिति पाठस्तत्राशनमिति विपरिणतमनुषज्यते—हे. का., ३७९.
4 कृ. र., ६२८; हे. का., ३८३.
5 हे. का., ३८५-३८६.
6 वेदिकायां—ब, द.

पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ।
फाल्गुने वरुणा[1] पुण्या चैत्रे पुण्या[2] सरस्वती ॥
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।
ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ॥
श्रावणे सिन्धुनामा तु तथा भाद्रे च गण्डकी ।
आश्विने सरयूः श्रेष्ठा[3] भूयः पुण्या तु नर्मदा ॥
[4]गोदावरी महापुण्या [5]चन्द्रे राहुसमन्विते ।
सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने ॥
नर्मदातोयसंस्पर्शात् कृतकृत्या भवन्ति ते ।
ये सूर्ये सैंहिकेयेन ग्रस्ते रेवाजलं नराः ॥
स्पृशन्ति चावगाहन्ति [6]न ते प्रकृतिमानुषाः ।
स्मृत्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम् ॥
स्पृष्ट्वा गोमेधतुल्यं तु पीत्वा सौत्रामणिं लभेत् ।
स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः ॥
रविचन्द्रोपरागे तु अयने चोत्तरे तथा ।
एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती ॥
शिवादित्यफलं यच्च मण्डले समुदाहृतम् ।
सग्रहे मण्डले योगे तदपि प्राप्नुयान्नरः ॥
ऊषरारण्यक्षेत्रेषु पुण्यं यत्समुदाहृतम् ।
तदत्र कालमाहात्म्यादुपरागेऽधिकं भवेत् ॥

1 लवना—उ.
2 मासे—ब, द; चैत्र—हे. का.
3 पुण्या—ज, ना.
4 कृ. र., ६२८.
5 कार्तिके तु प्रकीर्तिता—ब, द.
6 न सा प्रकृतिमानुषी—ब, द; न ते प्रकृतिमानवाः—कृ. र.; न सा प्रकृतिमानवी—हे. का.

## [युगादयो युगान्ताश्च]

[1]ब्रह्मपुराणे

[2]वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
[3]कार्तिके शुक्लपक्षे तु त्रेता तु नवमेऽहनि ॥
[4]अथ भाद्रपदे कृष्णत्रयोदश्यां[5] तु द्वापरम् ।
माघे च पौर्णमास्यां तु घोरं कलियुगं तथा ॥
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ।
[6]सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु ॥
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य तु ।
ज्ञेयश्च वृषसंक्रान्त्यां द्वापरान्तश्च संज्ञया ॥
तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च ।
युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते ॥

## [महाकार्तिक्यादि]

तथा

[7]पुण्या महाकार्तिकी स्याज्जीवेन्द्वोः कृत्तिकास्थयोः ।
मघास्थयोश्च जीवेन्द्वोर्महामाघीति कथ्यते ॥

तथा

तिलद्वादशिसंज्ञा च माघे कृष्णचतुर्दशी ।

[8]तथा

आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् ।

1 हे. का., ६५०.
2 कृ. र., १५७.
3 कृ. र., ४२०.
4 कृ. र., २६४.
5 कृष्णचतुर्दश्यां—कृ. र.
6 हे. का., ६५६.
7 कृ. र., ४३०.
8 कृ. र., ४३०.

महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥
यदा याम्यं च भवति ऋक्षं तस्यां तिथौ क्वचित् ।
तिथिः सापि महापुण्या मुनिभिः परिकीर्तिता ॥
प्राजापत्यं तथा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

'आग्नेयं' कृत्तिका । 'याम्यं' भरणी । 'प्राजापत्यं' रोहिणी । एतन्नक्षत्रयोगेनापि महत्वप्रतिपादनात् कृत्तिकान्ते बृहस्पतिचन्द्रयोगे यन्महत्वाभिधानं तन्महत्वातिशयार्थम् ॥

[1]मन्दे चार्के गुरौ वापि वारेष्वेतेषु चैत्रिकी ।
अत्राश्वमेधिकं पुण्यं [2]स्नानतश्च लभेन्नरः ॥
दानमक्षयतां याति पितॄणां तर्पणं तथा ।

'मन्दः' शनैश्चरः ॥

[3]विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः [4]पद्मको नाम पुष्करे ह्यतिदुर्लभः ॥

[5]विष्णुः—[९०, ९-१०]

दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा ॥
तस्यां दानोपवासाद्यमक्षयं परिकीर्तितम् ।
तथैव द्वादशी शुक्ला यान्या श्रवणसंयुता ॥

1 कृ. र., १३९-१४० ; हे. का., ६७७.
2 स्नातश्च लभते नरः—ब, ज, ना, द, कृ. र.
3 कृ. र., ४३० ; हे. का., ६७९.
4 पुण्यको—उ.
5 कृ. र., ४३१.

'यस्यां' पौर्णमास्यां माससंज्ञाप्रवृत्तिनिमित्ते नक्षत्रे चन्द्रबृहस्पती भवतः, 'सा' सर्वा 'महती' महाफलेत्यर्थः। महाकार्तिकीमहामाघ्योर्माससंज्ञैकनक्षत्रस्थत्वेन महत्त्वस्योक्तेरन्यत्रापि माससंज्ञैकनक्षत्रस्थत्वेन महत्त्वम् ॥

## [मन्वन्तरादयः]

[1]मत्स्यपुराणे—[१७, ६]

आश्वयुक्शुक्लनवमी द्वादशी कार्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथा [2]षष्ठी च पूर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्येष्ठी पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ।

अमावास्याश्रावणाष्टमीव्यतिरिक्ताः सर्वास्तिथयः शुक्लाः ॥

[3]भविष्यपुराणे

महादेव उवाच—

पुष्ये मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा तु सा महापुण्या महाभद्रेति कीर्तिता ॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥

1 हे. का., ६६९.
2 तथाषाढी च पूर्णिमा—ज, ना, मुद्रितपाठश्च.
3 कृ. र., ४८०.

तस्मात्तस्यां महादेवि पूज्योऽहं विधिवद्बुधैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
[1]रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ॥
यद्बाल्ये यच्च कौमारे यौवने वार्धके च यत् ।
सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥
तत्क्षालयति भूतेशं तस्यामभ्यर्च्य भक्तितः ।
होमजप्यादिदानानां फलं च शतसंमितम् ॥
स प्राप्नोति न संदेहो यच्चान्यन्मनसेप्सितम् ।
उपवासस्तु तत्रोक्तो महापातकनाशनः ॥
[2]पौषे मासे यदा देवि अष्टम्यां नगजे शुभे ।
नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते ॥

'रौद्रम्' आर्द्रम् ॥

तदा तु सा महापुण्या जयन्ती चाष्टमी शुभा ।
तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् ॥
[3]तत्सर्वं कोटिगुणितं [4]हुतं भवति कृत्स्नशः ।
तस्मान्मत्पूजनं देवि कर्तव्यं विधिवन्नरैः ॥
[5]पौषे मास्यष्टमी पुण्या चैत्रे मासि त्रयोदशी ।
कार्तिके पौर्णमासी च द्वादशी कार्तिकोत्तरे ॥

'कार्तिकोत्तरे' मार्गशीर्षे ॥

1 कृ. र., २५८.
2 कृ. र., ४८०.
3 सर्वं कोटिगुणं देवि—ना, कृ. र.
4 कृतं भवति—ना, कृ. र.
5 कृ. र., ५४३.

[1]येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ ।
पुण्या चेयं पापहरा शिवा शान्ता शुभा नृप ॥
स्नानदानादिकं किंचित् सर्वमक्षयमुच्यते[2] ।
[3]योऽस्यां पश्यति गाङ्गेयं दक्षिणापथवासिनम्[4] ॥
ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः ।
[5]तस्मात्तस्यां सदा पश्येत्कार्तिकेयं सदैव हि ॥
[6]त्रिःकृत्वा दक्षिणामाशां गत्वा यः श्रद्धयान्वितः ।
पूजयेद्देवदेवेशं स गच्छेच्छान्तिमन्दिरम् ॥
पुण्या भाद्रपदे प्रोक्ता पञ्चमी नागपञ्चमी ।

'गाङ्गेयं' कार्तिकेयम् । 'शान्तिमन्दिरं' शिवमन्दिरम् । 'त्रिःकृत्वा दक्षिणामाशां गत्वा' इत्युक्तेर्विन्ध्योत्तरतो गच्छतामेतत्फलम् ॥

[7]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ [8]नियतकालकाण्डे पर्वकृत्यानि ॥

1 कृ. र., २७५–२७६.
2 किंचित्तस्यामक्षयमुच्यते—कृ. र.
3 येऽस्यां पश्यन्ति—कृ. र.
4 दक्षिणापथमाश्रितम्—कृ. र.
5 तस्मादस्यां—कृ. र.
6 कृ. र., २७७.
7 इति कृत्यकल्पतरौ नैयतकालिककृत्यकाण्डे पर्वकृत्यनिर्णयः—ब, द ; इति भट्टश्रीलक्ष्मीधरविरचिते—ज.
8 नियतकालिककृत्यकाण्डे—ज.

# अथ तिथिकृत्यानि

[1]ब्रह्मपुराणे[2]

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु यदा सूर्योदये सति ॥
ततः प्रभृति यो धर्मः पूर्वैः[3] पूर्वतरैः कृतः[4] ।
अद्यापि गूढः सुतरां कर्तव्योऽसौ प्रयत्नतः ॥

'गूढो' गुप्तः ॥

तत्र कार्या महाशान्तिः सर्वकल्मषनाशिनी ।
सर्वोत्पातप्रशमनी कलिदुःस्वप्ननाशिनी ॥
आयुःप्रदा पुष्टिकरी धनसौभाग्यवर्धिनी ।
मङ्गल्या च पवित्रा च लोकद्वयसुखावहा ॥
यस्यामादौ[5] च संपूज्यो ब्रह्मा कमलसंभवः ।
पाद्यार्घ्यधूपपुष्पैश्च वस्त्रालंकारभोजनैः ॥
होमैर्बल्युपहारैश्च तथा ब्राह्मणतर्पणैः ।
तथा क्रमेण देवेभ्यः पूजा कार्या पृथक् पृथक् ॥

1 कृ. र., १०३–१०८.
2 कालिकापुराणे—ब, द.
3 पूर्व:—कृ. र.
4 स्मृतः—कृ. र.
5 तस्यामादौ—ज.

'देवेभ्यो' वक्ष्यमाणेभ्यः कालादिभ्यः ।

कृत्वोंकारं नमस्तेऽस्तु[1] कुशोदकतिलाक्षतैः[2] ।
पुष्पधूपप्रदीपैश्च भोजनैश्च यथाक्रमम् ॥
मन्त्रं संपूजनार्थं तु [3]बहुरूपं पठेत्ततः ।
ॐ नमो[4] ब्रह्मणे तुभ्यं कालाय च महात्मने ॥
नमस्तेऽस्तु [5]महेशाय त्रुटये च नमो नमः ।
भवाय[6] च नमस्तुभ्यं नमस्तेऽस्तु क्षणाय च ॥
नमो नमस्ते काष्ठायै कलायै चाथ सर्वदा ।
नाडिकायै [7]सुषुम्नायै मुहूर्ताय नमो नमः ॥
नमो निशाभ्यः पुण्याभ्यो दिवसेभ्यश्च नित्यशः ।
पक्षाभ्यां चाथ मासेभ्य ऋतुभ्यः षड्भ्य एव च ॥
अयनाभ्यां च पञ्चभ्यो वत्सरेभ्यश्च सर्वदा ।
नमः कृतयुगादिभ्यो ग्रहेभ्यश्च नमो नमः ॥
अष्टाविंशतिसंख्येभ्यो नक्षत्रेभ्यो नमो नमः ।

'अष्टाविंशतिः' नक्षत्राणामभिजिता सह ॥

राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एव च ॥
प्रतिवर्षाधिपेभ्यश्च विज्ञानेभ्यो नमः सदा ।
नमोऽस्तु कुलनागेभ्यः सानुयातृभ्य एव च ॥

'सानुयातृभ्यः' सानुचरेभ्यः ॥

1 नमोऽन्तं च—कृ. र.
2 कुशाक्षततिलोदकैः—ज.
3 दुर्गरूपं—ब, द.
4 नमोऽस्तु—कृ. र.
5 निमेषाय—ब, ना, द, कृ. र.
6 लवाय च—ज, ना; नराय—कृ. र.
7 सुपक्ष्मायै and सुसूक्ष्मायै—कृ. र.

नमश्चतुर्दशभ्यस्तु मनुभ्यश्च पुनः पुनः ।
नमः पुरंदरेभ्यश्च तत्संख्येभ्यो नमो नमः ॥

'तत्संख्येभ्यः' [1]चतुर्दशसंख्येभ्यः ॥

पञ्चाशते नमो नित्यं दक्षकन्याभ्य एव च ।
नमोऽदित्यै[2] सुवृत्तायै[3] जयायै[4] चाथ सर्वदा ॥
कृशाश्वाय[5] नमस्तुभ्यं सर्वास्त्रजनकाय च ।
नमोऽस्तु बहुपुत्राय पत्नीभिः सहिताय च ॥
नमो वृध्यै तथा ऋध्यै निद्रायै धनदाय च ।
नलकूबरयक्षाय[6] गुह्यकस्वामिने नमः ॥
नमोऽस्तु शङ्खपद्माभ्यां [7]निधिभ्यामपि नित्यशः ।
भद्रकाल्यै नमो नित्यं सुरभ्यै च[8] नमो नमः ॥
वेदवेदाङ्गवेदान्तविद्यास्थानेभ्य एव च ।
नागयक्षसुपर्णेभ्यो नमोऽस्तु गरुडाय च ॥
अरुणाय नमस्तुभ्यं सप्तद्वीपेभ्य एव च ।
सप्तभ्यश्च समुद्रेभ्यः सागरेभ्यश्च सर्वदा ॥
उत्तरेभ्यः कुरुभ्यश्च नमो [9]हैरणमयाय च ।
भद्राश्वकेतुमालाभ्यां नमः सर्वत्र सर्वदा ॥
इडावृत्ताय च नमो हरिवर्षाय चैव हि ।
नमः किंपुरुषेभ्यश्च भारताय नमो नमः ॥

1 तत्संख्याकेभ्यः चतुर्दशसंख्याकेभ्यः—ब, द.
2 नमो नित्यं—ब, ना, द, कृ. र.
3 सुव्रतायै—द, ब, कृ. र.
4 प्रजायै—कृ. र.
5 दशाश्वाय—ब, द ; कुशाम्राय—उ.
6 दक्षाय—ब, द.
7 निधिभ्यामथ सर्वशः—ना ; निधिभ्यामथ सर्वदा—कृ. र.
8 सरस्वत्यै नमो नमः—कृ. र.
9 हैरण्यकाय—कृ. र. ; हैरम्बनाय—उ.

नमो भारतदेवेभ्यो नागेभ्यश्चाथ सर्वदा ।
पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमो नमः ॥
कालाग्निरुद्रशेषाभ्यां हरये क्रोडरूपिणे ।
सप्तभ्यस्त्वथ लोकेभ्यो महाभूतेभ्य एव च ॥
तमसे बुद्धये चैव नमः प्रकृतये तथा ।
पुरुषायाभिमानाय नमोऽस्त्वव्यक्तमूर्तये ॥
हिमवत्पुरुषेभ्यश्च पर्वतेभ्यो नमः सदा ।
पुराणीभ्यश्च गङ्गाभ्यः सप्तभ्यश्च नमो नमः ॥
नमोऽस्त्वथ तनीभ्यश्च सप्तभ्यश्चाथ सर्वदा ।
नमोऽस्तु पुष्करादिभ्यस्तीर्थेभ्यश्च पुनः पुनः ॥
निम्नगाभ्यो नमो नित्यं वितस्तादिभ्य एव च ।
चतुर्दशभ्यो देवेभ्यो [1]धारणेभ्यो नमो नमः ॥
नमो धात्रे विधात्रे च छन्दोभ्यश्च नमो नमः ।
सुरेशैरावणाभ्यां[2] च नमो भूयो नमो नमः ॥
अप्सरोभ्यः सोमपेभ्यो देवेभ्यश्च नमो नमः ।
नमस्तथोच्चैःश्रवसे ध्रुवाय च नमो नमः ॥
नमोऽस्तु धन्वन्तरये[3] शस्त्रास्त्राभ्यां [4]नमः सदा ।
विनायककुमाराभ्यां विघ्नेभ्यश्च नमः सदा ॥
[5]शिखाय च विशाखाय नैगमाय नमो नमः ।
नमः स्कन्दग्रहेभ्यश्च स्कन्दमातृभ्य एव च ॥
ज्वराय रोगपतये[6] भस्मप्रहरणाय च ।

1 वरुणेभ्यो नमो नमः—ना.
2 सुरेशैरावताभ्यां—ब, द, ज ; सुरभ्यैरावणानां—कृ. र.
3 नमो भारतदेवेभ्यः—ब, द.
4 च सर्वदा—ना.
5 शाखाय च—ना ; शिवाय—उ ; शिखाय च विशिखाय नैगमेयाय वै नमः—कृ. र.
6 ज्वराय च गोपतये—कृ. र.

ऋषिभ्यो वालखिल्येभ्यः कश्यपाय नमः सदा ॥
अगस्तये[1] नारदाय व्यासादिभ्यो नमो नमः ।
[2]असोमपेभ्यश्च नमस्तुषितेभ्यो नमः सदा ॥
आदित्येभ्यो नमो नित्यं द्वादशभ्यश्च सर्वशः ।
एकादशभ्यो रुद्रेभ्यः सगणेभ्यो नमो नमः ॥
दशभ्यो विश्वेदेवेभ्यः पुण्येभ्यश्च नमः सदा ।
नमो वसुभ्यस्त्वष्टभ्यो दिव्ययोगिभ्य एव च ॥
द्वादशभ्यो भृगुभ्यश्च नमः सर्वत्र सर्वदा ।
दशभ्यस्त्वङ्गिरोभ्यश्च तपस्विभ्यो नमो नमः ॥
नमो नासत्यदस्राभ्यामश्विभ्यां नित्यमेव हि ।
साध्येभ्यो द्वादशभ्यश्च पुराणेभ्यो नमः सदा ॥
एकोनपञ्चाशद्भ्योऽथ मरुद्भ्यश्च नमो नमः ।
शिल्पाचार्याय देवाय नमस्ते विश्वकर्मणे ॥
अष्टभ्यो लोकपालेभ्यः सायुधेभ्यश्च सर्वदा ।
आयुधेभ्यो वाहनेभ्यः पुराणेभ्यो नमः सदा ॥[3]
दैत्यराक्षसगन्धर्वपिशाचेभ्यश्च नित्यशः ।
पितृभ्यः सप्तभेदेभ्यः प्रेतेभ्यश्च नमः सदा[4] ॥
सुपूज्येभ्यश्च[5] देवेभ्यो भागवतेभ्य एव च ।
नमस्ते [6]बहुरूपाय विष्णवे परमात्मने ॥
अथ किं बहुनोक्तेन मन्त्रेणानेन [7]चार्चयेत् ।
प्राङ्मुखोदङ्मुखो वापि देवानुद्दिश्य पूर्ववत् ॥

1 अगस्त्याय—कृ. र.
2 उ repeats "अप्सरोभ्यः सोमपेभ्यो देवेभ्यश्च तथा नमः" before this.
3 कृ. र., adds here : आसनेभ्यो दुन्दुभिभ्यो देवीभ्यश्च नमो नमः ।
4 नमो नमः—ज, ना.
5 असूक्ष्मेभ्यश्च—ब, द ; सुसूक्ष्मेभ्यश्च—ज, ना, कृ. र.
6 वर्णरूपाय—कृ. र.
7 पूजयेत्—ना.

अर्घैः पुष्पैश्च धूपैश्च वस्त्रैर्माल्यैश्च हृष्टवान् ।
धनधान्यान्नविभवैर्दक्षिणाभिश्च सर्वदा ॥
इतिहासपुराणानां प्रवक्तॄंश्च द्विजोत्तमान् ।
कालज्ञान् कालभेदज्ञान् भृत्यान् संबन्धिबान्धवान् ॥
अनेनैव तु मन्त्रेण स्वाहान्तेन पृथक् पृथक् ।
यविष्ठायाग्नये होमः कर्तव्यः सर्वतृप्तये ॥
वेदवच्चाहुतिं दत्वा स्थाने प्राधानिके सति ।

'वेदवच्चाहुतिः' इति वेदेतिकर्तव्यतायुक्ता । 'स्थाने प्राधानिके' प्रधानाहुतिस्थाने, आज्यभागान्त इति यावत् ॥

आत्मशोभा ततः कार्या मङ्गलालम्भनं तथा ॥
भोजयित्वा द्विजान् सर्वान् मुनीन् संबन्धिबान्धवान् ।

'मुनयो' अत्र नियतात्मानः ॥

विशेषेण तु भोक्तव्यं कार्यश्चापि महोत्सवः ॥
नवसंवत्सरारम्भे सर्वसिद्धिप्रवर्तकः ।
[1]शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानन ॥
श्रीर्ब्रह्मलोकान्मानुष्यं संप्राप्ता केशवाज्ञया ।
ततस्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति ॥
एषा श्रीपञ्चमी [2]प्रोक्ता विष्णुलोकगतिप्रदा ।
अमावास्यायां संभूतः स्कन्दः पूर्वं हुताशनात्[3] ॥
जातः पर्वणि षष्ठ्यां तु शुक्लायां चैत्रनामनि ।

'चैत्रनामनि' मासे ॥

1 कृ. र., ११९.
2 कार्या—ब, द.
3 कुशासनात्—उ.

सेनापत्याभिषिक्तस्तु देवानां ब्रह्मणा स्वयम् ॥
जितवान् तारकं दैत्यं क्रौञ्चं शक्त्या विभेदनात्[1] ।
तस्मात् [2]सर्वत्र विधिना [3]स्कन्दो जातीसुगन्धिभिः ॥
दीपालंकारवस्त्रान्नकुक्कुटैः पूज्य एव हि ।

'कुक्कुटः' क्रीडार्थं दातव्यः न तु मारणीयः ॥

अब्जैः क्रीडनकैरन्यैर्घण्टाचामरदर्पणैः ॥
सर्वासु शुक्लषष्ठीषु पूज्यो वा श्रद्धया नरैः ।
आरोग्यकामैर्बालानां पुत्रवद्भिर्विशेषतः ॥
[4]चैत्रे नवम्यां शुक्लायां भद्रकाली महाबला ।
योगिनीनां तु सर्वासामाधिपत्येऽभिषेचिता ॥
तस्मात्तां पूजयेत्तत्र सोपवासो जितेन्द्रियः ।
विचित्रैर्बलिभिर्भक्त्या सर्वासु नवमीषु च ॥
एकादश्यां ततः स्त्रीभिर्देवी पूज्या च रुक्मिणी ।
पौराणी योगिनी काचिच्छक्तिर्नारायणाङ्गजा ॥
पुष्पालंकारधूपान्नशाकैश्च विविधैरपि ।
अपूपैर्विविधाकारैर्वह्निब्राह्मणतर्पणैः ॥
तत्रापराह्णे वास्तुश्च वेश्मनो वंशधारकः ।
अर्घैर्माल्यैश्च वस्त्रैश्च[5] पूज्यो रङ्गैः सुचित्रितैः ॥
प्रदोषसमये तत्र [6]सोपवासो जितेन्द्रियः ।
तिलसिद्धार्थकैर्युक्तं गृहीत्वा वेश्मनो बहिः ॥
देयं दिक्षु च पर्युक्षेदुष्टप्राणिनिवारणम् ।

1 विभेदतः—ब, द ; बिभेद च—ज, कृ. र.
2 स तत्र—ब, ज, द, कृ. र.
3 स्कन्दो माल्यैः—ब, ज, द.
4 कृ. र., १२७–१२९.
5 नैवेद्यैर्वस्त्रदानैश्च—ब, द.
6 पञ्चगव्यं विधानवत्—कृ. र.

'पर्युक्षेत्' तदेव पञ्चगव्यं प्रतिदिशं क्षिपेत् ॥

कृतोपवासो द्वादश्यां ततो विष्णुं च पूजयेत् ॥
अपराह्णे तु तत्रैव कामदेवं प्रपूजयेत् ।
पटस्थं विविधैर्माल्यैर्गन्धैरुच्चावचैस्तथा ॥
ततस्तु शीतलं तोयं पुण्यमादाय वाग्यतः ।
कामदेवाग्रतः स्थाप्यं पुष्पच्छन्ने महाघटे ॥
अर्घादिपूजितं सम्यक् प्रशस्तैर्वृक्षपल्लवैः ।
तस्यां राज्यां व्यतीतायां ततो गुप्ततरे गृहे ॥
अनर्काभ्युदिते काले [1]स्नाप्याः स्युस्तेन वारिणा ।

'स्नाप्याः' वक्ष्यमाणा दयिता एव ॥

[2]त्रयोदश्यां तु दयिताः स्वयं भर्त्रा प्रियेण च ॥
आत्मपूजा च कर्तव्या पूजनीया गृहे स्त्रियः ।
त्रयोदशीषु सर्वासु कामः पूज्योऽथ सर्वदा ॥
यात्रोत्सवश्च विधिवत् कर्तव्यश्चाथ विष्णवे ।
[3]उपोष्य च[4] चतुर्दश्यां पौर्णमास्यां हरिं व्रजेत् ॥
पौर्णमास्यां निकुम्भश्च पिशाचैः सहितो बली ।
याति योद्धुं पिशाचांश्च सिकताद्वीपवासिनः ॥
तदर्थं गच्छतां तेषां मध्याह्ने तु गृहे गृहे ।
पूजा कार्या प्रयत्नेन नित्यं शक्त्या यथाक्रमम् ॥
पिशाचं मृन्मयं कृत्वा रम्यं तृणमयं च वा ।
गन्धैर्माल्यैस्तथा वस्त्रैरलंकारैर्मनोहरैः ॥

1 'स्थाप्याः स्युस्तेन वारिणा' इति पठित्वा, 'स्थाप्याः' मूले वक्ष्यमाणा देवता एव इति व्याख्यातम्—कृ. र.

2 कृ. र., १३७.

3 कृ. र., १३८—१३९.

4 उपोष्याथ—ब, ज, ना, द, कृ. र.

[1]भक्ष्यैरुल्लेपिकापूपैर्मांसैर्दिव्यैश्च [2]पानकैः ।
स्वजातिविहितैः [3]पुष्पैर्नैवेद्यैश्च पृथग्विधैः ॥
आयुधैर्विविधाकारैश्छत्रोपानहयष्टिभिः ।
शूकान्नपूरिकायुक्तैः स्थिरैर्भक्ष्यैश्च भस्त्रया ॥
'शूकान्नं' यवादि । 'भस्त्रा' चर्मपुटः ॥
शिक्यकुद्दालपिटकैर्बद्धनद्धैश्च चर्मणा ।
'बद्धनद्धैश्च चर्मणा' चर्मबन्धेन बद्धैः ॥
तन्त्रीवाद्यैर्मनोज्ञैश्च तथा पान्थोपयोगिभिः ॥
'पान्थोपयोगिभिः' छत्रोपानत्प्रभृतिभिः ॥
मध्याह्ने तं तु संपूज्य प्राप्ते चन्द्रोदये पुनः ।
पूर्ववत् पूजयेत्तं तु वित्तशाठ्यविवर्जितः ॥
ततः कृतस्वस्त्ययनान् ब्राह्मणांस्तु विसर्जयेत् ।
तमनुव्रज्य नियतं[4] द्वितीये दिवसे सति ॥
गृहाददूरे यो यस्य पर्वतस्तमथारुहेत् ।
पुनर्गृहं प्रविश्यैवं कर्तव्यः सुमहोत्सवः ॥
गीतवादित्रनिर्घोषैर्जनकोलाहलैस्तथा ।
कृत्वा तृणमयैः सर्पं दृढैः काष्ठैस्तु वेष्टितम् ॥
क्रीडितव्यं पुनर्ग्रामे नगरेषु च सर्वदा ।
संत्रासो दुष्टसर्पाणां [5]तत्क्षणाद्यैर्न जायते ॥
त्रिभिश्चतुर्भिर्दिवसैः कर्तव्यं खण्डखण्डशः ।

1 भक्ष्यैः कलेपिकापूपैः—ना ; भक्ष्यैरन्धोपिकापूपैः—कृ. र.
2 पायसैः—ब, ज, द.
3 पेयैः—कृ. र.
4 तमनुव्रजनीयं तु—कृ. र.
5 तत्क्षणाद्येन जायते—ब, ज, द, कृ. र.

सर्वापस्मारशमनं[1] तच्च खण्डं गृहे गृहे ॥
पूजितव्यं सुगुप्ते तु रक्षितव्यं च वत्सरम् ।
[2]इरा नामाप्सराः[3] पूर्वं सक्ता विश्वावसोर्यदा ॥
नृत्यगीतैस्तथा देवान्नास्तुवन्मन्दचेतना ।
वासवेन ततः शप्ता जाता रम्ये[4] हिमाचले ॥
मनोज्ञपुष्पतां प्राप्ता कल्पे वैवस्वते सति ।
अथ फुल्लां[5] तु तां दृष्ट्वा वैशाखे मासि माधवे ॥
स्त्रीपुत्रमित्रभृत्यैश्च सहितः सुसमाहितः ।
सुवासाः स्वनुलिप्ताङ्गः परितुष्टेन चेतसा ॥
समीपस्थो विधानेन तामादौ [6]यजते क्रमात् ।
अर्घैः पुष्पैर्भक्ष्यभोज्यैर्दीपधूपैः सुगन्धिभिः ॥
ततः [7]प्रदक्षिणां कृत्वा दिव्यामप्सरसं च ताम् ।
गृहीत्वा परया भक्त्या ब्रह्मणे च निवेदयेत् ॥
तत्पुष्पाणां सहस्रेण विष्णवे च निवेदयेत् ।
ततः प्रदक्षिणीकृत्य दिव्यामप्सरसं च ताम् ॥
इह लोके च पुष्ट्यर्थं स्वर्गायान्ते च सर्वदा ।
अथ रुद्रेन्द्रचन्द्रार्कदेवनागेभ्य एव च ॥
लक्ष्म्यै क्षीरोदकन्यायै दुर्गायै कश्यपाय च ।
नीलाय नागपतये ब्राह्मणेभ्यस्ततः क्रमात् ॥
स्त्रीपुत्रमित्रभृत्येभ्यो ज्येष्ठपुत्रक्रमेण वा ।

1 सर्पोपसर्पशमनं—कृ. र.
2 कृ. र., १५०–१५१.
3 तारा नामाप्सराः—द, ब.
4 जातारण्ये—कृ. र.
5 अर्थपूर्णा—द, ब ; अथ पूर्णा—ज.
6 पूजयेत्—कृ. र.
7 प्रदक्षिणीकृत्य—ब, ज, कृ. र.

रक्तसूत्रेण सुप्रोतां स्रजं च परमात्मने ॥
निवेदयित्वा तां देवीं सुगन्धां सर्ववल्लभाम् ।
तत्रैव भोजनं भुङ्क्ते सभृत्यज्ञातिबान्धवः ॥
तत्पुष्पाढ्यं पिबेत्पानं स्वजातिविहितं शुचिः ।
शृण्वंश्च गीतवाद्यादि पश्यंश्च नटनर्तकान् ॥
[1]वैशाखे मासि शुक्लायां[2] तृतीयायां जनार्दनः ।
यवानुत्पादयामास युगं चारब्धवान् कृतम् ॥
ब्रह्मलोकत्रिपथगां पृथिव्यामवतारयत् ।
तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् ॥
यवान् दद्याद्विजातिभ्यः प्रयतः प्राशयेद्यवान् ।
पूजयेच्छङ्करं गङ्गां कैलासं तु हिमाचलम् ॥
भगीरथं च नृपतिं सागराणां सुखावहम् ।
स्नानं दानं ततः श्राद्धं जपहोमादिकं च यत् ॥
श्रद्धया क्रियते तत्र तदानन्त्याय कल्पते ।
सिन्धोस्तीरे विशेषेण सर्वमक्षयमुच्यते[3] ॥
[4]वैशाखे शुक्लसप्तम्यां जाह्नवी जह्नुना पुरा ।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥
तां तु पूजयते[5] देवीं [6]गङ्गां गगनमेखलाम् ।

1 कृ. र., १५४.
2 वैशाखशुक्लपक्षे तु—कृ. र.
3 ब्राह्मे—वैशाखे शुक्लपक्षे तु षष्ठी स्याद्भरतर्षभ ।
तस्यां स्नानं च दानं च महापातकनाशनम् ॥
वैशाखे शुक्लसप्तम्यां—ज.
4 कृ. र., १५९.
5 तां तत्र पूजयेत्—ब, ज, द, कृ. र.
6 तां तु तत्र पूजये.

देवीपुराणे
वैशाखे मासि राजेन्द्र रोहिण्यर्क्षे प्रपूजयेत् ।
उदकुम्भप्रदानेन सोऽश्वमेधफलं लभेत् ॥

अष्टाविंशतिमे प्राप्ते विष्णुः कलियुगे सति ॥
शाक्यान् विनष्टधर्मांश्च बुद्धो भूत्वाप्रवर्तयत् ।
तत्र पूज्यो भविष्योऽसौ [1]पुष्पाद्यैर्दिवसत्रयम् ॥
सर्वौषधैः सर्वगन्धैः [2]सर्वरत्नैश्च सर्वदा ।
बुद्धार्चास्नापनं कार्यं [3]शास्त्रोक्तैर्विविधैः शुभैः ॥
सुविचित्राणि कार्याणि चैत्यदेवगृहाणि च ।
पूज्याः शाक्याश्च यतयश्चीवराहारपुस्तकैः[4] ॥
पुष्पवस्त्रान्नदानं च देयं दीनजनस्य च ।
त्रिदिनं चोत्सवः कार्यो नटनर्तकसंकुलः ॥
[5]वैशाख्यां पौर्णमास्यां तु सृष्टाः [6]सकलयोनिना ।
तिलाः कृष्णाश्च गौराश्च तृप्तये सर्वदेहिनाम् ॥
तस्मात्कार्यं तिलैः स्नानं तत्राग्नौ जुहुयात्तिलान् ।
निवेदयेच्च विधिवत्तिलपात्रं च विष्णवे ॥
तिलतैलेन दीपाश्च देया देवेभ्य एव च ।
सोदकैश्च तिलैः सार्धं[7] कर्तव्यं पितृतर्पणम् ॥

अग्निपुराणे

यानं वाश्वतरं युक्तं सर्वकामफलप्रदम् ।
उपतिष्ठति राजेन्द्र सर्वरत्नविभूषितम् ॥
यो ददाति च विप्राय तृतीयायामुपानहौ ।
वैशाखे मासि राजेन्द्र सच्छत्रं करकान्वितम् ॥
न तस्य मानुषो दाहो मर्त्यलोकेषु जायते ।
देवी गङ्गां गगनमेखलाम् ॥

अष्टाविंशतितमे—ज.
1 षष्ठयादिदिवसत्रयम्—ना ; पुष्पादिदिवसत्रयम्—उ ; पुष्यादिदिवसत्रयम्—कृ. र.
2 सर्वमाल्यैश्च—ना.
3 शाक्योक्तैर्वचनैः शुभैः—ब, ज, द, कृ. र.
4 पुस्तकाहारचीवरैः—कृ. र.
5 कृ. र., १६३–१६४.
6 कमलयोनिना—ब, ज, द, कृ. र.
7 श्राद्धं—ब, ना, द ; स्नानं—कृ. र.

[1]तिलैः समधुभिर्युक्तं ब्राह्मणेभ्यश्च भोजनम् ।
दातव्या दक्षिणा चापि तिलैर्मधुयुतैः सह ॥
मन्त्रं जपेच्च पौराणं पारंपर्यक्रमागतम् ।
"ॐ तिलाः सोमदेवत्याः सुरैः सृष्टाश्च गोसवे ॥
स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः ।"
दद्यादनेन मन्त्रेण तिलपात्राणि तत्र च ॥
सप्तभ्यस्त्वथ पञ्चभ्यो ब्राह्मणेभ्यस्तु कीर्तयेत् ।
प्रीयतां धर्मराजश्च देवांश्चान्यांस्तथापि वा ॥
एवं कृते स मुक्तः स्यात्पापैर्जन्मशतार्जितैः ।

'प्रीयतां धर्मराज' इति मन्त्रं 'कीर्तयेत्'। 'देवांश्चान्यान्' प्रीयतां वासुदेव इत्यादि कीर्तयेत् ।

तथा च विष्णुः—[९०, १०]

[2]वैशाख्यां पौर्णमास्यां तु ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः संतर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति॥ इति ।

[3]ज्येष्ठकृष्णचतुर्दश्यां कृष्णवर्णा तु रेवती ॥
जाता जगति [4]तस्यां तां कृष्णैः पुष्पैश्च पूजयेत् ।
[5]ज्येष्ठशुक्लचतुर्थ्यां च जाता पूर्वमुमा सती ॥
तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये ।
उपहारैश्च विविधैर्गीतवादित्रनिःस्वनैः[6] ॥

1 तिलैश्च—ब, ज, द.
2 वैशाखी विशाखायुता चेत्तस्यां ब्राह्मणसप्तकं—मु. विष्णुः.
3 कृ. र., १८४.
4 तस्मात्तां—ज, कृ. र.
5 कृ. र., १८५.
6 गीतनृत्योत्सवादिभिः—ज ; नृत्यगीतैस्सवादितैः—ना ; गीतनृत्यैः सवादितैः—कृ. र.

होमैः पयोभिर्वस्त्रैश्च कुन्दपुष्पैः सुगन्धिभिः ।
[1]शुक्लाष्टम्यां पुरा जाता शुक्ला देवी महाशनिः ॥
वधाय दानवेन्द्राणां शुक्लपक्षे ततो यजेत्[2] ।
[3]द्वादश्यां शुक्लपक्षे तु विशोका विष्णुना पुरा ॥
प्रतिष्ठिता शुभैर्माल्यैस्तस्मात्तां तत्र पूजयेत् ।
[4]शास्त्रेषु वेदाः संभूताः पुरा ज्येष्ठ्यां यदा भुवि ॥
तदा तान् पूजयेत्तत्र वित्तशक्त्या प्रयत्नतः ।
नवैर्यवान्नैः पितृभिः सह देवैः प्रपूज्य च ॥
ततोऽङ्गलिप्तः स्रग्वी च नववस्त्रोपशोभितः ।
ब्राह्मणान् भोजयित्वादौ कृतस्वस्त्ययनान्शुचीन् ॥
अद्वेषरागिभिर्युक्तः प्राङ्मुखः प्राशयेद्यवान् ।
[5]कृष्णाष्टम्यां तथाषाढे[6] गाणपत्ये विनायकः ॥
कृतः पूज्यश्च तत्रैव सगणो मोदकोत्करैः ।
भक्ष्यैर्माल्यैस्तथा गन्धैः कुल्माषेण तु भूरिणा ॥
गीतवाद्यैः सुमधुरैस्तथा ब्राह्मणतर्पणैः ।
कृष्णाष्टमीषु सर्वासु विघ्नेशं पूजयेत्तु तम् ॥
[7]आषाढे शुक्लसप्तम्यां विवस्वान्नाम भास्करः ।
जातः पूर्वासु तस्मात्तं तत्रोपोष्य यजेत्सदा ॥

'यजेत् सदा' इत्यभिधानं तस्यां तिथौ तत्पूजावश्यकर्तव्यताबोधनार्थम् ॥

1 कृ. र., १८६.
2 शुक्लपक्षे यदा भवेत्—उ.
3 कृ. र., १९०.
4 कृ. र., १९२.
5 कृ. र., १९८.
6 कृष्णाष्टम्यामथाषाढे—ना, कृ. र.
7 कृ. र., १९९.

रथचक्राकृतौ रम्ये मण्डले सर्वकामदम् ।
भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपविलेपनैः ॥
आषाढशुक्लपक्षे तु स्वातीयोगे महाबलः ।
जातो वायुस्तथा पूज्यो गन्धदीपैर्द्विजार्चनैः ॥
भूरिणा परमान्नेन सक्तुभिर्विविधैस्तथा ।
'परमान्नेन' पायसेन । 'विविधैः' विविधप्रकृतद्रव्यैः ॥
सुमनोभिर्विचित्रैश्च कुसुमैः श्रद्धया तथा ॥
[1]एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः ।
भुजङ्गशयने शेते यदा क्षीरार्णवे सदा ॥
तदा तत्प्रतिमा कार्या सर्वलक्षणसंयुता ।
सुप्ता तु शेषपर्यङ्के शैलमृद्भिः सुदारुभिः ॥
ताम्रारकूटरजतैस्तथा चित्रपटेषु वा ।
लक्ष्म्या उत्सङ्गहस्तेषु[2] विन्यस्तचरणाम्बुजा ॥
नानाविधोपकरणैः पूज्या च विधिपूर्वकम् ।
उपवासश्च कर्तव्यो रात्रिजागरणं तथा ॥
तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तथा ।
त्रयोदश्यां ततो नृत्यं गीतं वाद्यं निवेदयेत् ॥
विष्णवे रङ्गजीविभ्यो धनं दद्याच्च शक्तितः ।
'रङ्गजीविनो' नटादयः ॥
चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिम् ॥

[3]यमः

क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः ।

1 कृ. र., २०४–२०५.
2 लक्ष्म्या उत्सङ्गे हस्ते च—ब, द, कृ. र.
3 कृ. र., २०८.

निद्रां त्यजति कार्तिक्यां तयोस्तं पूजयेत्सदा ॥
ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति ।
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः ॥
सुष्वापे च प्रबोधे च पूजितो येन केशवः ।

आषाढस्येयम् 'आषाढी', कार्तिकस्येयं 'कार्तिकी'। 'आषाढीया' कार्तिकीया इति प्राप्ते क्वचिदपवादविषयेऽप्युत्सर्गप्रवृत्तेरस्यापि विषयता भवति। यथा श्वदंष्ट्रीय इति प्राप्ते श्वादंष्ट्रो मणिरिति। सा चैकादश्यामभिप्रेता।

एकादश्यां तु शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥

इति [1]ब्रह्मपुराणवचनात् ॥

[2]वराहपुराणे

भगवानुवाच—

अन्यत्तव प्रवक्ष्यामि कर्म संसारमोक्षणम् ।
कदम्बः कुटजश्चैव धनकोऽर्जुनकस्तथा ॥
एभिरभ्यर्चनं कुर्याद्विधिदृष्टेन कर्मणा ।
ततः संस्थापनं कृत्वा मम मन्त्रविधिः स्मृतः ॥

'धनकः' कपित्थ इति शब्दार्णवे वाचस्पतिः। 'संस्थापनम्' अनन्तरोक्तकर्मसमापनम् ॥

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ।

1 कृ. र., ४२०–४२१.
2 कृ. र., २०८.

पश्यन्ति मेघान्यपि मेघश्यामं
क्रमागतं[1] सिच्यमानं महीमिमाम् ।
निद्रां भगवान् गृह्णातु लोकनाथ
वर्षास्विमं [2]गृह्णातु मेघबृन्दम्[3] ॥
ज्ञात्वा स्वयं पश्य च[4] देवनाथ
मासं चत्वारि [5]वैकुण्ठस्य तु पश्य नाथ ॥
आषाढमासे द्वादश्यां सर्वशान्तिकरं[6] शिवम्[7] ।
य एतेन[8] विधानेन [9]भूमिर्मे कर्म कारयेत् ॥
स पुमान्न प्रणश्येत संहारेषु युगे युगे ।

[10]ब्रह्मपुराणे

आषाढान्ते वैश्वदेवे नक्षत्रे सति शोभने ।
दश तान् पूजयेत्तत्र विश्वेदेवान् महाबलान् ॥

'आषाढान्ते' आषाढपौर्णमास्याम् । 'वैश्वदेवनक्षत्रं' उत्तराषाढा । 'दश विश्वेदेवाः' क्रतुदक्षादयः ॥

[11]यदा तु कर्कटं याति भगवान् चण्डदीधितिः ।
तदा प्रभृति कालः स्याद्दक्षिणायनसंज्ञकः ॥

1 क्षुपागतं—ब, ज, द, कृ. र.
2 पश्यतु—ब, ज, द, कृ. र.
3 लोकबृन्दम्—कृ. र.
4 ज्ञात्वा च पश्यैव च—ब, ज, द, कृ. र.
5 वैकुण्ठस्य तपस्यनाथ—ब, द.
6 सर्वशक्तिकरं—कृ. र.
7 शुभम्—ब, ज, द.
8 यत्र तेन—कृ. र.
9 भूमि मत्कर्म—कृ. र.
10 कृ. र., २१३.
11 कृ. र., २१८.

तत्र प्रावृट्सु[1] संपूज्याः फलपुष्पाम्बुभिः सदा ।
गोरसाक्तान् तथा सक्तून् [2]ब्राह्मणेभ्यो निवेदयेत् ॥
हिमं च शर्करां चैव शाकमूलफलानि च ।
उपानच्छत्रमाल्यानि जलधेनुं च [3]शास्त्रवत् ॥

'हिमम्' अत्र कर्पूरम् ।

[4]श्रावणे कृष्णपक्षे[5] तु शङ्करः प्रथमेऽहनि ।
त्रिपर्वणा [6]त्रिशल्येन त्रिमुखेन शरेण तु ॥

'शल्यं' लोहशङ्कुः ॥

मुखानि त्रीणि चिच्छेद यज्ञस्य मृगरूपिणः ।
तैः शिरोभिस्तपस्तप्तं वराः प्राप्ताश्च शङ्करात् ॥
स्त्रीभिः पूज्यानि तानीति न मनुष्यैः[7] कथंचन ।
[8]मृगशीर्षं ततः कृत्वा लिङ्गाकारं तु मृन्मयम् ॥
क्षीरेण स्नपनीयं तु पूजितव्यं यथाविधि ।
अर्घैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैरपि ॥
शाकैः [9]सौवर्चलाभिश्च भक्ष्यैः पिष्टमयैः शुभैः ।

'सुवर्चला' ओषधिविशेषः ॥

कांस्यभाजनवाद्यैश्च पश्चात्कार्यं च भोजनम् ॥

1 तत्र विप्रास्तु—ज.
2 प्राणेभ्यो विनिवेदयेत्—उ.
3 शास्त्रवित्—ग.
4 कृ. र., २२२.
5 शुक्लपक्षे—ब, द.
6 सशल्येन—ब, द.
7 न तु पुष्ये—उ.
8 मृगशीर्षद्वयं कृत्वा—ब, ज, द; मृगशीर्षत्रयं कृत्वा—कृ. र.
9 सौवर्चनाभिश्च—कृ. र.

[1]श्रावणे रोहिणीयोगे कश्यपश्च प्रजापतिः ।
जातस्तत्राथ पूज्योऽसौ देवस्याथ प्रवर्तकः ॥
गन्धैर्माल्यैश्च नैवेद्यैस्तथा ब्राह्मणतर्पणैः ।
पूज्या गावश्च रोहिण्यस्तथा नार्यः पतिव्रताः ॥
[2]श्रावण्यां श्रावणे चैव पूर्वं हयशिरा हरिः ।
जगाद सामवेदं तु [3]सर्वकिल्बिषनाशनम् ॥
सिन्धुर्नदी वितस्तायां [4]प्रविष्टा तत्र चैव हि ।
अतोऽर्थं श्रावणे तत्र स्नानं [5]सर्वार्थसिद्धिदम् ॥
कृत्वा संपूजयेद्विष्णुं [6]शङ्खचक्रगदाधरम् ।
श्रोतव्यान्यथ[7] सामानि पूज्या विप्राश्च सर्वदा ॥
क्रीडितव्यं च भोक्तव्यं [8]तत्रैव स्वजनैः सह ।
जलक्रीडा तु नारीभिः कर्तव्या भर्तृलब्धये[9] ॥
[10]अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥
भारावतारणार्थाय क्षत्रियाणां क्षयाय च ।
तस्मात्स तत्र संपूज्यो[11] यशोदा देवकी तथा ॥
गन्धैर्माल्यैस्तथा [12]धूपैर्यवगोधूमसंभवैः ।

1 कृ. र., २३३.
2 कृ. र., २५०.
3 सर्वकल्मषनाशनम्—ब, ज, द.
4 प्रतिष्ठा—ब, द.
5 सर्वत्र सिद्धिदम्—उ.
6 शार्ङ्गचक्रगदाधरम्—ब, द.
7 श्रोतव्यानि च—अ.
8 सर्वथा—ब, द.
9 कर्तव्यामृतलब्धये—उ ; जलक्रीडा तु कर्तव्या नारीभिर्भर्तृलब्धये—कृ. र.
10 कृ. र., २५७.
11 पूज्योऽसौ—ब, द.
12 शस्तैः for धूपैः—ब, द ; पद्मैः—उ, ना.

सगोरसैर्भक्ष्यभोज्यैः[1] फलैश्च विविधैरपि ॥
रात्रौ प्रजागरः कार्यो नृत्यगीतसमाकुलः ।
अरुणोदयवेलायां नवम्यां च ततः स्त्रियः ॥
रक्तवस्त्रावृताः सर्वाः पुष्पमाल्यैरलंकृताः ।
नयन्ति प्रतिमा ह्येषां नानाविभवसंभवाः ॥

'[2]एषां' विष्णोर्देवक्या यशोदायाश्च ॥

नदीतीरं शुभं रम्यं विविक्तं वा महत्सरः ।
तत्र स्नानं प्रकुर्वन्ति स्नपयन्ति च तास्ततः ॥
पुनः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः ।
युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह ॥
[3]अमावास्यायां पित्र्ये तु नक्षत्रे सति संयुताः ।
सप्तप्रकाराः पितरो जाताः कमलसंभवात् ॥
तेभ्यः पूजा च कर्तव्या तत्र सर्वात्मना बुधैः ।
पिण्डो देयस्तथाष्टाङ्गः श्राद्धं कार्यं [4]स्वसम्पदा ॥
[5]पञ्चम्यां शुक्लपक्षे[6] तु नीलो नागपतिः पुरा ।
सतीदेहं[7] प्रविष्टश्च तस्मात्तं तत्र पूजयेत् ॥
माल्यैर्वस्त्रोपहारैश्च[8] देवाग्निगुरुतर्पणैः ।
नृत्यगीतैस्तथा वाद्यैः पुष्पधूपान्नसंपदा ॥

1 गौरसैर्भक्ष्यभोज्यैश्च—ज.

2 एषां विष्णोर्यशोदाया देवक्याश्च विशेषतः—ब, द ; 'एषां प्रतिमाः' कृष्णयशोदा-देवकीप्रतिमाः—कृ. र.

3 कृ. र., २६५.

4 सुशर्मदम्—ब, द ; सुसम्पदा—कृ. र.

5 कृ. र., २७२.

6 शुक्लायामथ पञ्चम्यां—कृ. र.

7 सतां देहं—ब, द ; सतीहृदं—कृ. र.

8 माल्यैर्धूपोपहारैश्च—ज.

स्थाननागं[1] च विधिना पूजयेच्चापि सर्वदा ।
[2]षष्ठ्यां तु माधवः कीर्तिं लब्धवान् देवकीसुतः ॥
स्थाननागः कुमारश्च गावो [3]विप्राश्च भूतले ।
तस्मात्ते तत्र संपूज्याः शर्करासंभवैः फलैः ॥
मध्वाज्यमरिचोपेतैः परिपक्वैर्यथाक्रमम् ।
भृत्यमित्रकलत्रेभ्यो दत्वा भुञ्जीत तान्यपि ॥
[4]जनार्दनश्च दुर्गा च धनदो वरुणस्तथा ।
वनस्पतिश्च पञ्चैते नवम्यां तु कृते युगे ॥
उत्पादयेयुर्गोधूमांस्तृप्त्यर्थमिह देहिनाम् ।
तस्मात्तान् पूजयेत्तत्र भक्ष्यैर्गोधूमसंभवैः ॥
गुडाज्यमरिचोपेतैः पुष्पधूपैर्यथाक्रमम् ।
गोधूमैस्तर्पयेद्वह्निं गोधूमैश्चार्चयेद्धरिम् ॥
तन्निवेदितशिष्टानि भक्ष्याणि प्रयतात्मवान् ।
दत्वा विप्राय विप्रेभ्यो दद्यात्तेनैव दक्षिणाम् ॥
सुसंस्कृतायां नद्यां च सुपुण्ये च जलाशये ।
आरामे वृक्षबहुले पश्चाद्भुञ्जीत तान्यपि ॥
[5]विजयद्वादशीं प्राप्य पूजयेत्तु जनार्दनम् ।
मासि भाद्रपदे शुक्ला द्वादशी श्रवणे बुधः ॥
प्रशस्तः सोदयः कालः सिंहसंस्थो[6] दिवाकरः ।
सिंहात्तृतीयो द्रेक्काणः प्रावृण्णद्योश्च संगमः ॥
'द्रेक्काणः' राशेस्तृतीयो भागः ॥

1 स्थाननागाश्च भविष्यपुराणोक्ताः—कृ. र.

2 कृ. र., २७७—२७८.

3 विद्याश्च—ज ; भूताश्च—कृ. र.

4 कृ. र., २८५.

5 कृ. र., २८७-२९१.

6 सिंहस्थो हि—ब, द ; सिंहस्थे तु—ज.

ब्राह्मणो वेदपूर्णश्च पात्रं हृदयनन्दनः ।
जितं त इति मन्त्रश्च स्वधर्मोपार्जितं धनम् ॥
युगपद्द्वादशैतानि दुर्लभानि [1]सुरैरपि ।
द्वादशात्मा हृषीकेशो येषां दैवतमुच्यते ॥
सिंहस्थिते तु मार्तण्डे श्रवणस्थे निशाकरे ।
[2]सबुधा द्वादशी शुक्ला न स्याद्भाद्रपदादृते ॥
सुदुर्लभा च सा पुण्या विजया द्वादशी शुभा ।
अनुग्रहार्थं [3]मर्त्यानां कदाचित् स्यान्न नित्यशः ॥
आकस्मिकीं तु तां लब्ध्वा सर्वसंभारसंभृताः[4] ।
एकादश्यामुपोष्यादौ द्वादश्यां सुसमाहितः ॥
प्रयागादिषु तीर्थेषु नदीनां संगमेषु च ।
कृत्वा स्नानं च विधिना हृषीकेशं प्रपूजयेत् ॥
स्थले जलेऽम्बरे मूर्तौ कुम्भे वा कमलोपरि ।
वह्नौ विप्रे गवि गुरौ पितर्यथ च[5] मातरि ॥
आहूयासनपुण्याहस्वागतैरथ [6]विस्तरैः ।

'आहूय' आवाहनं कृत्वा ॥

पाद्यार्घपुष्पधूपैश्च दीपालंकारचामरैः ॥

अङ्गरागैः सुगन्धैश्च[7] पयसा पायसेन वा ।
भक्ष्यैर्मूलफलैः शाकैर्मांसैः शुद्धैर्मनोनुगैः ॥

1 कलौ युगे—ज.
2 'सबुधा' बुधवारसहिता—कृ. र.
3 भूतानां—ज.
4 संवृतः for संभृताः—ज.
5 पितर्यप्यथ—ब, द.
6 विष्टरैः—ड.
7 अङ्गरागैश्च विमलैः—ना.

मधुपर्कदधिक्षीरमधुभिः साक्षतैस्तिलैः ।
मात्रया च तथा लाजैर्मनोज्ञैर्देशसंभवैः ॥

'मात्रा' परिच्छदो वस्त्रादिः ॥

पवित्रैः पानकैर्हृद्यैर्गीतनृत्यैः सवादितैः ।
स्तोत्रैरनेकैः[1] पौराणैर्वेदमन्त्रैः सुसंस्कृतैः ॥

'सुसंस्कृतैः' अध्ययनसंस्कृतैः ॥

पौरुषेणाथ सूक्तेन सूक्तैरन्यैश्च वैष्णवैः ।
हृषीकेशं समभ्यर्च्य दद्याज्जलमयीं च गाम्[2] ॥

'जलमयी गौः' जलधेनुः ॥

यथाशक्त्या तु विप्रेभ्यः श्रद्धापूतेन चेतसा ।
सौवर्णीं राजतीं ताम्रीं रङ्गजां मृन्मयीं च ताम् ॥
शतमानां तु मणिकां जलपूर्णां सुशोभनाम् ।

'शतमानां' शतपलमानाम् ॥

तस्यां तु जलपूर्णायां सौवर्णं राजतं च वा ॥
ताम्ररङ्गमयं पात्रं मृन्मयं वा सुशोभनम् ।
संपूर्णं परमान्नेन दधिसर्पिर्गुडैस्तथा ॥
शर्कराक्षीरमधुभिस्तिलचामीकराम्बुभिः ।
सेवितं मन्त्रपूतं च दद्यादाच्छादनं शुभम् ॥
जलधेनुं [3]सपात्रां तां नवेन सदशेन तु ।
सपवित्रेण शुद्धेन वस्त्रेणाऽऽच्छाद्य यत्नतः ॥

1 स्तोत्रैः पताकैः—उ.

2 'दद्याज्जलमयीश्च गाः' इति पठित्वा, 'जलमयीर्गाः' जलधेनूः । एकवचनान्तश्च पाठः पारिजातीयकृत्यसमुच्चयादिपाठविसंवादादुपेक्षितः इति व्याख्यातम्—कृ. र.

3 सवत्सां—कृ. र.

छत्रेण[1] च सुशुद्धेन सर्वमाच्छाद्य[2] शास्त्रवित्[3] ।
[4]वियच्चरकृतान्दोषान् रक्षेद्भौमांश्च विघ्नदान् ॥
जितं त इति मन्त्रेण हृषीकेशं स्मरन्ति च ।
ब्राह्मणेभ्यः परां श्रद्धामाश्रित्य सुसमाहितः ॥
दद्यादुपानहौ तद्वत्पादुके तदनन्तरम् ।
रजतं गां तथा भूमिं सुवर्णं रत्नमेव वा ॥
हस्त्यश्वरथयानानि गृहाणि शयनानि च ।
आसनान्यथ भाण्डानि वस्त्राण्याभरणानि च ॥
उद्दिश्य सर्वांश्च पितॄन् पैतृकान् मातृकांस्तथा ।
भार्यामित्रगुरूणां तु ये केचित् पितरश्च तान् ॥
गोत्रनामस्वधाकारैः पितृयज्ञविधानवत् ।
पितृभ्यश्चान्नमक्षय्यमिदमस्त्विति संजपेत् ॥
अथान्नदानाद्भगवान् प्रीतो भवति केशवः ।
गुडक्षीरघृतैर्वस्त्रैः प्रीतो भवति चन्द्रमाः ॥
जलदानाच्च वरुणः सुप्रसन्नो भवेत्सदा ।
रजतेन च दत्तेन प्रीतः स्यात्तु महेश्वरः ॥
सुवर्णेन च दत्तेन वह्निर्नित्यं प्रसीदति ।
हस्त्यश्वरथयानैश्च मघवा व्यजनैस्तथा[5] ॥
शयनैर्वेश्मभिर्धर्मश्छत्रेणार्कः प्रसीदति[6] ।
उपानद्भ्यां यमो गोभिः सौरभेयः [7]प्रकीर्तितः ॥

1 वस्त्रेण—ज.
2 सर्वमापाद्य—ब, द.
3 यत्नवत्—ना.
4 वियच्चरहृताद्दोषाद्रक्षेद्भौमाच्च वैद्युतात्—कृ. र.
5 स्पर्शनैस्तथा—ब, ज; आसनैस्तथा—ना, कृ. र.
6 छत्रेणार्कश्च तुष्यति—ब, ज, ना, द, कृ. र.
7 कपर्दिनः—कृ, र.

पादुकाभ्यां प्रदत्ताभ्यां पद्मयोनिश्च तुष्यति ।
अलंकारैस्तथा माल्यैर्जगन्माता च पार्वती ॥
दानं होमो जपः पूजा तथा ब्राह्मणतर्पणम् ।
नदीनां संगमे स्नानं तथा विप्रेषु दक्षिणा ॥
सहस्रगुणितं तत्र सर्वमक्षयमुच्यते ।
यः प्रीणाति हृषीकेशं तत्र श्रद्धासमन्वितः ॥
स सर्वलोकान् जयति याति विष्णोः पदं च तत् ।
तारयेत् स पितॄन् सर्वान् दश पूर्वान् दशापरान् ॥
तस्मिन् काले तु संप्राप्य वितस्तां सिन्धुसंयुताम्[1] ।
सुशीतलेन पुण्येन जलेनालोड्य मृत्तिकाम् ॥
सुगौरीं लक्षणोपेतां [2]संगमस्नानपुण्यदाम् ।
तामालभेत यत्नेन स्नानकाले सदैव हि ॥
[3]नभस्यान्ते दशम्यां तु कश्यपो लब्धवान् वरम् ।
अवतारं वितस्तायाः सतीदेहे पुरातने ॥
[4]एकादश्यां ततो रुद्रः सतीं भार्यामदेशयत् ।
रसातलगता सा च द्वादश्यां शङ्कराज्ञया ॥
अथ जाता त्रयोदश्यां शूलभेदाद्रसातलात् ।
चतुर्दश्यां पुनर्नष्टा पौर्णमास्यां समुत्थिता ॥
प्रतिपद्यथ निष्क्रान्ता फणामार्गेण सा नदी ।
[5]दशम्यादिषु तत्स्नात्वा दिवसेष्वपि सप्तसु ॥
पश्येत्संपूजयेद्ध्यायेत् पिबेत् स्नायाच्च सर्वदा ।

1 सिन्धुसंगताम् —कृ. र.

2 संगमस्थां सुपुण्यदाम् —ना.

3 कृ. र., २८६.

4 Five lines from here are omitted by all MSS., but supplied by कृ. र., २८६.

5 दशम्यामादितः—कृ. र.

गन्धैर्माल्यैश्च नैवेद्यैर्दीपैर्धूपैः सुशोभनैः ॥
अङ्गरागैश्च विविधैर्वस्त्रैः पुष्पैर्विलेपनैः ।
रक्तसूत्रैः कङ्कणैश्च स्त्रीणामाभरणैस्तथा ॥
फलैर्मूलैस्तथा शाकैर्होमैर्ब्राह्मणतर्पणैः ।
पूजनीया विशेषेण वितस्तासिन्धुसंगमे ॥
महायात्रोत्सवः कार्यः पूज्याश्च नटनर्तकाः ।
[1]इन्द्रो भाद्रपदे मासि शुक्लपक्षे तु [2]विष्णुना ॥
नियुक्तः[3] सर्वसस्यानि व्रीहींश्चैव फलानि च ।
ओषधीर्वज्रहस्तश्च ताडयन् पातयत्यपि ॥
तद्भयात्तानि सर्वाणि वर्धयन्त्यखिलं जगत् ।
तस्मात् स तत्र संपूज्यः सभार्यश्च दिने दिने ॥
सगणः सायुधश्चैव सानुयात्रः सवाहनः ।

'सानुयात्रः' सानुचरः ॥

पटभित्तिकृतो देवो राज्ञा पूज्यो विशेषतः ॥

'पटभित्तिकृतः' पटे भित्तौ वा लिखितः ॥

भक्ष्यैरन्नैः फलैर्मूलैर्वस्त्रैर्माल्यैः सुशोभनैः[4] ।
तमुद्दिश्यार्चयेद्विप्रान् तथा रङ्गोपजीविनः ॥
[5]पूर्वभाद्रपदायोगे पौर्णमास्यां पितामहः ।
शक्राग्नियम[6]यात्वम्भोवायुवित्तशशाङ्करान् ॥

1 कृ. र., २९२.
2 सर्वदा—कृ. र.
3 निर्मुक्तः—कृ. र.
4 नववस्त्रैः सुभोजनैः—ज ; नववस्त्रैः सुधूपनैः—कृ. र.
5 कृ. र., ३००.
6 जातु for यातु—कृ. र.

लोकपालांस्तु रक्षार्थं त्रैलोक्यस्याभ्यषेचयत्[1] ।
पृथिव्या [2]धारणार्थं च तथानन्तं च भोगिनम् ॥

'यातुः' राक्षसः ॥

तस्मात्तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम् ।
कर्णिकायां लिखेत्तत्र सानन्तं कमलोद्भवम् ॥
प्राच्यादिषु च पत्रेषु वासवाद्यांश्च सायुधान् ।
ग्रहान्नागान् क्रमेणैव यथारूपान् समालिखेत् ॥
ततः[3] क्रमेण तेनैव संस्थाप्य कलशान् शुभान् ।
पश्चात् संपूजनीयास्तु भक्त्या ब्रह्मादयः सुराः ॥
अर्घपाद्यादिभिः सम्यग्धूपमाल्यानुलेपनैः ।
वस्त्रै [4]रत्नैः फलैर्भक्ष्यैर्होमैर्ब्राह्मणतर्पणैः ॥
मनोज्ञैश्च गुडैः[5]क्षीरैः सर्वसस्यसमुद्भवैः ।
नृत्यैर्गीतैस्तथा वाद्यैः [6]सर्वकामार्थसिद्धये ॥
विप्रेभ्यश्चाथ बन्धुभ्यो धाना देयाश्च शास्त्रवत् ।
रात्रौ धानाः स्वयं भक्ष्याः [7]संयमस्थैर्विवेकिभिः ॥
[8]कृष्णाश्वयुक्तृतीयायां [9]पूर्वं तु वरुणो ह्यभूत् ।
तस्मात् स तत्र संपूज्यो यथाविभवविस्तरैः ॥
शक्राद्धि[10] शङ्खपद्मौ तु निधी लेभे धनेश्वरः ।

1 अभ्यसेचयेत्—कृ. र.; अभिषेचयेत्—उ.
2 धारणार्थाय—ब, द, ना, कृ. र.
3 तत्र—ज.
4 सर्वफलैः—कृ. र.
5 सगुडैः—ब, ज, ना, द, कृ. र.
6 सर्वकार्यार्थसिद्धये—ज.
7 शयनस्थैर्विवेकिभिः—ब, ज, द.
8 कृ. र., ३०९–३१०.
9 पूर्वत्र—ब, ज, द.
10 स यक्षः and स यक्षेशः—कृ. र.

चतुर्थ्यां तेन तत्रासौ संपूज्यो [1]ब्राह्मणानुगैः ॥
पञ्चम्यां वसुधा देवी पातालादुद्धृता पुरा ।
वराहेणाथ सा तत्र पूज्या दिग्गजसंयुता ॥
षष्ठ्यां कुमाराः संभूताः पौराणाः केचिदेव हि ।
तानुद्दिश्य कुमारास्तु पूज्याः पुत्राः स्वलंकृताः ॥
[2]सप्तम्यामभिमानस्तु स्ववीर्याज्जितवान् जगत् ।
तमुद्दिश्यात्मनः [3]पूजा कार्या स्त्रीबालकेषु च ॥
अशोका योगिनी सिद्धा कृष्णाष्टम्यां [4]पुरा यदा ।
तदा सा तत्र संपूज्या योगनिद्रा तु वैष्णवी ॥
विशेषेण कृतस्नानैः [5]सुवस्त्रैश्च स्वलंकृतैः ।
सिन्दूरकर्दमालेपैर्नृत्यवाद्यपुरःसरैः ॥

'सिन्दूरकर्दमालेपैः' उदकाद्यालोडितसिन्दूरपङ्कलेपैः॥

शक्त्या शय्यासने [6]तस्यै निवेद्ये सोत्तरच्छदे ।

'सोतरच्छदे' सोपरिवस्त्रे ॥

पुष्पान्नधूपपूर्वं[7] तु क्रीडितव्यं च सर्वदा ॥
गुडाज्यमरिचोपेतं यवान्नं भक्षयेत्ततः ।
[8]शुक्लाश्वयुक्चतुर्थ्यां तु जहौ देहं जले सती ॥
तस्मात् सा तत्र संपूज्या सर्वसौभाग्यवर्धिनी ।

1 ब्राह्मणानुगः—ना, कृ. र.
2 अष्टम्यामभिधानस्तु—उ; सप्तम्यामभिजनस्तु—ज.
3 पूज्याः पूजा—उ.
4 यदा पुरा—ना.
5 शुद्धवस्त्रैः स्वलंकृतैः—ना.
6 तस्मिन् निवेद्यैः सोत्तरच्छदैः—उ.
7 पुष्पान्नं धूपवस्त्रं—कृ. र.
8 कृ. र., ३४८.

अर्घैः पुष्पैश्च धूपैश्च दीपैर्माल्यैश्च कङ्कणैः ॥
कुङ्कुमाञ्जनवस्त्रैश्च[1] नितम्बिन्युपयोगिभिः ।
लवणालक्तकाभ्यां च गुडार्द्रफलकैस्तथा ॥
तामुद्दिश्य च नार्यस्तु पूज्याः स्युर्जीवभर्तृकाः ।
भगिन्यो मातरश्चैव तथा नार्यः पतिव्रताः ॥
[2]शुक्लपक्षे नवं धान्यं पक्कं ज्ञात्वा सुशोभनम् ।
सुतिथौ च सुनक्षत्रे सुमुहूर्ते [3]शुभे सति ॥
गच्छेत् क्षेत्रं विधानेन नृत्यवाद्यपुरःसरः ।
तत्र वह्निं च प्रज्वाल्य धान्यैः संस्तीर्य शास्त्रवत् ॥

'शास्त्रवत्' स्वगृह्योक्तप्रकारेण ॥

कृत्वा होमं ततः पश्चान्नयेद्धान्यं च भूषितम् ।
पुष्पैर्वस्त्रैः फलैर्मूलैर्हस्त्यश्वरथसंयुतम् ॥
तेन देवान् पितॄन् बन्धूंस्तर्पयित्वा यथाक्रमम् ।
विभज्याश्च यथाशक्त्या दैवज्ञाः सस्यरक्षिणः ॥
नववस्त्रावृतः स्रग्वी स्वनुलिप्तः स्वलंकृतः ।
स्थितः पूर्वमुखस्तुष्टो ब्रह्मघोषपुरःसरः ॥
शृण्वन् वाद्यवरं हृष्टो मङ्गलालम्भनादिमान् ।
प्राश्नीयाद्दधिसंयुक्तं नवं [4]विप्राभिमन्त्रितम् ॥
कृताहारश्च कुरुते गीतवाद्यैर्महोत्सवम् ।
क्षीरोदसागरात् पूर्वं मथ्यमानात् पुरातनात् ॥
श्यामा देवी समुत्पन्ना सर्वलक्षणसंयुता ।

1 वर्णैश्च for वस्त्रैश्च—ब, द.

2 कृ. र., ३०३.

3 सुशोभने—कृ. र.

4 विद्याभिमन्त्रितम्—ब, ज, द.

नारायणाज्ञया सा च [1]सुकुमारी यशस्विनी ॥
सतीदेहसमुत्पन्ना[2] लता परमशोभना ।
तां दृष्ट्वा चकितास्तत्र ततः सर्वे सुरासुराः ॥
मनोज्ञा सुमुखी चैषा[3] तां च द्रक्ष्यामहे[4] वयम् ।
एवमुक्त्वा वचस्तां तु ददृशुः सर्व एव च ॥
चक्रुर्नाम[5] च तस्यास्ते द्राक्षेति भुवि विश्रुतम् ।
अतोऽर्थं सा सुपक्वा[6] हि पूजितव्या प्रयत्नतः ॥
पुष्पधूपान्नभक्ष्याद्यैस्तथा[7] ब्राह्मणतर्पणैः ।
द्वौ बालौ द्वौ तथा वृद्धौ[8] संपूज्यौ तदनन्तरम् ॥
धर्मार्थकाममोक्षांश्च समुद्दिश्य कुटीरके ।
स्त्रीसहायेन हृष्टेन[9] भृत्यमित्रसुतैः सह ॥
अनुलिप्तेन विधिवत् स्रग्विणा [10]वज्रवाससा ।
निवेदिता गुरुभ्यश्च स्वयं भक्त्या[11] न चान्यथा ॥
उत्सवश्चापि कर्तव्यो नृत्यगीतसमाकुलः ।
[12]आश्वयुक्शुक्लपक्षे तु स्वातीयोगे सुशोभने ॥
पूर्वमुच्चैःश्रवा नाम प्रथमं सूर्यमावहत् ।

1 सुकुमारा—ना, कृ. र.
2 समुद्भूता—ब, ज, ना, द.
3 कैषा and केषां—कृ. र.
4 रक्षामहे—उ.
5 चक्षुर्नामा च—उ, ब ; चक्रुर्नामाथ—ना, द.
6 समुत्पन्ना—ब, द.
7 वस्त्राद्यैस्तथा—ना.
8 द्वौ बालौ च तथा बद्धौ—कृ. र.
9 स्पृष्टेन—उ ; सृष्टेन—ब, द ; दृष्टेन—ज ; कृष्णेन—कृ. र.
10 वक्रवाससा—उ ; बभ्रुवाससा—ना ; च सुवाससा—कृ. र.
11 भक्ष्या—उ, ना.
12 कृ. र., ३४७.

तस्मात् साश्वैर्नरैस्तत्र पूज्योऽसौ [1]श्रद्धया सदा ॥
पूजनीयाश्च तुरगा नवमीं यावदेव हि ।
शान्तिस्वस्त्ययने कार्ये तदा तेषां दिने दिने ॥
[2]धान्यं भल्लातकं कुष्ठं वचां सिद्धार्थकांस्तथा ।
पञ्चरङ्गेण सूत्रेण कण्ठे तेषां तु बन्धयेत् ॥
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः [3]सवैष्णवैः ।
वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने ॥
तुरगा रक्षणीयाश्च पुरुषैः शस्त्रपाणिभिः ।
न च ताड्याः क्वचित्तत्र न च वाह्याः कदाचन ॥
ज्येष्ठायोगे पुरा तत्र गजाश्चाष्टौ महाबलाः ।
पृथिवीमवहन् पूर्वं सशैलवनकाननाम् ॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
[4]सुप्रतीकोऽञ्जनो नीलस्तथा तांस्तत्र पूजयेत्[5] ॥
शाक्राहक्षात् समारभ्य नवम्यन्तं च पूजयेत् ।
[6]तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ॥
प्रादुर्भूता[7] महाघोरा योगिनीकोटिभिः सह ।
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ॥
[8]उषितैर्वस्त्रधूपैश्च माल्यै रत्नानुलेपनैः ।
दीपरत्नैस्तथा भक्ष्यैः [9]फलमूलैश्च धान्यकैः ॥

1 श्रद्धयान्वितः—ना.
2 इतः परं श्लोकद्वयं नास्ति—ब, द, ना.
3 सविस्तरैः—कृ. र.
4 सुप्रीतको—उ.
5 तस्मात्तांस्तत्र—ज, ना.
6 कृ. र., ३५०.
7 आविर्भूता—ब, ज, द.
8 उपोषितैर्वस्त्रधूपमाल्यरत्नानुलेपनैः—ब, ज, ना, द, कृ. र.
9 फलपुष्पैश्च—ब, ज, द.

आमिषैर्विविधैः [1]शाकैर्होमैर्ब्राह्मणतर्पणैः ।
बिल्वपत्रैः श्रीफलैश्च चन्दनेन घृतेन च ॥
पशुभिः पानकैर्हृद्यै रात्रिजागरणेन च ।
दुर्गागृहे तु शस्त्राणि पूजितव्यानि पण्डितैः ॥
वाद्यभाण्डानि चिह्नानि कवचान्यायुधानि च ।
रात्रौ तु शिल्पिभिस्तानि स्वानि पूज्यानि सर्वदा ॥
नवम्यां तु कृतस्नानैः सर्वैः पूज्याश्च ब्राह्मणाः ।
भुक्त्वा तु शान्तिः कर्तव्या योगे गोधूलिनामनि ॥
यदुक्तं शालिहोत्रे[2] तु ज्योतिःशास्त्रे तु यन्मतम् ।
अथर्ववेदे यत्प्रोक्तं [3]तच्च तत्र समाचरेत् ॥
[4]छिन्द्यात् सकुक्कुटं छागं कृत्रिमं दारुवेश्मनि ।
श्रवणे चाथ सन्ध्यायां निर्दहेत् सगृहं[5] ततः ॥
निर्दह्यमानौ तौ तत्र निर्गच्छन्तौ विभावयेत् ।
दिशं शान्तां प्रदीप्तां वा दग्धां वा तत्फलप्रदाम् ॥
द्रष्टव्याश्चात्तशस्त्राश्च राज्ञा[6] नीराजने जनाः ।

[7]भविष्यपुराणे

सुमन्तुरुवाच—

नवम्यां श्रीः समायुक्ता देवैः सर्वैः सुपूजिता ।
जघान महिषं दुष्टमवध्यं देवतादिभिः ॥

1 क्वापि for शाकैः—उ.
2 'शालिहोत्रे' अश्वशिक्षाशास्त्रविशेषे—कृ. र.
3 तत्तत्र सकलं चरेत्—ब, ज, द.
4 क्षिप्त्वा सकुक्कुटं—ना, ज ; क्षिप्त्वा तु कुक्कुटं—ब, द.
5 निर्दहेत्तु गृहं—ब, ना ; निर्दहन्ति गृहं—ज ; निर्दहन्तु गृहं—द.
6 राज्ञां—कृ. र.
7 कृ. र., ३५६–३५७,

लब्ध्वाभिषेकं वरदा शुक्ले चाश्वयुजस्य तत् ।
यस्मात्सा[1] तत्र संपूज्या नवम्यां चण्डिका बुधैः ॥
[2]महत्त्वं हि यतः प्राप्ता यत्र देवी सरस्वती ।
अतोऽर्थं महती प्रोक्ता नवमीयं सदा बुधैः ॥
पूजयित्वा महादेवीं नवम्यामत्र चण्डिकाम् ।
महत्त्वमाप्तवान् वीरो [3]ब्रह्मा विष्णुस्तथामराः ॥
तस्मादियं महापुण्या नवमी पापनाशिनी ।
उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः ॥
मूलोत्तरेण ऋक्षेण संयुक्ता विधिवन्नृप ।
विशेषतो [4]ध्यानजीव्यैर्बालवृद्धैः सयौवतैः ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च [5]साधनैः ।
अत्र दानानि देयानि सोपवासैर्नृपैर्नृप ॥
गोसुवर्णादि राजेन्द्र वस्त्राणि विविधानि च ।
स्वमांसरुधिरैर्दत्तैर्देवी तुष्यति वै भृशम् ॥
महिषच्छागमेषाणां रुधिरेण तथा नृप ।
सुमेकमेकं[6] वरदा तृप्ता भवति चण्डिका ॥

'सुमेकः' संवत्सरः ॥

[7]रुधिरेणोरणस्यैषा तर्पिता विधिवत्ततः ।
अजस्य दशवर्षाणि रुधिरेण [8]प्रतर्पिता ॥

1 तस्मात्सा—ब, ना, द, कृ. र.
2 इत: परं सार्धश्लोकद्वयं नास्ति—ब, ज, द, ना.
3 ब्रह्मविष्णुमहेश्वरा:—ना.
4 ध्यानजपैः—कृ. र.
5 सेवकै:—ब, ज, द.
6 स्वमेकमेकं—ब, ज, द, कृ. र.
7 The following three lines are omitted by कृ. र.
8 सुतर्पिता—ब, ज, द.

माहिषेण शतं वीर तृप्ता भवति चण्डिका।
सहस्रं तृप्तिमायाति स्वदेहरुधिरेण तु॥
तर्पिता विधिवद्दुर्गा भित्वा [1]बाहू च जङ्घके।
एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः॥
अङ्गवङ्गकलिङ्गैश्च किन्नरैर्बर्बरैः शकैः।

[2]ब्रह्मपुराणे

सोपवासश्च कर्तव्य एकादश्यां प्रजागरः।
द्वादश्यां वासुदेवश्च [3]पूजनीयश्च सर्वदा॥
यात्रोत्सवश्च कर्तव्यस्त्रयोदश्यां च विष्णवे।
उपवासश्चतुर्दश्यां पौर्णमास्यां हरिं यजेत्॥
आश्वयुज्यां पुरा विप्रैः काम्यो होमः [4]प्रकीर्तितः।
महाभये तु रक्षार्थं द्वारोपान्ते हुताशनः॥
यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः।
पूर्णेन्दुः पूजितश्चापि [5]पाद्यैर्धान्यैः फलैस्तथा॥
देवदारुवने नग्नः स्तब्धलिङ्गो दिगम्बरः।
सभार्यः पूजितो [6]रुद्रः स्कन्दनन्दिपुरःसरः[7]॥
देवैरश्वपतिश्चापि रेवन्तः पूजितः सदा।
मुनिभिर्गौस्तु सुरभिर्गोमद्भिरथ पूजिता॥
छागरूपश्च[8] मुनिभिः पूजितोऽत्र हुताशनः।

1 बाहूरुजङ्घके—कृ. र.
2 कृ. र., ३७५–३७८.
3 पूजितव्यश्च—ब, ज, द.
4 प्रवर्तितः—कृ. र.
5 पक्वैर्धान्यैः—ज, ना, कृ. र.
6 विप्रैः स्कन्दनन्दिगणैर्युतः—कृ. र.
7 पुरस्कृतः—व, ना, द.
8 अङ्गरूपश्च—उ.

उरभ्ररूपी देवेषु[1] पूजितस्तु जलाधिपः ॥
विनायकेन सृष्टास्तु [2]वारणाद्या महाबलाः ।
कान्तारदीपदानं च विष्णुना [3]संप्रवर्तितम् ॥
कश्यपेन निकुम्भस्य युद्धादागमनं कृतम् ।
युगपत्तत्र कर्तव्या द्वादशेमे महोत्सवाः ॥
आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात् ।
आयाति सेनया सार्धं कृत्वा युद्धं सुदारुणम् ॥
तस्मात्तत्र नरैर्मार्गाः स्वगेहस्य समीपगाः ।
शोधितव्याः प्रयत्नेन भूषितव्याश्च मण्डलैः[4] ॥
[5]पुष्पार्घफलमूलान्नसर्षपप्रकरैस्तथा ।
वेश्मानि भूषितव्यानि [6]नानारङ्गैर्विशेषतः ॥
सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः ।
दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः ॥
स्त्रीमूर्खवृद्धबालैश्च भोक्तव्यं पूजितैः सुरैः ।
पूज्याश्च सफलैः पुष्पैस्तथा द्वारोर्ध्वभित्तयः ॥
द्वारोपान्ते प्रदीप्तस्तु संपूज्यो हव्यवाहनः ।
यवाक्षतघृतोपेतैस्तण्डुलैश्चैव तर्पितः ॥
संपूजितव्यः पूर्णेन्दुः पयसा पायसेन च ।
रुद्रः सभार्यः स्कन्दश्च तथा [7]नन्दी सुरेश्वरः ॥
गोमद्भिः सुरभिः पूज्या छागवद्भिर्हुताशनः ।

1 उरभ्ररूपी देवस्तु—ब, द, ना; पुरन्ध्ररूपी देवीस्तु—ज.
2 वरुणाद्याः—ब, द, कृ. र.
3 संप्रदर्शितम्—ना ; संप्रकीर्तितम्—कृ. र.
4 मण्डनैः—ज, ना.
5 पुष्पार्घफलधूपान्न—कृ. र.
6 नानावर्णैः—ब, ज, द.
7 नन्दीश्वरो मुनिः—ब, ज, ना, द.

औरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः ॥
[1]पूज्यः साश्वैश्च रेवन्तो यथाविभवविस्तरैः ।
ततः पूज्यो निकुम्भश्च समाषैस्तिलतण्डुलैः ॥
सुगन्धिभिर्घृतोपेतैः [2]कृसराख्यैश्च भूरिभिः ।

'कृसराख्यो' महिषाख्यगुग्गुलुः ॥

ब्राह्मणान् भोजयित्वा तु भोक्तव्यं मांसवर्जितम् ॥
शङ्खवाद्यरवोन्मिश्रैर्गीतनृत्यैश्च सा निशा ।
वह्निपार्श्वगतैर्नेया दृष्ट्वा क्रीडाः पृथग्विधाः ॥
ततः प्रभातसमये स्वनुलिप्तैः स्वलंकृतैः ।
मङ्गलालम्भनं कार्यं वह्निसंपूजनं तथा ॥
भोक्तव्यं [3]ब्राह्मणैः सार्धं क्रीडितव्यं यथासुखम् ।
तस्यां रात्रौ व्यतीतायां द्वितीयायामनन्तरम् ॥
प्रभाते कर्दमाक्तैश्च क्रीडितव्यं पिशाचवत् ।
निर्लज्जैश्चाथ सर्वत्र रुद्रवत्सर्ववेश्मसु ॥
यस्मात्स देशः सोत्कण्ठः पिशाचैः [4]शान्तिवाहनैः ।
लब्धस्तु कश्यपात्पूर्वं सक्रोधस्य प्रजापतेः ॥
आनीय चाथ [5]मैत्राणि लेपनीयानि कर्दमैः ।
कामाग्निजनकैर्वाक्यैः [6]स्त्रीपुंलिङ्गार्थदेशिभिः ॥
वाचा पैशाचमाचारं [7]कीर्तयद्भिरितस्ततः ।

1 पूज्यमानश्च—कृ. र.
2 कासराख्यैश्च—उ.
3 बान्धवैः सार्धं—ज, ना.
4 शान्तवाहनैः—ब, ज, द ; शम्भुवाहनैः—कृ. र.
5 मित्राणि—द, ब, ज, ना, कृ. र.
6 स्त्रीपुंल्लिङ्गानुवेदिभिः—ब, ज, द ; स्त्रीपुंलिङ्गानुवादिभिः—कृ. र.
7 कल्पयद्भिः—कृ. र.

अश्लीलान्यपि जल्पद्भिराक्रोशद्भिश्च संमुखम् ॥
तस्मिन्नहनि पूर्वाह्णे निकुम्भस्यानुयायिनः ।
कान्तवेशाः[1] पिशाचाश्च प्रविशन्ति नरांश्च तान् ॥
अपराह्णे ततः स्नातांस्त्यक्त्वा गच्छन्ति बन्धुवत् ।
दर्पाभिमानदोषेण[2] तत्र यस्त्वागतान्नरान् ॥
न पूजयति मोहेन क्रीडां न कुरुतेऽथ च ।
तं निर्दहन्ति ते क्रोधात् पिशाचा रौद्रदर्शनाः ॥
ततः स्नातैर्नरैः पूज्यो देवो दामोदरो हरिः ।
संपूज्य विप्रान् भोक्तव्यं स्वनुलिप्तैः स्वलंकृतैः ॥
बन्धुमित्रकलत्रैश्च सहितस्य[3] यथाक्रमम् ।
ततः प्रभृति षण्मासान् स्वेषु वेश्मसु [4]मानवैः ॥
अग्निः सन्निहितः कार्यो रात्रौ सिद्धार्थकास्तिलाः ।
मासं[5] [6]समग्रं देयश्च दीपो नित्यं गृहाद्बहिः ॥

[7]स्कन्दपुराणे

[8]रतावसानं संप्राप्य निष्क्रान्ते दिक्पतौ पतौ ।

1 कान्तारेशाः पिशाचाश्च—ज.
2 द्रव्याभिमानदोषेण—ब, ज, द.
3 सहितैस्तु—ब, ज, ना, द, कृ. र.
4 मानुषैः—ज.
5 मांसं—कृ. र.
6 समस्तं—ब, द; समानं—ज.
7 कृ. र., ३८७–३९५.
8 कृ. र., ३८६, adds two verses in the begining:
श्रुत्वा कालेयवचनं कालवेदी तपोधनः ।
सनत्कुमारः प्रोवाच व्यासमम्बुदनिःस्वनः ॥
नीलोत्पलदलश्यामः श्यामाम्बुजसमन्वितः ।
शृणु कालेय कालाभ कालकण्ठविचेष्टितम् ॥

उत्थाय शयनाद्देवी शौचं चक्रेऽतिशोचिता ॥

ततः स्पृशन्त्याः पार्वत्या वारिधाराधरप्रभ ।

'धाराधरप्रभा' मेघवेणी । व्यासस्यैतत्संबोधनम् ॥

चिन्ता समभवत्तस्या न पुत्रो दुहितेति वा ॥

तस्याश्चिन्तयमानाया ह्रदयाम्बुसमुद्भवा ।

जज्ञे कमलपत्राक्षी कन्या मृन्मयपङ्किता ॥

नीलवस्त्रैर्निवसिता रक्तवस्त्रावगुण्ठिता ।

[1]सोत्थाय कर्दमात्तस्माद्विकृताननमूर्धजा ॥

बद्धाञ्जलिपुटा प्राह पार्वतीं भाविनीं सतीम् ।

अनुब्रूहि मया कार्यं किं ते देहप्रसूतया ॥

गिरिकन्या तु तां कन्यां ह्रदयाम्बुसमुद्भवाम् ।

उवाच संपरिष्वज्य मूर्ध्नि चाघ्राय पार्वती ॥[2]

[3]भूमिपङ्काङ्कसंभूते संलिप्ता च यदङ्गने ।

1 The following three lines are omitted by all MSS., but supplied by कृ. र.

2 कृ. र., adds these ten lines after this :

मानस्यसि मम सुता ह्रदयाम्बुजसंभवा ।
ब्रूहि किं ते प्रयच्छामि मम प्रीतिः परा त्वयि ॥
ह्रदयोदकसिक्ताङ्गी ह्रदयोदकसंभवा ।
अनाभाष्य गिरेः पुत्रीं प्रगीता सा च नृत्यति ॥
तस्यास्तद्विकृतं रूपं दृष्ट्वा तत्र गिरेः सुता ।
ह्रदयेऽचिन्तयद्देवी किमिदं कोऽप्ययं विधिः ॥
चिरायुषी ततो ध्यात्वा चिरं चीरजटाधरा ।
उवाच तां प्रसन्ना सा नृत्यगीतप्रवर्तिकाम् ॥
ह्रदयाम्बुभवे ह्येहि वरदास्मि तवानघे ।
तन्निबोध वरं दास्ये यत्त्वाहमनिन्दिते ॥

3 कृमिपङ्काञ्जलिप्ताङ्गा संभूतासि यदङ्गने ।
तस्मादुदकमेवेति भविष्यसि महोत्सवे ॥—कृ. र.

तस्मादुदकसेवेति भविष्यति महोत्सवः ॥[1]
यस्मिन्निन्द्रमहो लोके दिने पातमुपैष्यति ।
तस्मिन् दिने तव जना आरप्स्यन्ते महोत्सवम् ॥
यः कामो भैरवश्चासीद्भगवत्या भवस्य च ।
स महाभैरवो भूत्वा कन्यां गृह्य करे स्थितः ॥
ततोऽम्बिका भगवती पत्नी भगवतः प्रिया ।
पुमांसमब्रवीत् कस्त्वं किं च गृह्णासि मे सुताम् ॥
ततो दंष्ट्राकरालास्यो भैरवो भैरवाकृतिः ।
उमां नीचैः स्थितः प्राह विद्युन्मत्त इवाम्बुदः ॥
योऽभवद्भैरवः कामो भगवत्या भवस्य च ।
तत्संभूतोऽहमेवैषा भार्या मम भविष्यति ॥[2]

1 कृ. र., adds the following verses after this :

देवसंमर्दजो मह्यमुत्सवो यादृशो भवेत् ।
तादृशो तद्विशिष्टो वा भविष्यति तवोत्सवः ॥
उन्मत्तवेषं कुर्वाणाः संगता भुवि मानवाः ।
उत्सवे ते भविष्यन्ति मुदिताः सर्वतो भृशम् ॥
पार्वत्या वचनं श्रुत्वा ततः सोदकसेविका ।
उवाच साञ्जलिपुटा नलिनीव सकुड्मला ॥
मामम्ब सुममाश्रित्य त्रिलोकोत्सववन्दिते ।
उत्सवो भविता कीदृक् कस्मिन् काले स्वयं वद ॥

भगवत्युवाच—

दृष्ट्वा शरत्कालमभ्र्यं पूर्णबिम्बसमद्युतिम् ।
फुल्लाम्बुजकृतापीडं नीलोत्पलकृताञ्जनम् ॥
कठोरशस्यतृणया ईषत्संतापतप्तया ।
बिभ्रत्या धरया रम्यं पक्वशाल्यवगुण्ठितम् ॥
राज्ञः परिचयप्रीत्या वृत्ते शक्रमहोत्सवे ।
भविष्यति तदा श्वो वै उत्सवोऽमरसन्निभे ॥
यस्मिन्निन्द्रमहो etc.

2 कृ. र., adds these two verses after this :

देवानां तु वरं दत्वा गोपतिर्जगतः प्रभुः ।
पीतकाभ्रमिवादित्यो विवेश भगवान् तदा ॥
देवीं चञ्चललेखाङ्कां रतिकामालसेक्षणाम् ।
अपश्यन् स्नानकमलामुष्णार्तामिव पद्मिनीम् ॥

दम्पती तौ विकृताङ्गौ कुवेषाच्छादनौ स्थितौ ।
वीक्षांचक्रे सोमभूषः काविमाविति शङ्कितः ॥
[1]अथ तौ दम्पती तस्य देवतासुरवन्दितौ ।
महेशचरणौ कान्तौ प्रणम्य च ततः स्थितौ ॥
तावुभावपि भवो भवपाल-
श्चन्द्रचिह्नितजटस्त्रिपुरारिः ।
प्राह पादपतितौ हि समीपे
कौ युवां वदथ किं च करोमि ॥
अम्बिका भवमथाह गिरीशं
सूर्यकोटितडिदग्निसवर्णम् ।
हासपूर्णवदना वलमानं
लीलया भगवती [2]वलमाना ॥
योऽभवत्तव ममैव हि कामो
भैरवो भयकरस्त्रिदशानाम् ।
एष ते भुवि पुमान् किल जातः
स्त्रीयमेव तु मया मदनाग्नेः[3] ॥
[4]सोमलक्ष्मा तदा प्रोक्त उमया सोमभावनः ।
गोपवेषधरो देवो दम्पतीत्यब्रवीद्वचः ॥
यदैव हि त्वया ध्याने जातेयं स्त्री वराङ्गना ।
तदैव मत्प्रभावेण भैरवो ह्येष मेऽभवत् ॥
नाहं त्वया विना देवि त्वं चापि न मया विना ।

1 Verse omitted by all MSS., but supplied by कृ. र.
2 स्थलमाला—कृ. र.
3 एष वे किल पुमान् तव जातः स्त्रीयमिन्दुवदना मदनाग्नेः—कृ. र.
4 कृ. र., adds सनत्कुमार उवाच before this.

अत एव मया तेऽद्य दत्तो [1]लम्बोदरारणि ॥[2]
उत्सवस्ते च भविता त्रयीप्रोक्तस्तु मत्प्रिये ।
पूर्वागमोऽस्य भविता वृत्ते काममहोत्सवे ॥
अतस्तदात्मको लोकः सर्वः सुरवरार्चिते ।
सज्जन्ते[3] तेन चान्योन्यं नरा नार्यश्च पार्वति ॥
लिङ्गेषु हृदयं स्त्रीणां भगेषु हृदयं नृणाम् ।
भगलिङ्गाङ्कितं सर्वं तदिदं जगदङ्गने ॥
भगलिङ्गसमुत्क्रोशं[4] कुर्वाणाः सामरा[5] नराः ।
अन्योन्यं पातयिष्यन्ति[6] प्रक्रोशन्तः परस्परम् ॥
आरम्भे चावसाने च भविता भैरवोत्सवः ।
शक्रपातदिने तद्वदुदसेविकयोत्सवः ॥

'आरम्भे चावसाने च' इत्युदसेविकोत्सवापेक्षया, उदसेविकायाः शेषं कालं 'भविता' 'उत्सवः' ॥

यत्पुरं नगरं ग्रामं भैरवोऽयं प्रवेक्ष्यति ।
उन्मत्तमिव तत्सर्वं सस्त्रीवृद्धं भविष्यति ॥
उन्मत्तवदनुन्मत्तं चातुर्वर्ण्यं गिरेः सुते ।
भविष्यति सुरोन्मत्तं भैरवागमहर्षितम् ॥
यथा नियुक्ताः पित्र्यर्थे विशन्ते देवता द्विजान् ।

1 'लम्बोदरारणि' विनायकमातः—कृ. र.
2 कृ. र., adds the following verse after this :
सिंहेन हि यथा सिंही हस्तिना हस्तिनी यथा ।
तथेयं रंस्यते सुभ्रु भैरवेण सहाव्यया ॥
3 भजन्ते—कृ. र.
4 भगलिङ्गाङ्गमुत्कोशं—कृ. र.
5 साङ्गना—ना.
6 घातयिष्यन्ति—ना, कृ. र.

एवं वै भैरवमहे भैरवो [1]विशते जनान् ॥
ततो रासभमारूढाः सकृत् कर्दमलेपिताः ।
कटुकाञ्जनवल्लीभिः कृतवेष्टनभूषणाः ॥
तत्फलाबद्धवलयाः प्रकटोत्कटनिःस्वनाः ।
भस्मभूषितसर्वाङ्गा विण्मूत्रमलपङ्किनः ॥
तलतालैर्वाद्यमानैः क्रूराबद्धवचोन्वितैः ।

'अबद्धम्' असंबद्धम् ॥

[2]सूच्यमाने वरारोहे भैरवो भार्यया सह ॥
प्रवेक्ष्यति पुरं ह्येष उत्सवं जनयन्नृणाम् ।
प्रविष्टे भैरवे भीरु पुरुहूतार्चितं पुरम् ॥
जनस्य रोचको घोरो भविष्यति तदोत्सवः ।

'रोचकः' प्रीतिविषयः । स एव 'घोरः' उत्कटः ॥

येषां वर्षशतं भीरु जरया ये च जर्जराः ॥
तेऽपि वत्सकवत्सर्वे करिष्यन्त्युत्सवं नराः ।

'वत्सकवत्' कुमारवत् ॥

नानाभूषणपुष्टाङ्गाः कुङ्कुमागुरुभूषिताः ॥
पीतैरनेकवर्णैश्च वासोभिः परिवेष्टिताः ।
कर्णपूरैः सुमाल्यैश्च सदामालाः[3] सचूडिनः ॥

'सदामालाः' सस्रजः । 'चूडा' [4]बाहुविभूषणम्, तद्वन्तः ।

1 विशतेऽमरान्—कृ. र.
2 पूज्यमाने—ब.
3 सदामानः—उ.
4 बद्धभूषणम्—क, कृ. र,

चूर्णैश्चम्पकपुष्पाद्यै रूक्षपिष्टशिरोरुहाः ।
आस्फोटयन्तः क्रन्दन्तः श्रावयन्तोऽप्रियाणि च ॥
रथ्यासु राजमार्गेषु श्रावयन्तो यतस्ततः ।
कुलपुत्राः कुलस्त्रीणामनङ्गप्रकृतानि च ॥
व्यङ्गानि यानि गुह्यानि कुलाचारकृतानि च ।
तेषां हि सर्वसंदेहं दर्शयन्तः पदे पदे ॥
गायन्तश्च प्रनृत्यन्तः कुर्वन्तोऽविनयानि च ।
पूर्वं सलज्जीभूत्वा च निर्लज्जत्वमुपागताः ॥
लज्जनीयानपि गुरूनाक्रोशन्तः परानपि ।
उदसेविकया मर्त्याः करिष्यन्ति यथामनः ॥
न मातुर्लज्जते पुत्री न पुत्रस्य तथारणी ।
पितुर्न पुत्रः पौत्रस्य न पिता तु पितामहात् ॥
न मातुलस्य स्वस्रीयः स्वस्रीयस्य न मातुलः ।
मुहूर्तेनैव स्वजना निर्लज्जत्वमुपागताः ॥
अन्योन्यं रूक्षवचनैस्तर्जयन्ति च मूढवत् ।
भस्मरूक्षा वचोरूक्षाः श्वेताङ्गा मृदयापि च ॥
भक्तिच्छेदविलिप्ताङ्गा चार्वङ्गा चारुचेष्टिताः ।
सारमेयाननडुह आरूढा गर्दभेषु च ॥
डोम्बवेषा गोपवेषा वटुवेषधराः परे ।
राजवेषान्त्यवेषाश्च तरुणा वृद्धरूपिणः ॥
नापितानां च वेषेण मन्दानामथ चापरे ।
पलाण्डुसीधुवर्षैश्च श्वासकृन्मिश्रितैर्नृप ॥
धूपं संचारयिष्यन्ति घ्राणवैराग्यकारणम् ।
जलेचरमलं चान्ये नरा नृणामजानताम् ॥
नासिकायां प्रदास्यन्ति दुर्गन्धमशुभैः समम् ।

अन्ये तु पुरुषा देवि देववेषविभूषिताः ॥
काव्यानि श्रावयन्तो हि ते हृष्यन्ति यथामराः ।
यश्च नाक्रुश्यते तत्र यश्च नाक्रोशते परम् ॥
बिभ्यन्ति तस्य पितरो ब्रह्महन्तुर्यथा तथा ।
राजनो हि यथाश्वानां कुञ्जराणां यथा नराः ॥
हिताय जायते तद्वन्नराणामुदसेविका ।
न तस्य देवा अश्नन्ति हविः पितर एव वा ॥
मध्यस्थभावं कुरुते उदसेविकया हि यः ।
न त्वं नन्दी न चैवाहं तस्य तुष्यामि पार्वति ॥
विरामे च महाशोकः पुत्राभावे त्वया कृतः ।
उदसेविकया त्वेवं भविता भैरवागमः ॥
अतुला हर्षसंपत्तिः पश्चादथ तथावयोः ।
न भ्राजते यथा वेदं त्वच्छोकाद्भवनं तव ॥
उदसेविकया हीनं तथा तद्भविता पुरम् ।
नरा नार्यश्च गिरिजे भस्मना कर्दमेन च ॥
निष्प्रभाणि करिष्यन्ति गृहाण्यायतनानि च ।
चौरैरुद्वासितमिव पुरं देवि भविष्यति ॥
मृत्पिण्डभस्मविण्मूत्रैर्नरैः प्रेतैरिवावृतम् ।
भैरवोऽयं मृत इति घोषयन्तस्तथा नराः ॥
तृणच्छन्नं नरं तत्र संवेश्याम्बरसंवृतम् ।
इति वाचः प्रकुर्वाणो भैरवोऽयं जहाति नः ॥
निर्हरिष्यन्ति तं विप्रा[1] मृतं गुरुमिव प्रियम् ।
तडागकूले तं न्यस्य सरित्कूले तथापि वा ॥
स्नाननिर्मुक्तकलुषाः प्रयास्यन्ति ततो गृहम् ।

1 मर्त्याः—ब, ज, द.

संसाध्य भैरवं स्नाता उत्सवोत्कटखेदिताः ॥
मुनिव्रता इव नरा भविष्यन्ति [1]धिया युताः ॥
यथैवे ते पार्वति भैरवागमे
[2]नराश्च लज्जां मुहुरेव लज्जिरे ।
तथैव संभावितभैरवाः पुन-
र्बभूवुरेकान्ततपोवनावृताः[3] ॥
इमं तु यः सुन्दरि भैरवोत्सवं
पठेत विप्रो द्विजदेवसंसदि ।
स पुत्रपौत्रैः सममेव तत्क्षणे
महागणेशत्वमवाप्नुयाच्छुभम्[4] ॥

ब्रह्मपुराणे[5]

अमावास्यायां तु देवा कार्तिके मासि केशवात् ।
अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसानुषु ॥
लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे ।
चतुर्युगसहस्रं तु ब्रह्मा सुप्तस्तु पङ्कजे ॥
अतोऽर्थं विधिवत्कार्या मनुष्यैः [6]सुखसुप्तिका ।
दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ।
दीपवृक्षास्तथा कार्याः शक्त्या[7] देवगृहेष्वपि ॥

1 कृपायुताः—ब, ज, द ; क्रियायुताः—कृ. र.
2 नवां न लज्जां—कृ. र.
3 तपोधनावृताः—कृ. र.
4 शिवम्—कृ. र.
5 कृ. र., ४११–४१२.
6 सुप्तदीपिकाः—उ.
7 भक्त्या—ब, क, ज, द.

चतुष्पथश्मशानेषु नदीपर्वतवेश्मसु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥
वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः ।
दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् ॥
ब्राह्मणान् भोजयित्वादौ विभज्य च बुभुक्षितान् ।
अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥
स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्निर्वृतैः[1] सह ।
शङ्करश्च पुरा द्यूतं ससर्ज सुमनोहरम् ॥
कार्तिके शुक्लपक्षे तु प्रथमेऽहनि सत्यवत् ।
जितश्च शङ्करस्तत्र जयं लेभे च पार्वती ॥
अतोऽर्थं शङ्करो दुःखी गौरी नित्यं सुखोषिता ।
तस्माद्द्यूतं च कर्तव्यं[2] प्रभाते तत्र मानवैः ॥
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ।
पराजयो विरुद्धस्तु लब्धनाशकरो भवेत् ॥
श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः[3] स्वलंकृतैः ।
विशेषतस्तु भोक्तव्यं प्रशस्तैर्बान्धवैः सह ॥
तस्यां निशायां कर्तव्यं शय्यास्थानं सुशोभनम् ।
गन्धैः पुष्पैस्तथा [4]वस्त्रै रत्नैर्माल्यैरलंकृतम् ॥
दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् ।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ॥
नवैर्वस्त्रैश्च[5] संपूज्या द्विजसंबन्धिबान्धवाः ।

1 निभृतैः—ब, ज, द.
2 प्रकर्तव्यं—ब, द.
3 सुलिप्तैश्च स्वलंकृतैः—ज.
4 वस्त्रनानारत्नोपशोभितम्—ब, द.
5 वरैर्वस्त्रैश्च—ज.

[1]पद्मपुराणे

कार्तिके मास्यमावास्या तस्यां दीपप्रदीपनम् ।
शालायां ब्रह्मणः कुर्यात्स गच्छेत्परमं पदम् ॥
यावद्दीपस्य संख्या वै घृतेनापूर्य शक्तितः ।
तावद्युगसहस्राणि शिवलोके महीयते ॥
प्रतिपदि ब्राह्मणांश्च गुडमिश्रैः प्रदीपकैः ।
वासोभिरहतैः पूज्य गच्छेद्वै ब्रह्मणः पदम् ॥
गन्धपुष्पैर्नवैर्वस्त्रैरात्मानं पूजयेत्ततः ।
तस्यां प्रतिपदायां तु स गच्छेद्ब्रह्मणः पदम् ॥
महापुण्या तिथिरियं बलिराज्यप्रवर्तिनी ।
ब्रह्मणस्तु प्रिया[2] नित्यं बालेयी [3]परिकीर्तिता ॥
ब्राह्मणान् [4]भोजयेद्योऽस्यामात्मानं च विशेषतः ।
स याति परमं स्थानं विष्णोरमिततेजसः ॥
चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा ।
तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥
न तस्य [5]दुरितं किंचिन्नाधयो व्याधयो नृप ।
भवन्ति [6]कुरुशार्दूल तस्मात्स्नानं समाचरेत् ॥
दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम् ।
गोमहिष्यादि यत् किंचित् तत्सर्वं भूषयेन्नृप ॥
चेलवस्त्रादिभिः सर्वांस्तोरणाधस्ततो नयेत् ।

1 कृ. र., ४१०–४११.
2 ब्रह्मण: सा प्रिया—कृ. र.
3 संप्रकीर्तिता—ब, क, द.
4 पूजयेद्यो—ब, द, कृ. र.
5 दुष्कृतं—ब, क, ज, द.
6 नृपशार्दूल—ब, ज, द.

ब्राह्मणानां तथा[1] भोज्यं कुर्यात् कुरुकुलोद्वह ॥
तिस्र एताः [2]पुरा प्रोक्तास्तिथयः कुरुनन्दन ।
कार्तिकेऽश्वयुजे मासि चैत्रे मासि तथा नृप ॥
स्नान दानं शतगुणं कार्तिके या तिथिर्नृप ।
बलिराज्ये तु शुभदा या शुभाशुभनाशिनी ॥

[3]वामनपुराणे

बलिं प्रति त्रिविक्रम उवाच—

तथान्यदुत्सवं पुण्यं वृत्ते शक्रमहोत्सवे ।
वीरप्रतिपदा नाम तव भावी महोत्सवः ॥
तत्र त्वां नरशार्दूल हृष्टा पुष्टास्त्वलंकृताः ।
पुष्पदीपप्रदानेन ह्यर्चयिष्यन्ति यत्नतः ॥
तवोत्सवेषु विपुलं[4] भविष्यति दिवानिशम् ।
यथैव राज्ये भवतस्तु संप्रति[5]
तथैव सा भाव्यतिकौमुदीति च ॥

[6]ब्रह्मपुराणे

षड्गर्भान् दानवान् पूर्वं वञ्चयित्वा जनार्दनः ।
तां योगनिद्रामसृजद्देवीं रक्षार्थमात्मनः ॥
[7]एकां निशां भगवती सिद्धिदां कालदैवतम् ।

1 ततो—ब, ज, द, कृ. र.
2 पुराणोक्ताः—ब, ज, द.
3 कृ. र., ४१२–४१३.
4 तवोत्सवो मुख्यतमः—ब, द, क, ज, कृ. र.
5 भवतस्तु साम्प्रतं—ब, द.
6 कृ. र., ४१३–४१४.
7 एकां निशां भगवतीं सिद्धिमेकां तु दैवतम्—उ; एकानङ्गा भगवती सिद्धये काल-दैवतम्—कृ. र.

शुक्लपक्षे तु संपूज्या कार्तिके केशवाज्ञया ॥
चतुर्थ्यामथवाष्टम्यां [1]नवम्यां वा सुसिद्धिदा ।
चतुर्दश्यामथ स्त्रीभिः सुस्नाताभिर्यथाक्रमम् ॥
गृहाद्बाह्ये तु यत्र स्यादेकान्ते तु फलद्रुमः[2] ।
तत्रार्घपुष्पधूपान्नसंपदा पूजयेत्तु ताम् ॥
एकपुत्रवती नारी मनोवाक्कायसंयुता ।
पूर्वोपकरणैर्युक्तं[3] गृहीत्वा ग्रासमुत्तमम् ॥
ततो ददाति श्येनाय सुप्रीता प्रीतिकामिनी[4] ।
इमं ग्रासं नयस्वार्य भगवत्यै निवेदितम् ॥
इत्युक्त्वा स्वगृहं याति ततः पूर्णमनोरथा ।
कृते युगे प्रसिद्धोऽयं दासवद्धतको यथा ॥
यथोपरिचरो राजा रेतः पर्णपुटे स्वकम् ।
निधाय प्रददौ नेतुं श्येनाय स्वां प्रियां प्रति ॥
युगेष्वन्येषु मन्त्रं वै [5]पठन्त्वनल इत्यपि ।
जहाति भूमौ तं ग्रासं प्राङ्मुखी याति वेश्म च ॥
आमन्त्रणं तु यस्यापि पक्षिणो निर्मितं पुरा ।
स एव पक्षी गृह्णाति तं ग्रासमिति निश्चयः ॥
आदौ गृहे ततो भुङ्क्ते सा नारी सुसमाहिता ।
पश्चाद्गृहपतिर्भुङ्क्ते सभृत्यज्ञातिबान्धवः ॥
गृहदेवीं तु तेनैव विधिना पूजयेत् पतिः ।
श्येनग्रासो न देयश्च न च वृक्षं समाश्रयेत् ॥
किं तु गुप्तगृहे भार्यां पूजयेत पतिव्रताम् ।

1 नवम्यामाशु सिद्धिदा—ब, द.
2 सफलद्रुमः—ब, ज, द, कृ. र.
3 सर्वोपकरणैर्युक्तं—कृ. र.
4 प्रीतिकाम्यया—ज.
5 पठेत्तु नल इत्यपि—द, ब, ज; पठन्तु नल इत्यपि—क.

युग्मेष्वन्येषु सद्भावो[1] दम्पत्योर्नो भवेद्यदा ॥
तदा स्वकुलधर्मं तु तावन्मात्रं करोति सः ।

[2]वराहपुराणे—[१२३, ८–११]

वराह उवाच—
कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् ।
अर्चयेद्यस्तु मां तत्र तस्य पुण्यफलं शृणु ॥
यावल्लोका हि वर्तन्ते यावत्त्वं चैव माधवि ।
मद्भक्तो जायते तावदन्यभक्तो न जायते ॥
कृत्वा वै मम कर्माणि द्वादश्यां मत्परो नरः ।
ममैव बोधनार्थाय चेमं मन्त्रमुदाहरेत्[3] ॥
ॐ मन्त्र उच्यते—
ब्रह्मेन्द्ररुद्रैरभिपूज्यमानो[4]
भवानृषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयं द्वादशी[5] कौमुदाख्या
जागृष्व जागृष्व च लोकनाथ ॥
मेघा गता निर्मलपूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ ।
अहं ददानीति च पुण्यहेतोः प्रबुध्य[6] जागृष्व च लोकनाथ[7] ॥

1 युग्मेष्वन्येष्वसद्भावो—कृ. र.
2 कृ. र., ४२६–४२७.
3 मन्त्रमुदीरयेत्—ब, ज, द, कृ. र.
4 अभिनूयमनो—कृ. र.
5 किल for द्वादशी—ब, ज, द, कृ. र.
6 जागृष्व—कृ. र.
7 कृ. र., adds here:
य यज्ञो यत्र भासि त्वं सर्वयज्ञानुभवोऽसि यज्ञाः ।
यजन्ति वार्तासु विशुद्धसत्वाः प्रबुध्य जागृष्व च लोकनाथ ॥ and comments
यश्चान्तिमो मन्त्रः समयप्रदीपाद्यलिखितोऽपि वराहपुराणे कृत्यसमुच्चयादिषु च दृष्टत्वाल्लिखितः.

एवं कर्माणि कुर्वन्ति द्वादश्यां ये यशस्विनि ।
मम भक्त्या नरश्रेष्ठास्ते यान्ति परमां गतिम् ॥

[1]ब्रह्मपुराणे

एकादश्यां तु शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥
नृत्यैर्गीतैस्तथा वाद्यै ऋग्यजुःसाममङ्गलैः ।
वीणापणवशब्दैश्च पुराणश्रवणेन च ॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः ।
सुभाषितैरिन्द्रजालैर्भूमिशोभाभिरेव च ॥
पुष्पैर्धूपैश्च नैवेद्यैर्दीपवृक्षैः सुशोभनैः ।
होमैर्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः ॥
इक्षोर्विकारैर्मधुना द्राक्षाक्षौद्रैः सदाडिमैः ।
[2]कुठेरकस्य मञ्जर्या मालत्या लवणेन च ॥
हृद्याभ्यां श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वदा ।
कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः ॥
तथा नानाविधैः पुष्पैर्द्रव्यैर्वीरक्रयाहृतैः[3] ।
तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये ॥
आदौ घृतेन तैलेन मधुना स्नापयेत्ततः ।
दध्ना क्षीरेण च ततो पञ्चगव्येन शास्त्रवत्[4] ॥
उद्वर्तनं माषचूर्णं मसूरामलकानि च ।
लोध्रं कालेयकं चैव तगरं [5]वर्णसंभवम् ॥

1 कृ. र., ४२०–४२५.
2 'कुठेरकं' कृष्णतुलसीमाहुः—कृ. र.
3 'वीरक्रयो' विक्रेत्रुपन्यस्तमूल्यत्याजनेन क्रयः—कृ. र.
4 शास्त्रवदिति समन्त्रकपञ्चगव्येन स्नानोक्तपरिमाणवता घृतादिना चेत्यर्थः—कृ. र.
5 मुस्तकानि च—कृ. र.

सर्षपाश्च प्रियङ्गुश्च मातुलुङ्गरसस्तथा ।
सर्वौषध्यः सर्वगन्धाः सर्वबीजानि काञ्चनम् ॥
मङ्गलानि यथाकामं रत्नानि च कुशोदकम् ।
हस्तिदन्तोद्धृता मृच्च वृषशृङ्गोद्धृता च मृत् ॥
नदीतीराद्भवां स्थानाद्वल्मीकात्संगमोद्धृतात् ।
इन्द्रस्थानाच्च[1] सरसस्तथा पर्वतमस्तकात् ॥
एताभिः [2]शोधयेद्देवं दद्याद्गोरोचनं शुभम् ।
ततस्तु कलशा देया [3]यथाप्रोक्ताः स्वलंकृताः ॥
जातीपल्लवसंयुक्ताः[4] सफलाश्च सकाञ्चनाः ।
पुण्याहवेदशब्देन[5] वीणावेणुरवेण च ॥
शब्देन मधुरेणैव सूतमागधवन्दिनाम् ।
एवं संस्नाप्य[6] गोविन्दं स्वनुलिप्तं स्वलंकृतम् ॥
सुवाससं पूजयेच्च सुमनोभिः सकुङ्कुमैः ।
दीपैर्धूपैर्मनोज्ञैश्च पायसेन च भूरिणा ॥
मात्रयान्नप्रदानैश्च होमैः [7]पुष्पैः सुदक्षिणैः ।
वासोभिर्भूषणै रत्नैर्गोभिरश्वैर्मनोहरैः[8] ॥
ब्राह्मणाः पूजनीयाश्च विष्णोराद्याश्च मूर्तयः ।
संविभज्याश्च दायादा व्रात्याः सात्वतजातयः ॥
यज्ञशिष्टामृतं पश्चाद्भोक्तव्यं ब्राह्मणैः सह ।

1 राजस्थानाच्च—कृ. र.
2 शोध्य देवेशं—ब, ज, ना, द, कृ. र.
3 यथाप्राप्ताः—कृ. र.
4 संबद्धाः—कृ. र.
5 पुण्याहजयशब्देन—कृ. र.
6 सुस्नाप्य—ब, द; संस्थाप्य—कृ. र.
7 पुण्यैः सदक्षिणैः—कृ. र.
8 मनोजवैः—ब, ज, ना, द; मनोरमैः—कृ. र.

संविभज्यास्ततः पश्चात्त्रयोदश्यां तु नर्तकाः ॥
चतुर्दश्यां न भोक्तव्यं [1]पातव्यमथवा पयः ।
पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा ॥
तस्मिन्नहनि यत्नेन कर्तव्यं नक्तभोजनम् ।
दौःशील्यभ्रान्तिचकितैस्तत्र सप्तर्षिभिः पुरा ॥
संत्यक्ताः कृत्तिकाः षट् च ऋते साध्वीमरुन्धतीम् ।
तत्र स्कन्दश्च भगवान् कार्तिकेयत्वमागतः ॥
खड्गश्च[2] रुद्रवचनाद्वह्निमध्यात् समुत्थितः ।
रुद्रात् पाशशतं लेभे वरुणस्तत्र दारुणम् ॥
अग्निश्च भृगुशापाच्च मुक्तस्तत्र महाभयात् ।
अर्हितो मनुना मर्त्यो[3] नीत्वा तत्र पयोनिधिम् ॥
स्नातव्यं[4] वृषभैस्तत्र प्राप्त उत्सर्ग[5] एव हि ।
इष्टिः[6] सांग्रामिकी तत्र कृता देवैर्जिगीषुभिः ॥
तस्माद्दशात्र कर्तव्याः पौराणा उत्सवाः सकृत् ।
तत्र चन्द्रोदये पूज्यास्तापस्यः कृत्तिकाश्च षट् ॥
कार्तिकेयस्तथा खड्गो वरुणश्च हुताशनः ।
धान्यैः सशूकैर्द्वारोर्ध्वं भूषितव्यं निशागमे ॥
माल्यैर्धूपैस्तथा गन्धैर्भक्ष्यैस्तूच्चावचैस्तथा ।
परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः ॥
इक्षूणां तु विकारेण दीपवृक्षैः सुशोभनैः ।

1 पातव्यमथ पायसः—क, ज ; पातव्यमथवा पुनः—ना ; पातव्यमथवाप्रतः—ठ.
2 शङ्खश्च—ब, द.
3 अर्धितो मनुना मत्स्यो—ब, द ; वर्धितो मनुना मत्स्यो—ना, ज, कृ. र.
4 स्वातन्त्र्यं—ना, कृ. र.
5 उत्सङ्ग—कृ. र.
6 पुष्टिः—कृ. र.

कृसरेणाथ पयसा तथा रम्यैश्च[1] गोरसैः ॥
[2]लेपिकाभिर्विचित्राभिः खजात्युक्तैश्च पानकैः ।
एवं देवाः सुसंपूज्या[3] दीपो देयो गृहाद्बहिः ॥
दीपोपान्ते[4] ततो गर्तश्चतुरस्रो मनोहरः ।
चतुर्विंशाङ्गुलः कार्यः सिक्तश्चन्दनवारिणा ॥
गवां क्षीरेण [5]पूर्णश्च समन्तात् परिरक्षितः ।
तत्र हैममयो मत्स्यो मुक्तानेत्रो मनोहरः ॥
संक्षेप्तव्यो विधानेन नमोऽस्तु हरये पठेत् ।
ब्राह्मणाय मनोज्ञाय दद्यात्तत्क्षीरसागरम् ॥
[6]नीलं च वृषभं दद्याच्चतुर्वत्सतरीयुतम् ।
सर्वसस्यधनं[7] रम्यं सर्वगन्धसमन्वितम् ॥
सुवाससं[8] ब्राह्मणाय महाकान्तारतारणम् ।
यावन्ति तस्य रोमाणि शरीरे सन्ति संख्यया ॥
तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः ।
पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः ॥
[9]भोक्तव्यं गोरसप्रायं सुप्तव्यं स्थण्डिले ततः ।
एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु ॥
दिने दिने च स्नातव्यं शीतलासु नदीष्वपि ।

1 चान्यैश्च—कृ. र.
2 लेपिका पक्वान्नविशेषः—कृ. र.
3 एवं देवांस्तु संपूज्य—क, कृ. र.
4 द्वारोपान्ते—कृ. र.
5 सम्पूर्णः—ब, क, ज, ना, द, कृ. र.
6 Line omitted by कृ. र.
7 सर्वसस्यधरं—क, कृ. र.
8 सुधासमं—कृ. र.
9 गन्धैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि—ना.

पूजनीयो हरिर्देवो ब्राह्मणाः सहुताशनाः ॥
अभयं सर्वभूतेभ्यो दत्तं पूर्वं सुरासुरैः ।
विष्णुप्रबोधसमये दिव्यं युगशतं क्रमात् ॥
यथावत्पालितं तच्च मुनिभिर्वाक्यमुत्तमम् ।
देवैर्विष्णुप्रबोधादि समग्रं तूत्तरायणम् ॥
पालितं तच्च [1]वचनात् पश्चात्त्यक्तं विधेर्वशात् ।
नित्यसंग्रामशीलत्वाद्धर्माद्धिंसात्मकैस्तथा ॥
देवदानवयक्षैश्च पिशाचैरथ राक्षसैः ।
वर्जिता प्राणिहिंसा च [2]मासादेर्दिनपञ्चके ॥
यस्मान्न भोजनं धात्रा तेषां मांसादृते कृतम् ।
ततः प्रभृति यो येन धर्मश्च स्वयमाश्रितः ॥
स तेन पाल्यते नित्यमद्यापि [3]प्रथितात्मना ।
मुनिवद्देववच्चाथ दैत्यदानववत्तथा ॥
देया च सर्वभूतेभ्यो नरैरभयदक्षिणा ।
[4]मार्गशीर्षस्य मासस्य प्रारम्भे प्रतिपद्यपि ॥
नवसंवत्सरारम्भो देवैः कृतयुगे कृतः ।
कश्यपेन च कश्मीरा निर्मिताश्च सुशोभनाः ॥
तस्मात्तत्र नरैः कार्यः सदा पुण्यमहोत्सवः ।
पुष्पैर्माल्यैर्गीतवाद्यैर्मङ्गल्यैर्द्रव्यशोभितैः[5] ॥
[6]दानैर्वस्त्रैस्तथा रत्नैरुपर्युक्तैर्नवैः सदा ।

1 भुवनं—ब, क, द, ज ; वचनं—ना, कृ. र.

2 प्राणिभिर्दिनपञ्चकं—ब, क, द ; मांसादेर्दिनपञ्चकम्—ना ; मांसादेर्दिनपञ्चकम्—कृ. र.

3 प्रयतात्मना—ब, क, ना, द, कृ. र.

4 कृ. र. ४५२

5 मङ्गलैर्दृष्टशोभितैः—ब, ना, द, कृ. र.

6 पानैरन्नैस्तथा वस्त्रैरुपर्युक्तैर्नरैः सदा—ब, क, ज, ना, द ; यानै रत्नैस्तथा वस्त्रैरुपयुक्तैर्नरैः सदा—कृ. र.

[1]यद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः ॥
अदितेः कश्यपाज्जज्ञे मित्रो नाम दिवाकरः ।
मार्गशीर्षस्य मासस्य शुक्लपक्षे शुभे तिथौ ॥
सप्तम्यां तेन सा ख्याता लोकेऽस्मिन् मित्रसप्तमी ।
षष्ठ्यां तु स्नपनं कार्यं तस्मै मित्राय भानवे ॥
[2]यथा विष्णोः प्रबोधे तु क्रियते सर्वसम्पदा ।
तत्रोपवासः कर्तव्यो भक्ष्याण्यथ फलानि वा ॥
रात्रिजागरणं कार्यं [3]गीतवाद्यपुरस्कृतम् ।
सप्तम्यां [4]वपनं कृत्वा ततः स्नात्वा यजेद्रविम् ॥
नानाकुसुमसम्भारैर्भक्ष्यैः पिष्टमयैस्तथा[5] ।
[6]मधुना च प्रभूतेन होमजप्यसमाधिभिः ॥
ब्राह्मणांस्तर्पयेत् पश्चाद्दीनानाथांश्च मानवान् ।
अष्टम्यां संविभज्याथ तथा च नटनर्तकान् ॥
दिनद्वये च भोक्तव्यं पैष्टमन्नं मधुप्लुतम् ।
[7]वामं नेत्रं तु यद्विष्णोस्तदेव [8]भुवनत्रयम् ॥
अनसूयात्मजश्चन्द्रस्त्वमृतेनाभ्यषेचयत् ।
पौर्णमास्यां पौर्णमास्यां तस्मात्तं पूजयेत्सदा[9] ॥

1 कृ. र., ४६०–४६१.

2 'यथा विष्णोः' इत्यनेन कार्तिकशुक्लैकादश्युक्तविष्णुस्नानीयद्रव्यातिदेशः—कृ. र.

3 गीतनृत्यपुरस्कृतम्—ब, ज, ना, द.

4 स्नपनं—कृ. र.

5 शुभैः—ना, कृ. र.

6 उ, ज, and ना add one line before this: रात्रिजागरणं कार्यं शुभैर्वाद्यैश्च नर्तनैः.

7 कृ. र., ४७१—४७२.

8 नयनत्रयम्—उ.

9 पौर्णमास्यां च तस्मात्तं पूजयेत्तत्र सर्वदा—ब, क, ज, द, कृ. र.

शुक्लैः पुष्पैश्च पयसा [1]श्रद्धया परया युतः ।
रत्नैर्दीपैश्च बलिभिर्होमैर्ब्राह्मणतर्पणैः ॥
गोभ्यश्च लवणं देयं तस्मिन्नहनि सर्वदा ।
यस्मात्तु लवणं[2] चन्द्राद्दक्षशापाद्विनिःसृतम् ॥
माता स्वसा च [3]दुहिता पूज्याः श्रेष्ठकुलाङ्गनाः ।
रक्तवस्त्रद्वयेनैव सदशेन नवेन च ॥
रूपमात्रं[4] तु विधिवत् कर्तव्यं तत्र सद्द्विजैः ।
कान्तं रूपं भवेत्स्त्रीणां पूर्णेन्दोः पूजनादिति ॥
क्रीडन्त्याकाशगङ्गायामष्टमे [5]चात्मवर्त्मनि ।
गजेन्द्राः कुमुदाद्याश्च करैस्तज्जाह्नवीजलम् ॥
[6]गृहीत्वा प्रतिमुञ्चन्ति सूत्कारैर्दक्षिणामुखैः ।
[[7]प्लुष्टाः पूष्णोऽंशुपातैश्च सामीप्यात् सूर्यरश्मिभिः ॥
सम्यक् स्वदेहशान्त्यर्थं दाहस्य शमनाय च ।]
महाप्रपातान्नभसः पतमानं तु तज्जलम् ॥
वायुना ध्मायमानं तु स्थानत्वमुपगच्छति ।
तत्पुण्यं हिमवत्सानौ पतते च यदा हिमम् ॥
प्रथमं तत्र संपूज्यो हिमवान् शिशिरस्तथा ।
हेमन्तश्च तथा नागो नीलो नीलाब्जसन्निभः ॥
स्थाननागश्च संपूज्यः फलैः पत्रैर्नमेरुजैः ।
बकपुष्पाणि देयानि धूपो गुग्गुलुसंभवः ॥

1 नैवेद्यैः श्रद्धयान्वितः—कृ. र.
2 तस्मात्सलवणं—ज ; तस्मात्तल्लवणं—कृ. र.
3 सम्पूज्यास्तथा च स्वकुलाङ्गनाः—ब, द.
4 रूपक्षत्रं—ज ; रूपशस्त्रं—कृ. र.
5 वातवर्त्मनि—ज ; चाभवत् मणिः ?—कृ. र.
6 The following two verses are omitted by उ.
7 Omitted by all MSS. but supplied by कृ. र.

मध्वाज्यतिलसंमिश्रं पितृभ्यश्च हिमं बहु ।
यस्मिन् देशे हिमं न स्यात्तत्र ब्रूयाद्धिमं हिमम् ॥
घृताक्तं[1] ब्राह्मणेभ्यश्च देयं [2]माषोदनं तथा ।
उत्सवश्च ततः कार्यो गीतनृत्यसमाकुलः ॥
विशेषतश्च भोक्तव्यं मनोज्ञं भोजनं शुभम् ।
श्यामा देवी पूजितव्या धूपपुष्पानुलेपनैः ॥
अन्नैर्भक्ष्यैः फलैर्मूलैः स्वनुलिप्तैः स्वलंकृतैः ।
हिमोपरि निविष्टैश्च गुरुप्रावरणाम्बरैः ॥
मित्रभृत्यात्मसंबन्धिसहितैश्च यथासुखम् ।
भोज्यं विशेषवत् कार्यं श्रोतव्यं गीतवादितम् ॥
द्रष्टव्यं पुंश्चलीनृत्यं पूजनीयास्तथा स्त्रियः ।
नवं च मद्यं पातव्यं मद्यपैश्च यथाक्रमम् ॥
ब्रह्मलोके तपस्तप्त्वा पितरो लेभिरे वरम् ।
[3]पौषे कृष्णाष्टकायां तु शाकैः श्राद्धं सुभोजनम् ॥
[4]पौषमासस्य [5]कृष्णायामेकादश्यामुपोषितः ।
द्वादश्यां पूजयेद्विष्णुं देवं नारायणं हरिम् ॥
यात्रा कार्या त्रयोदश्यां चतुर्दश्यामुपोषितम् ।
[6]पौर्णमास्यां यजेद्विष्णुं यावद्विभवविस्तरम् ॥
इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः ।
पुरंदरश्च सोमश्च तथा [7]पूषा बृहस्पतिः ॥

1 घृतान्नं—उ.
2 मांसोदनं—ना.
3 कृ. र., ४७८.
4 कृ. र., ४८२.
5 शुक्लायां—ना, कृ. र.
6 The following eleven lines are omitted by उ.
7 पुष्यबृहस्पती—कृ. र.

पञ्चैते पुष्ययोगेन पौर्णमास्यां तपोबलात् ।
अलंकृतं पुनश्चक्रुः [1]सौभाग्योत्साहलक्ष्मिभिः ॥
तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये ।
गौरसर्षपकल्केन समालभ्य स्वकां तनुम् ॥
कृतस्नानैस्ततः कार्यमलक्ष्मीनाशनं परम् ।
उद्वर्त्य देहं च तथा सर्वौषधियुतैर्जलैः ॥
स्नानं कृत्वा नवं वस्त्रं गृहीत्वाच्छादनं ततः ।
द्रष्टव्यं मङ्गलशतं धूपस्रग्धान्यशोभितम् ॥
तत्र नारायणः शक्रश्चन्द्रः [2]पूषा बृहस्पतिः ।
संपूज्याः पुष्पधूपाद्यैर्नैवेद्यैश्च पृथक् पृथक् ॥
प्रशस्तैर्वैदिकैर्मन्त्रैः कृत्वाग्निहवनं शुभम् ।
धनैर्विप्राश्च संतर्प्या नवैर्वस्त्रैश्च शोभिताः ॥
ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् ।
पुष्ययोगे च कर्तव्यं राज्ञा स्नानं च सर्वदा ॥
[3]कृष्णाष्टम्यां तु माघस्य मांसश्राद्धं महाफलम् ।
पितृभिः प्रार्थितं पूर्वं तस्मात्तत्र कारयेत् ॥
[4]माघे तु कृष्णद्वादश्यां यमोऽपि भगवान् पुरा ।
तिलानुत्पादयामास तपः कृत्वा सुदारुणम् ॥
राजा दशरथो भूमौ तस्मात्तानवतारयत् ।
तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः ॥
तस्यामुपोषितः स्नातः तिलैस्तस्माद्यजेद्धरिम् ।
तिलतैलेन दीपाश्च देया देवगृहेषु च ॥

1 सौभाग्योत्साहलक्ष्मीभिः—कृ. र.
2 पुष्यबृहस्पती—कृ. र.
3 कृ. र., ४९५.
4 कृ. र., ४९६.

निवेदयेत्तिलानेव होतव्याश्च तिलास्तथा ।
तिलान् दद्याच्च विप्रेभ्यो भक्षयेच्च तथा तिलान् ॥[1]
[2]माघकृष्णचतुर्दश्यां विष्णोर्देहान्मरीचयः ।
निश्चेरुस्तिलकाकाराः[3] शतशोऽथ सहस्रशः ॥
[4]सुप्तस्य भोगिशयने योगनिद्रागतस्य च ।
उदानपवनोद्धूता रोमकूपेषु सर्वतः ॥
तारणाद्योगिमुख्यानां भिन्ने वैकारिके सति ।
विनाशिन्यः शरीरे ताः सिद्धाः सूक्ष्मत्वमागताः ॥
तिलकाकृतयो जाताः संस्थिताश्च सुधात्मनः ।
तारकास्तु महाघोरात् संसारगहनार्णवात् ॥
तरतिः प्लवने धातुस्तस्मात्तासां निगद्यते ।
अनर्काभ्युदिते काले [5]सत्सु तारांशुकेष्वपि ॥
राजा च तत्र संपूज्यो यमः प्रलयभास्करः ।
सर्वाङ्गसन्धिसंभूता नद्यो विष्णोश्च नित्यशः ॥
अरुणोदयवेलायामारटन्ति च सर्वदा ।
नियुक्ता विष्णुना सर्वाः कस्य पापं पुनीमहे ॥
निमित्तं पञ्चतारेयं[6] तत्र प्रोक्तं यतो भुवि ।
तदा सा तु निशा ज्ञेया ताराराज्ञी[7] सुदारुणा ॥

1 इदं तु भूपालकृत्यसमुच्चये माघकृत्योपसंहारे द्वादश्यां तिलद्वादशीव्रतमिति व्रतरूपतयोपसंहृतम् । कल्पतरुपारिजातादिषु नैयतकालिके लिखितमिति भावनीयम्—कृ. र.

2 कृ. र., ४९६–४९८.

3 निश्चेरुश्चलिताकाराः—ब, ज, द.

4 The following seven lines are omitted by all MSS. but supplied by कृ. र.

5 पञ्चताराङ्ककेष्वपि—ब, द; 'सत्सु तारांशुके शनिः' इति पठित्वा, शनिः शनैश्चरः पूज्य: इति व्याख्यातम्—कृ. र.

6 निमित्तं पञ्चता वेयं—कृ. र.

7 ताराधात्री—कृ. र.

तत्रोपोष्य त्रयोदश्यां संप्राप्ते तु निशाक्षये ।
वितस्तायां विशोकायां [1]चन्द्रवत्यामथापि वा ॥
तथा हर्षपथायां च [2]त्रिकोट्यां वा यथाक्रमम् ।
सिन्धौ कनकवाहिन्यां तीर्थेष्वन्येषु तत्र वा ॥
स्नात्वा पूज्यो जगद्भर्ता हरिः पूज्याश्च तारकाः ।
यमो नद्यश्च तीर्थानि देवताः पितरस्तथा ॥
अर्घैः पुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैः ।
नैवेद्यैर्विविधाकारैः कृसरेण तु भूरिणा ॥
वह्निः पूज्यश्च भगवान् घृताक्तैस्तिलतण्डुलैः ।
नमःप्रणवसंयुक्तान् सतिलांश्च जलाञ्जलीन् ॥
यमाय सप्त वितरेत् धर्मराजाय सप्त च ।
मृत्यवे सप्त देयाश्च तथा सप्तान्तकाय च ॥
वैवस्वताय सप्तान्याः सप्त कालाय चैव हि ।
सप्त देयाश्च विधिवत् सर्वप्राणहराय च ॥
कृसरं भोजनीयाश्च ब्राह्मणास्तदनन्तरम् ।
श्राद्धं कृत्वा पितृभ्यश्च विमुक्तः सर्वपातकैः ॥
ततो विभज्य बन्धुभ्यः कृसरं भक्षयेत् स्वयम् ।
[3]उमाचतुर्थ्यां माघे तु शुक्लायां योगिनीगणैः[4] ॥
[5]प्राग्भक्षयित्वा सृष्ट्वा च भूयः स्वाङ्गाङ्गजैर्गुणैः[6] ।
सहिताः ससृजुर्यस्मात्तस्मात्प्रोक्ता ह्युमा सती ॥

1 इन्द्रवत्यां—कृ. र.
2 त्रिनद्यां—कृ. र.
3 कृ. र., ५०३.
4 कृ. र., adds one line after this : अर्घैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव—च.
5 प्राक् पूजयित्वा—कृ. र.
6 कल्पतरौ प्राग्भक्षयित्वेति पठितम् । अर्घैः पुष्पैरित्यादि श्लोकार्धं न लिखितम्—कृ. र.

तस्मात्सा तत्र संपूज्या नरैः स्त्रीभिर्विशेषतः ।
कुन्दपुष्पैः प्रयत्नेन [1]सपद्मकुसुमाक्षतैः ॥
कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः ।
अर्घैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव च ॥
गुडार्द्रकाभ्यां पयसा लवणेनाथ [2]पानकैः ।
पूज्याः [3]स्त्रियश्चाविधवास्तथा विप्राश्च भोजनैः ॥
सौभाग्यवृद्धये [4]चाथ भोक्तव्यं बन्धुभिः सह ।
[5]शुक्लायां माघसप्तम्यां पूषा नाम महारविः ॥
अदित्यां कश्यपाज्जज्ञे सहस्रकिरणो महान् ।
तस्मात्तं पूजयेत्तत्र सोपवासो जितेन्द्रियः ॥
अर्घैः पुष्पैस्तथा धूपैर्दीपैर्भक्ष्यैर्मनोहरैः[6] ।
नृत्यैर्गीतैस्तथा वाद्यैर्होमैर्ब्राह्मणतर्पणैः ॥
अष्टम्यां च पुनर्भक्ष्यैः पूज्यो घृतमधुप्लुतैः ।
भक्ष्याणि तानि देयानि भक्षितव्यानि तानि च ॥
[7]पौर्णमास्यां मघायोगे वायसाः पञ्च जज्ञिरे ।
इन्द्राच्च वरुणाद्वायोर्यमादथ च नैर्ऋतेः ॥
श्राद्धं पितृभ्यः कर्तव्यं तिलैः पूज्यास्तथा किल ।
ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिकाश्च ये ॥
वायसाः पुण्ययशसस्ते मे गृह्णन्तु भोजनम् ।

1 सम्यग्दूरात्समाहितैः—ना, ब, क, द; सम्यग्दूरात् समाहृतैः—ज; सम्यग्भावात्समाहितैः—कृ. र.

2 यावकैः—कृ. र.

3 स्त्रियश्च विविधाः—ब, क, द.

4 पश्चाद्भोक्तव्यं मधुभिः सह—द, ब; पश्चाद्भोक्तव्यं बन्धुभिः सह—ना, कृ. र.

5 कृ. र., ५०९.

6 मनोऽनुगैः—कृ. र.

7 कृ. र., ५१२.

दद्यादनेन मन्त्रेण तेभ्यो भोक्तुं मधुप्लुतम् ॥
ब्राह्मणान् भोजयित्वा तु भुञ्जीरन् बन्धुभिः सह ।
[1]फाल्गुनस्य च मासस्य कृष्णाष्टम्यां मही मिता ॥
नारदप्रेरितैर्विप्रैर्दक्षपुत्रैः सिसृक्षुभिः ।
सुबुध्या सूक्ष्ममानेन समुद्रगिरिवर्जिता ॥
अतोऽर्थं तु महीमानं स्वल्पं तत्र निगद्यते ।
पितृभिः पूर्वदेवैस्तु तत्र कृत्वा महत्तपः ॥
अपूपैः[2] प्रार्थितं श्राद्धं मनुष्येभ्यो जनार्दनात् ।
अथ सस्यानि [3]पूर्णानि मुनिभिः [4]कमलोद्भवात् ॥
प्रजानां वर्धनार्थाय कदाचित्तत्र सर्वदा ।
जाता दाशरथेः पत्नी तस्मिन्नहनि जानकी ॥
उपोषितो रघुपतिः समुद्रस्य तटे तदा ।
सर्वसस्यैश्चरुस्तस्मात्तत्र कर्तव्य एव हि ॥
सापूपैस्तत्र संपूज्या विप्रसंबन्धिबान्धवाः ।
रामपत्नी च संपूज्या सीता जनकनन्दिनी ॥
ततो नवम्यां लक्ष्मीश्च ब्राह्मणाश्च बहुश्रुताः ।
हृद्येन पिष्टभोज्येन मधुयुक्तेन सर्वदा ॥
बहुप्रकारैर्भोज्यैश्च दशम्यां मित्रबान्धवाः ।
तर्प्यास्त्वात्मा च संपूज्यः श्रोतव्यं गीतवादितम् ॥
मङ्गलालम्भनं कार्यं नित्यमेव दिनत्रयम् ।
[5]कृष्णायां फाल्गुने मासि द्वादश्यां श्रवणे सति ॥

1 कृ. र., ५१८.
2 सापूपं—कृ. र.
3 सर्वाणि—ब, ज, ना, द, कृ. र.
4 कलशोद्भवात्—ब, द, क, ज, ना.
5 कृ. र., ५१९.

चकार भगवान् विष्णुः पिण्डनिर्वपणं महत् ।
पितामहेभ्यः श्राद्धं तु तिलैश्च कृतवान् पुरा ॥
सोपवासो हरिं तस्मात्तत्र संपूजयेत्तिलैः ।
तिलैः संपूजयेद्देवीं तिलांश्च जुहुयात्तथा ॥
तिलतैलेन दीपांश्च दद्याद्देवगृहेष्वपि ।
तिलान् दद्याच्च विप्रेभ्यः पितृभ्यश्च तिलोदकम् ॥
तिलांश्च भक्षयेत्तत्र धर्मवृद्ध्यर्थमात्मनः ।
[1]अथ कृष्णचतुर्दश्यां फाल्गुने मासि शङ्करः ॥
ब्रह्मविष्णू मोहयित्वा [2]ज्वालालिङ्गेन मायया ।
जगल्लिङ्गसहस्रैश्च पूरयामास तत्क्षणात् ॥
ततः प्रभृति रूढा च लिङ्गपूजा कपर्दिनः ।
गौरमृत्तिकया लिङ्गं तस्मात्तत्र सुशोभनम् ॥
कुर्यात् प्रमाणसंयुक्तं[3] त्रयोदश्यामुपोषितः ।
देवोत्थानविधानोक्तैर्द्रव्यैस्तच्च प्रपूजयेत् ॥
अर्घैः सुगन्धिमाल्यैश्च रत्नवस्त्रानुलेपनैः ।
नैवेद्यैर्विविधाकारैर्होमैर्ब्राह्मणतर्पणैः ॥
भुक्त्वा रात्रौ ततः कुर्यान्नृत्यगीतैः प्रजागरः ।
श्रोतव्याः शिवधर्माश्च प्रादुर्भावाश्च शाङ्कराः ॥
अहिंसालक्षणं धर्मं समाश्रित्याथ शङ्करः ।
रम्यैः पिष्टमयैः पूज्यः पशुभिश्च स्वलंकृतैः ॥
[4]अमावास्यायां पूज्याश्च [5]रुद्रोऽग्निर्ब्राह्मणस्तथा ।

1 कृ. र., ५२०.
2 जगल्लिङ्गेन—ब, क, ज, द, कृ. र.
3 'प्रमाणसंयुक्तं' मानोन्मानसंयुक्तम्—कृ. र.
4 कृ. र., ५२२.
5 रुद्रोऽग्निर्वरुणस्तथा—ब, द, ज ; रुद्रार्कवरुणास्तथा—ना.

मांसौदनैर्लोपिकाभिः पूज्यश्चात्मा सबान्धवः ॥
[1]फाल्गुने मासि शुक्लायामष्टम्यां केशवः पुरा ।
महीं सृष्ट्वा तु मनसा[2] सशैलवनकाननाम् ॥
दक्षं प्रजापतिं प्राह सृष्टिमापूरयस्व मे ।
तस्य तद्वचनं श्रुत्वा स मुनिस्तां महीं ततः ॥
मापयामास विधिवद्बृहन्मानेन[3] तत्क्षणात् ।
[4]द्वीपार्णवमरुचन्द्रनदीवर्षसमन्वितैः ॥
बृहन्मानं समुद्रस्य शतयोजनमात्रकम् ।
चक्रे रघुपतिस्तत्र वृक्षपाषाणकर्दमैः ॥
त्रिकूटशिखरप्रान्तसंस्थितो भगवांश्च सः ।
बृहच्च तन्महीमानं पुराणो वीक्ष्य विस्मितः ॥
इयं मही मया सृष्टा पद्भ्यामिति विचिन्तयन् ।
हतस्य कुम्भकर्णस्य महामानं स्मरन्निव ॥
बृहन्मानेन दीपाश्च सबाह्याभ्यन्तरे गृहे ।
दत्तास्तत्र महीदानं कृतं माल्यादिभिः सदा ॥
तस्माद्बृहन्महीमानं[5] यथा कार्यं तथा शृणु ।
अनन्नभुग्भिरष्टम्यां सुस्नातैश्च स्वलंकृतैः ॥
लक्ष्मीः सीता च पूज्याथ[6] गन्धमाल्यादिभिस्तथा ।
ततः प्रदोषसमये दीपाः शतसहस्रशः ॥
नरैर्गृहे गृहे देयाः सर्वदेवीभ्य एव च ।

1 कृ. र., ५२६—५२८.

2 सहसा—क, ब, द.

3 विधिवद्गृहमानेन—उ.

4 The following nine lines are omitted by all MSS. but supplied by कृ. र.

5 गृही महीमानं—ब, द ; तस्माद्गृहमहीमानं—उ.

6 सीता च सम्पूज्या—ब, ज, द, कृ. र,

देवेभ्यश्च पितृभ्यश्च ततो बाह्ये च वेश्मनः ॥
[1]तेषां चोपरि देयाश्च तावत्संख्याश्च दीपकाः ।
अवशिष्टं[2] ततो भोज्यं भक्षितव्यं स्वबन्धुभिः ॥
द्वितीयेऽहनि मध्याह्ने शोभनैर्माल्यदामभिः ।
गृहाणि [3]भूषणीयानि तथा देवगृहाण्यपि ॥
सीतां संपूज्य भोक्तव्यं नृत्यगीतसमाकुलम् ।
पक्वान्नं नित्यदानं च तत्र देयं तु याचते ॥
नान्यत्किंचित्प्रार्थितव्यं लब्धं ग्राह्यमयत्नतः ।
दशम्यां वापि कर्तव्यं बलिकर्म तथाऽऽत्मनः ॥
मङ्गलालम्भनं कार्यमुत्सवश्च विशेषतः ।
ब्राह्मणेभ्यो धनं देयं भृत्येभ्यश्च यथाक्रमम् ॥
धान्यमन्नं सुवर्णं च वस्त्रमाभरणं तथा ।
गोभूमिरत्नवेश्मानि देयानि प्रयतात्मने ॥
संप्राप्तान् ग्राहयेत् सम्यङ् न तत्र [4]ग्लपयेन्मनः ।
न कश्चिद्विमुखस्तत्र कर्तव्यस्त्वागतो जनः ॥
[5]स्वजातिविहितं पानं पेयं देयं च याचते ।
शय्यासने च कर्तव्ये [6]गन्धपुष्पादिवासिते ॥
स्त्रियः पूज्यास्त्वलंकार्याः[7] प्रहृष्टाश्च स्वरक्षिताः[8] ।

1 तुषारोपरि देयाश्च—उ, ना.

2 अन्नपिष्टं—ब, क, द ; अन्नं पिष्टं—ज ; अनुशिष्टं—ना ; दत्तशिष्टं—कृ. र.

3 भूषितव्यानि—ब, ज, द.

4 गोपयेन्मनः—ब, द ; स्नपयेन्मनः—कृ. र.

5 स्वजातिपानं पेयन्तु देयं तच्चैव याचके—ब, क, द, ना ; स्वजातिपानं पेयं च देयं तच्चैव याचके—ज.

6 धूपगन्धाधिवासिते—ब, द, ज ; गन्धपुष्पाधिवासिते—ना, कृ. र.

7 स्वलङ्कार्याः प्रकृष्टाश्चाऽऽशुरक्षिताः—ब, द.

8 सुहृष्टाश्च सुरक्षिताः—ज ; प्रहृष्टाश्च सुरक्षिताः—कृ. र.

निशायां क्रीडमानाश्च नृत्येयुः[1] कृतभोजनाः ॥
[2]फाल्गुन्यामर्यमा जातस्त्वदितौ कश्यपादपि ।
अत्रेश्चाप्यनसूयायां जातः पूर्वमयं शशी ॥
तौ तत्र पूज्यौ विधिवत् प्राप्ते चन्द्रोदये सति ।
गीतनृत्यैस्तथा वाद्यै रात्रौ कार्यः प्रजागरः ॥
[3]अथ चैत्रेषु कृष्णायां प्रतिपद्यपि सर्वदा ।
[4]झल्लमल्लनटानां तु द्रष्टव्यं कौशलं महत् ॥
प्रतिपत्तु[5] समारभ्य पञ्चमीं यावदेव हि ।
पूजाकर्म ततः कार्यं स्त्रीजनस्यात्मनस्तथा ॥
भोजनं पर्पटप्रायं भोज्यं देयं च याचते ।
चैत्रे तु कृष्णपञ्चम्यां [6]कश्मीरा तु रजस्वला ॥
नित्यं भवति तस्मात्तां कृत्वा शैलमयीं स्त्रियः ।
अभ्यङ्गवस्त्रनैवेद्यैः पूजयन्ति दिनत्रयम् ॥
पुष्पालङ्कारधूपैश्च गोरसं वर्जयन्ति च ।
अष्टम्यां च ततः स्नाप्यास्ताभिरेव गृहे गृहे ॥
सुस्नाताभिः प्रकृष्टाभिर्जीवपत्नीभिरेव च ।
भूषिताभिः शुभैर्वस्त्रैर्माल्यैर्गन्धैर्विशेषतः ॥
अनन्तरं द्विजैः स्नाप्याः सर्वौषधियुतैर्जलैः ।
गन्धैर्बीजैस्तथा रत्नैः फलैः सिद्धार्थकैस्तथा ॥
स्नपयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत् ।
वस्त्रालङ्कारपुष्पैश्च तथा पुण्यैश्च गोरसैः ॥

1 नृत्येषु—कृ. र.
2 कृ. र., ५३०.
3 कृ. र., ५३२.
4 झल्लमल्लौ संकरजातिविशेषौ—कृ. र.
5 प्रतिपत्तः—ना, कृ. र.
6 कश्मीरा धरित्री—कृ. र.

मुद्गपिष्टैस्त्रिकोणैश्च तथा भक्ष्यैश्च शालिजैः ।
पयसा पायसैर्हृद्यैर्होमैर्ब्राह्मणतर्पणैः ॥
तन्निवेदितशिष्टं तु प्रार्थितव्यं गृहे गृहे ।
[1]तन्त्रीमनोहरं वाद्यं ततः श्रोतव्यमादरात् ॥
अतः परमृतुस्नाता गर्भं गृह्णाति मेदिनी ।
आदित्यमहिषी राज्ञी पौराणी देवपूजिता ॥
राज्ञीस्नपनमेतस्मात्कारणात्तत्र विश्रुतम् ।
[2]ब्रह्मा विष्णुश्च रुद्रश्च कश्यपः सुरभी तथा ॥
इन्द्रः प्रचेताः पर्जन्यः शेषश्चन्द्रार्कवह्नयः ।
बलदेवो हलं भूमिर्वृषभौ रामलक्ष्मणौ ॥
रक्षोघ्नौ जानकी सीता युगं गगनमेव च ।
एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः ॥
गोमङ्गले तु संपूज्याः कृष्यारम्भे महोत्सवे ।
अर्घैः पुष्पैस्तु धूपैश्च माल्यै रत्नैः पृथक् पृथक् ॥
प्रदक्षिणैर्विधानेन होमैर्ब्राह्मणतर्पणैः ।
ततः शकुनिसूक्तेन वाद्यशब्देन भूरिणा ॥
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलंकृतः ।
पूर्वोत्तरां दिशं गच्छेत् क्रमात् पौरंदरीं शुभाम् ॥
कृत्वा प्रदक्षिणावर्तमैशान्याभिमुखौ ततः ।
विमुच्य वृषभौ बीजं पुरुषो लक्षणान्वितः ॥
तृप्तः सुवासाः स्रग्वी च सुवर्णजलसेवितम् ।
सुवर्णपात्रसंयुक्तं प्राङ्मुखो निपतेद्भुवि ॥
उप्त्वा बीजं तु तत्रैव भोक्तव्यं बन्धुभिः सह ।

1 तन्त्रीवाद्यं तु मधुरं—ना.

2 The following seventeen lines are omitted by all MSS. but supplied by कृ. र.

उत्सवश्चैव कर्तव्यो गीतनृत्यसमाकुलः ॥
पूर्वं त्रेतायुगे कश्चिन्मध्यदेशोद्भवो द्विजः ।
तीर्थयात्राप्रसङ्गेन चचार पृथिवीमिमाम् ॥
विहाय कर्म गार्हस्थ्यं तस्मिन् गेहाद्विनिःसृते ।
प्रसक्ता ब्राह्मणी शूद्रे श्मश्रुकर्मकरे रहः ॥
तस्याः कदाचित्पुत्रस्तु तस्माज्जातो विधेर्वशात् ।
शालिकीर्तिर्विवृद्धश्च सविवेकश्च मातरम् ॥
पप्रच्छ जातसन्देहः पितुर्जन्मात्मनस्तथा ।
वक्रोक्त्या स तया प्रोक्तो गिरितः सरितस्त्विमाः ॥
निम्नं प्रयाता निम्नेषु जाताः पुण्याश्च शालयः ।
स तु तद्वचनं[1] श्रुत्वा दृष्ट्वा सूर्यं च दुर्मनाः ॥
तपश्चचार सुमहन्मरणे कृतनिश्चयः ।
प्रयाणकाले ब्रह्माणमपश्यत्पुरतः स्थितम् ॥
दुर्लभं ब्राह्मणत्वं च न च तस्मात्स लब्धवान् ।
मूढग्राहः स्वमात्मानं पीडयित्वा विचेतनः ॥
निष्फलं तु ततस्त्यागं परपीडार्थमाचरेत् ।
एकादश्यां तु चैत्रस्य कृष्णायां निर्जने मृतः ॥
यक्षात्पिशाच्यां मत्तायां लेभे जन्माथ तामसम् ।
जघन्यां यक्षजातिं च गौह्यकीं तां समाश्रितः ॥
अद्यापि तत्फलं भुङ्क्ते तावन्मात्रं तु तामसम् ।
तस्मात्स तत्र संपूज्यः स्त्रीभिश्च प्रातरेव हि ॥
पाषाणे वर्तुलप्राये मृन्मये वापि चित्रितः ।
अर्घैः पुष्पैस्तथा धूपैः कुङ्कुमेन सुगन्धिना ॥
औरभ्रलोमभिर्मत्स्यैर्भक्ष्यैरुच्चावचैरपि ।

1 मातुस्तद्वचनं—ना.

तत्र विप्रैरनध्यायः कर्तव्यो वाचि संयमः ॥
ततो मध्याह्नसमये मृन्मये च विचित्रितः ।
क्षिप्त्वा द्वारेण निष्कास्य स्त्रीभिरेव सुभाषितैः ॥
क्षिप्त्वा गवाक्षरन्ध्रेण प्रवेश्यश्च पुनर्गृहे ।
[1]चैत्रकृष्णे चतुर्दश्यां निकुम्भः शङ्करं सदा ॥
[2]पूजयति च धर्मात्मा पिशाचैः सहितो बली ।
तस्यां निशायां कर्तव्यो नरैर्नित्यं प्रजागरः ॥
शम्भुः पूज्यो निकुम्भश्च पिशाचेभ्यो बलिं हरेत् ।
दीपिकास्तिलतैलस्य कल्केनोक्ताः सुशोभनाः ॥
मत्स्यमांसानि भूरीणि तथा [3]माषोदनं शुभम् ।
भक्ष्याणि परमान्नानि पानकानि शुभानि च ॥
वृक्षमूलेषु गोष्ठेषु तथा शून्यगृहेषु च ।
चतुष्पथेषु रथ्यासु चत्वरेषु नदीषु च ॥
देवालयेषु पुण्येषु वृक्षकोटरकेषु च ।
अट्टालकश्मशानेषु राजमार्गेषु सर्वदा ॥
तस्यां निशायां रक्ष्यास्तु पिशाचेभ्यश्च बालकाः ।
द्रष्टव्यं पुंश्चलीनृत्यं न कुर्यात्स्त्रीनिषेवणम् ॥
अमावास्यां तु चैत्रे सारमेयैश्च काश्यपैः ।
वासुदेवाद्वरो लब्धः प्रभूतं भोजनं त्विति ॥
वैवस्वतकुले जातौ द्वौ श्यावशबलौ शुभौ ।
वरं यस्माच्च लेभाते यमद्वारनिवासनम् ॥
तस्मात्तत्र पितॄन् देवान् तर्पयित्वा द्विजैः सह ।
शुनामन्नं प्रभूतं तु पश्चाद्देयं यथेप्सितम् ॥

1 चैत्रकृष्णे तु द्वादश्यां—ब.
2 संपूजयति धर्मात्मा—ज.
3 मांसोदनं—ज.

प्रतिमासाद्यदिवसे सर्वैः कार्यो महोत्सवः ।
अत्यन्तदुष्टे सौराहे मङ्गलालम्भनं तथा ॥
[1]सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं यस्मात् [2]कर्तव्यस्तु महोत्सवः ॥

[3]इति राजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण भट्टहृदयधरात्मजेन भट्टश्रीमल्लक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्डे तिथिकृत्यानि[4] ॥

1 कृ. र., ५४०.

2 कर्तव्याश्च महोत्सवाः—ब, ज, द.

3 इति भट्टश्रीहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कल्पतरौ नियतकलकृत्यकाण्डे तिथिकृत्यानि । शुभं भूयात् । लिपिरियं शुभङ्करपुरेवासि पं. श्रीरघुनाथशर्मणः ।—ब, द; इति श्रीभट्टश्रीलक्ष्मीधरविरचिते नैयतकालिके तिथिकृत्यानि—ज; इति तिथिकृत्यानि—द, ब.

4 द and ब MSS. end here.

॥ ११ ॥

# अथ कान्तारदीपदानादिविधिः

## अथागस्त्यादेरर्घदानविधिः

मत्स्यपुराणे[1]

नारदोवाच—

कथमर्घप्रदानादि कर्तव्यं तस्य वै [2]विभो ।
विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥

ईश्वरोवाच—

प्रत्यूषसमये विद्वान् कुर्यात्तस्योदये निशि ।
स्नानं शुक्लतिलैस्तद्वच्छुक्लमाल्याम्बरो गृही ॥
स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् ।
पञ्चरत्नसमायुक्तं घृतपात्रेण संयुतम् ॥
नानाभक्ष्यफलैर्युक्तं ताम्रपात्रसमन्वितम् ।
अङ्गुष्ठमात्रं पुरुषं तथैव
सौवर्णमत्यायतबाहुदण्डम् ।
चतुर्मुखं[3] कुम्भमुखे निधाय
धान्यानि सप्ताम्बरसंयुतानि ॥

1 कृ. र., २९४–२९६.

2 प्रभो—ज, क, कृ. र.

3 चतुर्भुजं—क, ज, कृ. र,

सकांस्यपात्राक्षतशुक्तियुक्तं
मन्त्रेण दद्याद्द्विजपुंगवाय ।
उत्क्षिप्य लम्बोदरदीर्घबाहु-
मनन्यचेता यमदिङ्मुखस्थः ॥
श्वेतां च दद्याद्यदि शक्तिरस्ति
रौप्यैः खुरैर्हेममयीं[1] सवत्साम् ।
धेनुं नरः क्षीरवतीं प्रणम्य
सवस्त्रघण्टाभरणां द्विजाय ॥
आसप्तरात्रादुदयेऽर्घमस्य
दातव्यमेतत्सकलं नरेण ।
यावत्समाः सप्त दशाथवा स्यु-
रथोर्ध्वमप्येव वदन्ति केचित् ॥
काशपुष्पप्रतीकाश अग्निमारुतसन्निभ ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोस्तु ते ॥
प्रत्यब्दं च फलत्यागमेवं कुर्वन्न सीदति ।
होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलम् ॥
अनेन विधिना यस्तु पुमानर्घं निवेदयेत् ।
इन्द्रलोकमवाप्नोति रूपारोग्यसमन्वितः ॥
सप्तैव लोकानाप्नोति सप्तार्घ्यान् यः प्रयच्छति ।
[2]यावदायुश्च यः कुर्यात् परं ब्रह्माधिगच्छति ॥
इति पठति शृणोति वा य एत-
द्वसुयुगलप्रभवस्य संप्रदानम् ।

1 हेममुखीं—क, ज, ना, कृ. र.

2 The following five lines are omitted by all MSS. but supplied by कृ. र., २९६.

सकृदपि च ददाति सोऽपि विष्णो-
र्भवनगतः परिपूज्यते नरौघैः ॥

ब्रह्मपुराणे[1]

अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः ।
वरुणस्यात्मजो योगी विन्ध्यपादविमर्दनः ॥
कन्यांशेभ्यः पश्चिमेभ्यः षड्भ्यः प्रारभ्य संख्यया ।
अंशान् द्वासप्ततिं[2] यावद्भुङ्क्ते सूर्यस्तु राशिषु ॥
उदेति तावद्भगवानगस्त्यो व्योम्नि तोयभुक् ।
ऋक्षांशेभ्यः पश्चिमेभ्यः षड्भ्यः प्रारभ्य पूर्ववत् ॥
षट्त्रिंशतिं च यावच्च भुङ्क्ते भानुर्यथाक्रमम् ।
तावच्छान्तस्तु पातालं प्रयात्यस्तमुपैति च ॥
कृतोपवासः संपश्येदगस्त्यमुदितं मुनिम् ।
सर्वकामप्रदं पुण्यं सर्वभाग्यप्रवर्धनम् ॥
अर्चितव्यश्च भगवान् श्रद्धाभक्तिसमन्वितः ।
पूर्णकुम्भैः सुकूष्माण्डैर्यवैर्धान्यैर्घृतेन च ॥
जातीपद्मोत्पलैः [3]शुद्धैश्चन्दनेन [4]शुभेन च ।
गन्धैर्घृतैस्तथा वस्त्रै रत्नैः सागरसंभवैः ॥
उपानच्छत्रदण्डैश्च पादुकाजिनवल्कलैः ।
भूरिणा परमान्नेन फलैः पुष्पैश्च शोभनैः ॥
अन्नप्रकारैर्भक्ष्यैश्च होमैर्ब्राह्मणतर्पणैः ।
आशास्य च शुभं काममुद्दिश्य च मनोगतम् ॥

1 कृ. र., २९७–२९८.
2 द्वाविंशतिं—ज, कृ. र.
3 पुष्पैः for शुद्धैः—क ; शुभ्रैः—ज, ना, कृ. र.
4 सितेन च—ज, ना, कृ. र.

यद्यहं प्राप्नुयां कामं भगवन् मनसेप्सितम् ।
त्वत्प्रसादादविघ्नेन भूयस्त्वां पूजयाम्यहम् ॥
इत्युक्त्वा पूजयेत्पश्चाद्दैवज्ञांश्च तथा गुरून् ।
ब्राह्मणान् भोजयित्वा तु ततो भुञ्जीत वाग्यतः ॥

[1]नरसिंहपुराणे—[६७, १२]

यदागस्त्योदये प्राप्ते तदा सप्तसु रात्रिषु ।
अगस्त्याय ददात्यर्घं महापुण्यविवृद्धये[2] ॥
शङ्खे तोयं विनिक्षिप्य सितगन्धाक्षतैर्युतम्[3] ।
मन्त्रेणानेन वै दद्याच्छ्वेतपुष्पसमन्वितम्[4] ॥

'[5]काशपुष्प' इत्यादिमन्त्रः पठनीयः 'आतापी भक्षित' इति च ॥

एवं तु यो ददात्यर्घमगस्त्याय महामुने ।
सर्वपापविनिर्मुक्तः सदा तरति दुर्गतिम् ॥

मत्स्यपुराणे—[७३, १-११]

पिप्पलादोवाच—

अथातः शृणु भूपाल प्रतिशुक्रं प्रशान्तये ।
यात्रारम्भेऽवसाने च तथा शुक्रोदयेष्विह ॥

1 कृ. र., २९८.
2 अर्घ्यं दद्यात्समभ्यर्च्य अगस्त्याय महामुने—मुद्रितपाठः.
3 पुष्पाक्षतैर्युतम्—मु, पाठः, कृ. र.
4 पुष्पादिनार्चितम्—मु, पाठः.
5 काश पुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥
आतापी भक्षितो येन वातपी च महासुरः ।
समुद्रः शोषितो येन सोऽगस्त्यः प्रीयतां मम ॥
एवं तु दद्याद्यो सर्वमगस्त्ये वै दिशं प्रति ।—इति मुद्रितकोशे कृत्यरत्नाकरे च पाठः

राजते वाथ सौवर्णे कांस्ये पात्रेऽथवा पुनः ।
शुक्लपुष्पाम्बरयुते सिततण्डुलपूरिते ॥
निधाय राजतं शुक्रं शुचिमुक्ताफलान्वितम् ।
महाश्वेतगवा युक्तं सामगाय निवेदयेत् ॥
नमस्ते सर्वलोकेश नमस्ते भृगुनन्दन ।
मयि सर्वार्थसिध्यर्थं गृहाणार्घ्यं नमोऽस्तु ते ॥
यः स शुक्रोदये कुर्याद्यात्रादिषु च भारत ।
सर्वान् कामानवाप्नोति विष्णुलोके महीयते ॥
तद्वद्वाचस्पतेः पूजां प्रवक्ष्यामि युधिष्ठिर ।
सुवर्णपात्रे सौवर्णममरेशपुरोहितम् ॥
पीतपुष्पाम्बरयुतं कृत्वा स्नात्वा च सर्षपैः ।
पलाशाश्वत्थभृङ्गेन पञ्चगव्यतिलेन च ॥
पीताङ्गरागवत्सर्वं घृतहोमं तु कारयेत् ।
प्रणम्य च गवा सार्धं ब्राह्मणाय निवेदयेत् ॥
नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते ।
क्रूरग्रहैः पीडितानाममृतौघ नमो नमः ॥
संक्रान्तावपि कौन्तेय यात्रास्वभ्युदयेषु च ।
कुर्वन् बृहस्पतेः पूजां सर्वान् कामान् समश्नुते ॥

## अथ कान्तारदीपदानविधिः

तत्र मत्स्यपुराणे[1]

पूर्वमाश्वयुजे मासि पौर्णमास्यां समाहितः ।
प्रथमे च निशारम्भे मनोवाक्कायसंयुतः ॥
नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे ।

1 पद्मपुराणे—क ; ब्रह्मपुराणे—कृ. र., ३८२–३८६.

नमो धर्माय रुद्राय कान्तारपतये नमः ॥
दद्यादनेन मन्त्रेण दीपं श्रद्धासमन्वितः ।
यः कार्तिकं समग्रं तु वर्धते तस्य संपदः ॥
दिवाकरेऽस्ताचलमौलिभूते
गृहाददूरे पुरुषप्रमाणम् ।
यूपाकृतिं यज्ञियवृक्षदारु-
मारोप्य भूमावथ तस्य मूर्ध्नि ॥
पञ्चाङ्गुला मध्यकेन्द्रेण युक्ता
द्विहस्तदीर्घा अथ पट्टिकास्तु ।
कृत्वा चतस्रोऽष्टदलाकृतीश्च
याभिर्भवेदष्टमार्गानुसारः ॥
तत्कर्णिकायां तु महाप्रकाशा
दीपास्तु देया दलगास्तथाष्टौ ।
उदङ्मुखान् दीपवरांश्च तैल-
घृतार्धयुक्तांश्च यथोपलब्धान् ॥
अनङ्गलग्नं त्वथ वस्त्रखण्डं
नवं सुरक्तं त्वथवा सुशुक्लम् ।
वर्त्यां प्रयोज्यं चषकं च हृद्यं
स्निग्धं त्वखण्डेन्दुसमं प्रशस्तम् ॥
तच्छालिपिष्टोपरि संनिधाय
यथा न नश्येन्न च कम्पयेत वा ।
सर्वं प्रकुर्यात्त्रिगुणप्रमाणं
मध्ये स्थितस्याप्यथ दीपराज्ञः ॥
दलेषु शोभार्थमतीव कुर्या-
न्मनोरथप्राप्त्युपलब्धये च ।

घण्टाष्टकं लम्बितपुष्पदाम-
वस्त्रोपशोभान्वितमत्र पश्चात् ॥
संयोज्य भूमिं त्वथ गोमयेन
सचन्दनाक्तेन जलेन लिप्त्वा ।
अनेकवर्णैरथ मण्डलं तु
कृत्वाष्टपत्रं कमलप्रमाणम् ॥
फलानि मूलानि तथैक्षवं च
लाजा दधि क्षीरमथान्नपानम् ।
नानाविधं भक्ष्यविशेषकं च
सनृत्यगीतं मधुरं च वाद्यम् ॥
निवेद्य धर्माय हराय भूमौ
दामोदरायाप्यथ धर्मराज्ञे ।
प्रजापतिभ्यस्त्वथ सत्पितृभ्यो
प्रेतेभ्य एवानुमतः स्थितेभ्यः ॥
नैर्ऋत्यकोणादथ दक्षिणान्तं
धर्मादिभ्यः प्रेतपर्यन्तकेभ्यः ।
ततो जलं शीतलमानयित्वा
सर्पिःसमायुक्तमतीव हृद्यम् ॥
आपूर्य चाष्टौ कलशांश्च तेन
नैर्ऋत्यकोणादथ संनिधाय ।
होमादिपात्रं तिलपूर्णमेव[1]
दद्यात्पिधानं च स दक्षिणां च ॥
गोभूहिरण्यं रजतं च वस्त्रं
फलानि मूलानि यवानि धान्यम् ।
गृहं रथं शयनं वाहनं च
यच्चाथ किंचिद्धृदये मनोज्ञम् ॥

1 जलपूर्णमेव—कृ. र.

निवेदयेद्ब्राह्मणसत्तमेभ्यो
नैर्ऋत्यकोणादथ संस्थितेभ्यः ।
एकैकशः प्रीणनं चात्र कुर्या-
द्धर्मादिभ्यः प्रेतपर्यन्तकेभ्यः ॥
एतत्समग्रं विधिवच्च कुर्यात्
स्वशक्तिमादौ स्वधनं विचार्य ।
दीपान् समग्रानथ वर्जयित्वा
सर्वं नयेयुस्त्वथ विप्रमुख्याः ॥
प्रदक्षिणीकृत्य चिरं गताश्च
ततो भवेत्संयतनक्तभोजी ।
इतीदमीदृग्व्यवहारयुक्तं
निशामुखे प्रत्यहमेव कुर्यात् ॥
मासं समग्रं परया च भक्त्या
समाप्यते कार्तिकपौर्णमास्याम् ।
एवं कृते नाकलोकाद्विशिष्टं
सुखं भवेत् प्रेतलोकस्थितेभ्यः ॥
अथेदृशं चाश्वयुज्यां सकृद्वा
पुनस्त्वमायां दिवसेऽथ पैत्र्ये ।
कुर्यान्नतः कार्तिकपौर्णमास्यां
दिनत्रयं दीपमहोत्सवं च ॥
एकोऽथवा दीपवरश्च देयो
रात्र्यागमे कार्तिकपौर्णमास्याम् ।
दरिद्रवेश्मस्वथ गोकुलेषु[1]
श्मशानदेवायतनेषु चैत्ये ॥
नदीतटे चित्रगुहान्तरे वा-
प्यथैकलिङ्गेप्यथ चैत्यवृक्षे ।

1 काननेषु—क. र.

अष्टाधिकं तेन सहस्रमात्रं
  विधाय पात्रे सुशुभे शतं वा ॥
पलैरथार्धैरथवा तदर्धैः
  प्रमाप्य रिक्तस्त्वथ माषकैर्वा ।
हस्तार्धमात्रैश्च चतुर्दशाख्यैः
  प्रमाप्य वस्त्रं त्वथ सूत्रकं वा ॥
प्रज्वालयेत्तत्र निरूप्य धीमान्
  स्त्रीणामलंकारशतैः प्रपूज्य ।
देया महावर्तिरतीव हृद्या
  पुण्या च सा स्याद्भुवनप्रकाशा ॥
एतन्न कुर्यादथ यस्तु मन्द-
  स्तस्यान्धकारस्य कुतः प्रशान्तिः ।

॥ १२ ॥

# अथ गोपरिचर्या

[1]तत्र विष्णुः—[२३, ५७-६१]

गावः पवित्रं मङ्गल्यं गोषु लोकाः प्रतिष्ठिताः ।
गावो वितन्वते यज्ञं गावः सर्वाघसूदकाः ॥
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ।
षडङ्गमेतत्परमं माङ्गल्यं सर्वदा गवाम् ॥
शृङ्गोदकं गवां पुण्यं सर्वाघविनिसूदनम् ।
[2]गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ॥
गवां ग्रासप्रदानेन स्वर्गलोके महीयते ।
गवां हि तीर्थे वसतीह गङ्गा
पुष्टिस्तथासां रजसि प्रसिद्धा ॥
लक्ष्मीः करीषे प्रणतौ च धर्म-
स्तासां प्रणामं सततं च कुर्यात् ।

[3]वराहपुराणे

प्रस्रवे यो गवां स्नायाद्रोहिण्यां यो नरो द्विजः ।
स सर्वपापजातानि दहत्याशु न संशयः ॥

1 हेमाद्रौ दानखण्डे, (हे. दा.) ९६२.

2 हे. दा., ९७१.

3 हे. दा., ९७३.

लाङ्गूलेनोद्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः ।
सरित्स्वनुप्रयान्तीनां स पापेभ्यः प्रमुच्यते ॥
धेनुस्तनाद्विनिष्क्रान्तां धारां क्षीरस्य यः पिबेत् ।
शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते ॥

[1]ब्रह्मपुराणे

गावः स्तुत्याश्च[2] पूज्याश्च गावः सेव्याश्च नित्यशः ।
गवां गोष्ठस्थितानां तु यः करोति प्रदक्षिणम् ॥
प्रदक्षिणीकृतं तेन जगत्सदसदात्मकम् ।

तथा

यज्ञोपवीतं तद्बालैः पुच्छोत्थैर्मुनिभिः कृतम् ॥
युद्धे भग्नं तु यच्छृङ्गं दक्षिणं पतितं भुवि ।
निर्मांसं प्राप्य विधिवत् पूरयित्वा जलेन च ॥
स्नानं कृतं च मुनिभिर्देवैः सिद्धैश्च सर्वदा ।
अलक्ष्मीनाशनं धन्यं सर्वसौभाग्यवर्धनम् ॥
[3]ओं तृणोदकाद्येषु वनेषु मत्ताः
क्रीडन्तु गावः सवृषाः सवत्साः ।
क्षीरं प्रमुञ्चन्तु सुखं स्वपन्तु
शीतातपव्याधिभयैर्विमुक्ताः ॥
इमं मन्त्रं सुशुद्धात्मा जपेन्नित्यं समाहितः ।
गच्छन् तिष्ठन् स्वपञ्जिघ्रन् भुञ्जन् क्रीडन् समुच्छ्वसन् ॥
पञ्चविंशो महामन्त्रः पठितस्तु सुरासुरैः ।
श्रुतोऽनुमोदितो ध्यातः कीर्तितः पूजितः क्रमात् ॥

1 हे. दा., ९६१–९६२.
2 वन्दनीयाश्च—हे. दा.
3 हे. दा., ९६५.

तदा रसातलाद्गावः पञ्चपुण्याः समुत्थिताः ।
नन्दा सुनन्दा सुरभी सुशीला सुमना तथा ॥
रत्नान्यनेकान्यादाय कौस्तुभप्रभृतीनि च ।
प्रदक्षिणीकृतास्ताश्च सर्वैर्देवासुरैः क्रमात् ॥
संस्कृताः पूजिताः सम्यग्दृष्टाः स्पृष्टाश्च वन्दिताः ।
कस्यचित्त्वथ कालस्य दिव्यास्ताः कामधेनवः ॥
ब्रह्मस्थानार्चितास्तुष्टा वव्रिरे वरमुत्तमम् ।
दक्षात्प्रजापतेर्जन्म मरीचं कश्यपं प्रति ॥
शिवलोके च गमनं न भूयो जन्म कुत्रचित् ।
वने वासस्तृणं तोयं भोजनं निष्परिग्रहम् ॥
दृढेन मृदुना बन्धः पाशेनास्तृतवेश्मनि ।
[1]घासग्रासादिकं भूरि निशि दीपं तु भास्वरम् ॥
इतिहासपुराणानां श्रवणं सोपवीणनम् ।
अन्नमुष्टिर्यथाशक्त्या परिचर्या यथाक्रमम् ॥
ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदाचन ।
तासां मूत्रपुरीषेषु नोद्वेगः क्रियते क्वचित् ॥
शोधनीयश्च गोवाटः शुष्कैः क्षारादिभिः सदा ।
ग्रीष्मे वृक्षाकुले वेश्म शीततोयविकर्दमे ॥
वर्षासु वाथ शिशिरे सुखोष्णे वातवर्जिते ।
गोकुले रुद्रमुख्याश्च प्रतिष्ठाप्या गणैः सह ॥
जापकैः सर्वमन्त्रैश्च जप्तव्यास्त्वात्मशुद्धये ।
उच्छिष्टमूत्रविट्श्लेष्ममलं जह्याच्च तत्र च ॥
रजस्वला न प्रवेश्या नान्यजातिर्न पुंश्चली ।
न ताः परिभवेत्तोये गोकुले तु विशेषतः ॥

1 हे. दा., ९६५.

न लङ्घयेद्वत्सतरीन् क्रीडयेद्गोष्ठसन्निधौ ।
न गन्तव्यं गवां मध्ये सोपानत्कैः सपादुकैः ॥
हस्त्यश्वरथयानैश्च संवितानैः कदाचन ।
दक्षिणोत्तरतः प्रह्वैर्गन्तव्यं च पदातिभिः ॥
गावः कृशातुराः पाल्याः श्रद्धया पितृमातृवत् ।
गिरिप्रपातसिंहर्क्षशीतातपभयात्तथा ॥
महाकोलाहले घोरे दुर्दिने देशविप्लवे ।
गवां तृणानि देयानि शीतलं च ततो जलम् ॥

तथा

गावः संवत्सरं रक्ष्याः सर्वपापप्रशान्तये ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च सुसमाहितैः ॥

[1]हारीतः

द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनं चैव यथान्यायं यथाबलम् ॥

[2]ब्रह्मपुराणे

आषाढ्यामाश्वयुज्यां च पौष्यां चैत्र्यां च सर्वदा ।
न गृह्णीयाद्गवां क्षीरं सर्वं वत्साय निक्षिपेत् ॥
न षण्डं वाहयेद्धेनुं न गां भारेण पीडयेत् ।
युगाद्येषु युगान्तेषु षडशीतिमुखेषु च ॥
दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः ।
संक्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः ॥
पञ्चदश्यां चतुर्दश्यां द्वादश्यामष्टमीषु च ।

1 हे. दा., ९६३-९६४.
2 हे. दा., ९६४.

उपचारो गवां कार्यो मासि मासि यथाक्रमम् ॥
लवणस्य च चत्वारि पलान्यष्टौ घृतस्य वा ।
परकीयस्य दुग्धस्य तथा देयानि षोडश ॥
द्वात्रिंशच्छीतलस्यापि जलस्यापि पलानि च ।
आदौ विचार्य वै सर्वं परिणामं बलं रुचिम् ॥
आकस्मिकं तु दातव्यं पुण्यार्थं तु गवाह्निकम् ।
प्रभाते लवणं तत्र दीयते च ततो जलम् ॥
ततस्तृणानि भोज्यं च पोषणं मांसवर्जितम् ।
निशि दीपः सतन्त्रीको दिव्या पौराणिकी कथा ॥
एवं कृते रत्नपूर्णां महीं दत्वा भवेत्फलम् ।
गोप्रदानात्तु यत्पुण्यं गवां संरक्षणाद्भवेत् ॥
मनुष्यैस्तृणतोयाद्यैर्गावः पाल्या विशेषतः ।
देयाः पोष्याश्च रक्ष्याश्च पूज्या ग्राह्याश्च सर्वदा ॥

[1]पद्मपुराणे

सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव ।
नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ॥
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।
मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात् ॥

[2]आदित्यपुराणे

लवणं च यथाशक्त्या गवां यो वै ददाति च ।
तेषां पुण्यकृतां लोका ब्रह्मलोकं व्रजन्ति ते ॥
योऽग्रं भक्त्या किंचिदप्राश्य दद्या-
द्गोभ्यो नित्यं गोव्रती सत्यवादी ।

1 हे. दा., ९६२.
2 हे. दा., ९६२–९६३.

शान्तो बुद्धो गोसहस्रस्य पुण्यं
संवत्सरेणाप्नुयाद्धर्मशीलः ॥

[1]भविष्यपुराणे

गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ॥
गवामस्थि न लङ्घेत मृतगन्धं न वर्जयेत् ।
यावदाघ्राति तं गन्धं तावत्पुण्येन युज्यते ॥

[2]देवीपुराणे

गोरूपाणां गवां गोष्ठे यस्तु धूमं न कारयेत् ।
[3]मक्षिकाणां च नरके मक्षिकाभिः स भक्ष्यते ॥
मृतवत्सां तु गां यस्तु दमित्वा पिबते नरः ।
[4]ताडिताभिश्चिरं तिष्ठेत् क्षुधार्तो वै नराधमः ॥

[5]महाभारते

गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥
कृत्वा गवार्थे शरणं शीतवातक्षमं महत् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥

शपथेषु सुरभीवाक्यम्

बल्वजेन निवापेन कांस्ये भवतु दोहनम् ।

1 हे. दा., ९७१, ९७२.
2 हे. दा., ९६३.
3 मक्षिकानीलनरके—हे. दा.
4 वाहितास्याश्चिरं—हे. दा.
5 हे. दा., ९६३.

दुह्येत परवत्सेन यो मे हरति दुष्कृतम् ॥

स्कन्दपुराणे

कपिला यस्य गोष्ठे स्यादनग्नेर्ब्राह्मणस्य च ।
स याति दुस्तरं घोरं नरकं तत्तमोमयम् ॥

[1]ब्रह्मपुराणे

सदोषा गौर्गृहे जाता परिपाल्या सदा स्वयम् ।
दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः ॥
अनाथानां गवां यत्नात् कार्यस्तु शिशिरे मठः ।
पुण्यार्थं यत्र दीयन्ते तृणतोयेन्धनानि च ॥

1 हे. दा., ९६३.

॥ १३ ॥

# अथ वृषोत्सर्गः

तत्र विष्णुः[1]—[८६, १–२०]

कार्तिक्यामाश्वयुज्यां वा तत्रादौ[2] वृषभं परीक्षेत्। जीवद्वत्सायाः पयस्विन्या [3]वत्सम्। सर्वलक्षणोपेतम्। नीलम्[4]। लोहितं वा [5]मुखपुच्छपादेषु सर्वशुक्लम्। यूथस्याच्छादकम्। ततो गवां मध्ये सुसमिद्धाग्निं परिस्तीर्य पौष्णं चरुं श्रपयित्वा पूषा गा अन्वेतु न इह रतिरिति च हुत्वा वृषमयस्कारस्त्वाह्वयेत्[6]। एकस्मिन् पार्श्वे चक्रेणापरस्मिन् शूलेनाङ्कितं च हिरण्यवर्णा इति चतसृभिः शन्नो देवीरिति च स्नापयेत्। स्नातमलंकृतं स्नातालंकृताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय रुद्रान् पुरुषसूक्तं कूष्माण्डीश्च जपेत्। पिता वत्सानामिति वृषभस्य दक्षिणे कर्णे पठेत्। इमं च।

वृषो हि भगवान् धर्मश्चतुष्पादः प्रकीर्तितः।
वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः॥

1 हेमाद्रौ व्रतखण्डे द्वितीयभागे, (हे. व्र.) ९८३–९८४.

2 तत्रादावेव—मु. वि. स्मृ.

3 पुत्रम्—क, ज, ना, मु. वि. स्मृ., हे. व्र.

4 नीलग्रीवम्—ज.

5 मुखपुच्छपादश्टङ्गशुक्लम्—मु. वि. स्मृ.

6 अङ्कयेत्—मु. वि. स्मृ.

एतं युवानं पतिं वो ददामि
तेन क्रीडन्तीश्चरथ प्रियेण ।
मा हास्महि प्रजया मा तनूभि-
र्मा रधाम द्विषते सोम राजन् ॥
वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि ।
होतुर्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च ॥
अयस्कारस्य दातव्यं वेतनं मनसेप्सितम् ।
भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत् ॥
उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये ।
शृङ्गाग्रेणोल्लिखेद्भूमिं[1] यत्र क्वचन दर्पितः ॥
पितॄणामन्नपानं तत् प्रभूतमुपतिष्ठति ।

ब्रह्मपुराणे[2]

अथ चैत्र्यां वृषोत्सर्गः कार्तिक्यां वा विशेषतः ।
कर्तव्यस्त्वथ रेवत्यां[3] त्रिभिर्वर्णैर्द्विजातिभिः ॥
वृषभः कृष्णसारस्तु प्रत्यग्रस्तु त्रिहायनः ।
मनोज्ञो दर्शनीयश्च सर्वलक्षणसंयुतः ॥
[4]अष्टाभिर्धेनुभिर्युक्तश्चतुर्भिरथवा क्रमात् ।
त्रिहायनीभिर्धन्याभिः सुरूपाभिश्च शोभितः ॥
सर्वोपकरणोपेतः सर्वसस्यचरो महान् ।
उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात्[5] ॥
प्रागुदक्प्रवणे देशे मनोज्ञे निर्जने वने ।

1 शृङ्गेणोल्लिखते भूमिं—हे. ब्र.
2 हे. ब्र., ९८४–९८५.
3 कर्तव्यः श्लक्ष्णशश्वेत:—हे. ब्र.
4 श्रेष्ठाभिः—उ.
5 उत्सृष्टो विधिनानेन अपि स्मृतिविधानत:—हे. ब्र.

न वाह्यो न च तत्क्षीरं पातव्यं केनचित् क्वचित् ॥
स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि [1]तर्पयेत् ।
[2]पितृपक्षास्तु ये केचिद्ये चान्ये [3]मातृपक्षजाः ॥
गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ॥
वृषोत्सर्गेण ते सर्वे लभन्ते तृप्तिमुत्तमाम् ।
दद्यादनेन मन्त्रेण तिलाक्षतयुतं जलम् ॥
पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणाम् ।
ततः प्रमुदितास्तेन वृषभेण समन्विताः ॥
वनेषु गावः क्रीडन्ति वृषोत्सर्गप्रसिद्धिषु[4] ।
अप्रवृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः ॥
ब्राह्मणानाह यत्किंचिद्येनोत्सृष्टं[5] तु निर्जने ।
तत्कश्चिदन्यो न नयेद्विभाज्यं च यथाक्रमम् ॥
वृषोत्सर्गादृते नान्यत् पुण्यमस्ति महीतले ।

मत्स्यपुराणे[6]—[२०७, २–४१]

धेनुमादौ परीक्षेत सुशीलां लक्षणान्विताम् ।
अव्यङ्गामपरिक्लिष्टां[7] जीवद्वत्सामरोगिणीम् ॥
स्निग्धवर्णां स्निग्धखुरां स्निग्धशृङ्गां तथैव च ।
मनोहराकृतिं सौम्यां सुप्रमाणामनुद्धताम् ॥

1 तृप्तये—हे. ब्र.
2 मातृपक्षास्तु—हे. ब्र.
3 पितृपक्षजाः—हे. ब्र.
4 वृषोत्सर्गप्रसिद्धये—हे. ब्र.
5 यत्किंचिन्मयोत्सृष्टं—हे. ब्र.
6 हे. ब्र., ९८५–९८९.
7 अपरिक्लिष्टां—हे. ब्र.

आवर्तैर्दक्षिणावर्तैर्युक्ता दक्षिणतश्च या ।
वामावर्तैर्वामतश्च विस्तीर्णजघना तथा[1] ॥
मृदुसंहतताम्रोष्ठी रक्तजिह्वा सुपूजिता ।
आस्यावदीर्घा स्फुटितरक्तजिह्वा तथा च या ॥
ताम्राभाविलनेत्रा च शफैरविरलैर्दृढैः ।
वैडूर्यमधुवर्णैश्च जलबुद्बुदसन्निभैः ॥
रक्तस्निग्धैश्च नयनै रक्तैश्चैव च नीलकैः ।
सप्तचतुर्दशदन्ता भवेदश्यामतालुका ॥
उरः पृष्ठं शिरः कुक्षिः श्रोणी च वसुधाधिप ।
षडुन्नतानि धेनूनां पूजयन्ति विचक्षणाः ॥
कर्णौ नेत्रे ललाटं च पञ्च भास्करनन्दन ।
समायतानि शस्यन्ते पुच्छं [2]सास्ना च सक्थिनी ॥
चत्वारश्च स्तना राजन्नेवमष्टौ मनीषिभिः ।
शिरोग्रीवायुतास्त्वेते[3] भूमिपाल स्मृता दश ॥
तस्मात्तु तं परीक्षेत वृषभं लक्षणान्वितम् ।
उन्नतस्कन्धककुदं [4]मृदुलाङ्गूलभूषितम् ॥
महाकटितटस्कन्धं वैडूर्यमणिलोचनम् ।
प्रवालवर्णशृङ्गाग्रं सुदीर्घऋजुवालधिम्[5] ॥
नवाष्टदशसङ्ख्यैस्तु तीक्ष्णाग्रैर्दशनैः शुभैः ।
मल्लिकाक्षश्च[6] मोक्तव्यो गृहेऽपि धनधान्यदः ॥

1 विस्तीर्णजघनस्तना—हे. व्र.
2 शस्तं च चामरम् —हे. व्र.
3 शिरोग्रीवा पुनस्त्येते —क, ज, ना.
4 ऋजुलाङ्गूलकम्बलम् —हे. व्र.
5 सुदीर्घमणिवालधिम् —हे. व्र.
6 माक्षिकाख्यश्च—ज ; मालकाख्यश्च—ना.

वर्णस्तु ताम्रः कपिलो ब्राह्मणस्य प्रशस्यते ।
श्वेतो रक्तश्च कृष्णश्च गौरः पाटल एव च ॥
इन्द्रनीलाभपृष्ठश्च[1] शबलः पञ्चकालकः ।
पृथुकर्णो महास्कन्धः श्लक्ष्णरोमा[2] च यो भवेत् ॥
रक्ताक्षः कपिलो यश्च रक्तशृङ्गतलो[3] भवेत् ।
श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य च शस्यते ॥
स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते ।
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः ॥
यस्य प्रागायते शृङ्गे स्वमुखाभिमुखे सदा ।
सर्वेषामेव वर्णानां स च सर्वार्थसाधकः ॥
मार्जारपादः कपिलो धन्यः [4]कपिललोचनः ।
श्वेतो मार्जारपादस्तु धन्यो मणिनिभेक्षणः ॥
करटः पिङ्गलश्चैव श्वेतपादस्तथैव च ।
स्वच्छपादशिरो यश्च द्विपादश्वेत एव च ॥
कपिञ्जलनिभो धन्यस्तथा तित्तिरिसन्निभः ।
आकर्णमूलाच्छ्वेतं तु मुखं यस्य प्रकाशते ॥
[5]नन्दीमुखः स विज्ञेयो रक्तवर्णो विशेषतः ।
श्वेतं च जठरं यस्य भवेत्पृष्ठं च गोपतेः ॥
वृषभः स समुद्रास्यः[6] सततं कुलवर्धनः ।
मल्लिकापुष्पचित्रस्तु धन्यो भवति पुंगवः ॥

1 भद्री नततटिपृष्ठः—क, ज ; भद्रिणः स्थूलपृष्ठश्च—उ.
2 चक्षूरोमा—हे. ब्र.
3 रक्तशृङ्गश्च—हे. ब्र.
4 कपिलपिङ्गलः—हे. ब्र.
5 नान्दिमुख्यः—उ ; नान्दीमुखः—हे. ब्र.
6 समुद्राक्षः—हे. ब्र.

कमलैर्मण्डलैश्चापि चित्रो भवति [1]भाग्यतः ।
अतसीपुष्पवर्णस्तु तथा धन्यतरः स्मृतः ॥
एते धन्यास्तथाऽधन्यान् कीर्तयिष्यामि ते नृप ।
कृष्णताल्वोष्ठदशना रूक्षशृङ्गनखाश्च[2] ये ॥
अव्यक्तवर्णा ह्रस्वाश्च व्याघ्रभस्मनिभाश्च ये ।
ध्वाङ्क्षगृध्रसवर्णाश्च तथा मूषिकसन्निभाः ॥
कुण्ठाः काणास्तथा खञ्जाः केकराक्षास्तथैव च ।
विषमश्वेतपादाश्च उद्भ्रान्तनयनास्तथा ॥
नैते वृषा विमोक्तव्या न च धार्यास्तथा गृहे ।
मोक्तव्यानां च धार्याणां भूयो वक्ष्यामि लक्षणम् ॥
स्वस्तिकाकारशृङ्गाश्च मेघौघसदृशस्वनाः[3] ।
महाप्रमाणाश्च[4] तथा मत्तमातङ्गगामिनः ॥
महोरस्का महोच्छ्वासा महाबलपराक्रमाः ।
शिरः कर्णौ ललाटं च वालधिश्चरणानि च ॥
नेत्रपार्श्वे च कृष्णानि तस्यान्ते चन्द्रमास्त्विषः[5] ।
श्वेतान्यन्यानि शस्यन्ते कृष्णस्य तु विशेषतः ॥
भूमौ कर्षति लाङ्गूलं प्रलम्बस्थूलवालधिः ।
पुरस्तादुन्नतो नीलो[6] वृषभस्तु प्रशस्यते ॥
शक्तिध्वजपताकाभा येषां राजी विराजते ।
अनड्वाहश्च ते धन्या वित्तसिद्धिजयावहाः ॥

1 गोप्रदः—हे. व्र.
2 शफाश्च for नखाश्च—हे. व्र.
3 दुर्गवत् सदृशस्वनाः—ज.
4 महापुण्याश्च तथा—ज ; महाप्राणाश्चैव तथा—हे. व्र.
5 नेत्रे पार्श्वे च कर्णानि शस्यन्ते चन्द्रसन्निभाः—हे. व्र.
6 पुरस्तादुद्यतो नालः—हे. व्र.

प्रदक्षिणं निवर्तन्ते स्वयं ते तु निवर्तिताः ।
समुन्नतशिरोग्रीवा धन्यास्ते यूथवर्धनाः ॥
रक्तशृङ्गाग्रनयनः श्वेतवर्णो भवेद्यदि ।
शफैः प्रवालसदृशैर्नास्ति धन्यतरस्ततः ॥
एते धार्याः प्रयत्नेन मोक्तव्या यदि वा वृषाः ।
धारिता यदि वा मुक्ता धनधान्यविवर्धनाः ॥
चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत् ॥
वृष एव स मोक्तव्यो न संधार्यो गृहे वसेत् ।
तदर्थमेषा चरति लोके गाथा पुरातनी ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत् ॥
एवं वृषं लक्षणसंप्रयुक्तं
गृहोद्भवं क्रीतमथापि राजन् ।
मुक्त्वा न शोचेन्मरणं महात्मा
मोक्षे मतिं चाहमतोऽभिधास्ये[1] ॥

[2]आदित्यपुराणे

भानुरुवाच—

मुञ्चन्ति वृषभं ये तु नीलं चैव सुशोभनम् ।
लाङ्गूलाकर्षसर्वाङ्गं शृङ्गयुक्तं मनोहरम् ॥
कार्तिक्यां मुञ्चते यस्तु दत्वा पूजां न संशयः ।
त्रिवर्षास्त्वथ गुर्विण्यो दद्याद्गावो वृषस्य च ॥

1 नो वा विधिं वै महतोऽभिधास्ये—हे. व्र.
2 हे. व्र., ९८९–९९०.

सावित्रीं[1] च जपेत्तत्र तथा चैवाघमर्षणम् ।
कर्णजाप्यं[2] प्रदद्यात्तु वृषभस्य न संशयः ॥
घण्टां लोहकृतां दद्याच्छृङ्गैश्च पटलैः शुभैः ।
रुद्रस्याग्रे भोजयेच्च ब्राह्मणान्वै यथाविधि ॥
यावन्ति रोमकूपानि वृषभस्य भवन्ति वै ।
गवां चैव तु रोमाणि यावत्तिष्ठन्ति वै मुने ।
तावत्कोटिसहस्राणि रुद्रलोके महीयते ॥
यत्किंचित् कुरुते पापं पुरुषो वृत्तिकर्षितः ।
[3]ते सर्वे विलयं यान्ति गोपतेः परिमोचनात् ॥
वृषभस्य तु शब्देन पितरः सपितामहाः ।
अवलम्बमाना[4] दृश्यन्ते स्वर्गलोके न संशयः ॥
जले प्रक्षिप्य[5] लाङ्गूलं तोयं चोद्वहते वृषः[6] ।
दशवर्षसहस्राणि पितरस्तेन तर्पिताः ॥
कूले समुद्धृता यावच्छृङ्गे तिष्ठति मृत्तिका[7] ।
भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्पिताः ॥
गवां मध्ये यदा चैवं वृषभः क्रीडते तु यः ।
अप्सरौघसहस्रेण क्रीडन्ते नित्यमेव तु ॥
लाङ्गूलमुद्यम्य यावत्तोयेषु कीडते तु सः ।
अप्सरोगणसङ्घैश्च तृप्यन्ति पितरः सदा ॥

1 गायत्रीं च जपेत्तत्र—ज, ना.
2 कर्णे जाप्यं—ना.
3 Line omitted by all MSS., but supplied by हे. व्र.
4 आवर्तमाना दृश्यन्ते—क, ज, ना ; आखण्डलेन—हे. व्र.
5 जलेषु क्षिप्य—उ.
6 चोद्धरते वृषः—क, ज, ना, हे. व्र.
7 लिखति मृत्तिकाम्—हे. व्र.

सहस्रदत्तमात्रेण कनकेन[1] यथाविधि ।
तृप्तिस्तु या पितृणां वै सा वृषेण समोच्यते ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

<u>शङ्खः</u>

लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

1 काळेन च—ज ; तडागेन—द्दे. व्र.

॥ १४ ॥

# अथ पुराणश्रवणविधिः

तत्र भविष्यपुराणे[1]

शतानीक उवाच—

भगवन् केन विधिना श्रोतव्यं भारतं नरैः ।
चरितं रामभद्रस्य पुराणानि विशेषतः ॥
कथं च वैष्णवा धर्माः शिवधर्मा विशेषतः ।
सौराणां वापि विप्रेन्द्र [2]श्रवणे उच्यतां विधिः ॥

सुमन्तुरुवाच—

हन्त ते कथयिष्येऽहं पुराणश्रवणे विधिम् ।
इतिहासपुराणानि श्रुत्वा भक्त्या विशांपते ॥
मुच्यते सर्वपापेभ्यो ब्रह्महत्यादिभिर्विभो ।
सायं प्रातस्तथा रात्रौ शुद्धो भूत्वा शृणोति यः ॥
तस्य विष्णुस्तथा ब्रह्मा तुष्यते शंकरस्तथा ।[3]

1 हे. व्र., ९९७–१००२; वी. मि. आ., ५५०–५५४.

2 उच्यतां श्रवणे विधि:—वी. मि. आ.

3 हे. व्र., adds two verses after this :
प्रत्यूषे भगवान् ब्रह्मा दिनान्ते तुष्यते हरि: ।
महादेवस्तथा रात्रौ शृण्वतां तुष्टिमाप्नुयात् ॥

विधानं वाचकस्येह[1] शृणु तावद्विशांपते ॥
शुद्धवासा गृहादेत्य[2] स्थानं यत्समयान्वितम् ।
प्रदक्षिणं ततः कृत्वा या तस्मिन् देवतैव हि ॥
नात्युच्चमाह[3] सर्वेषामशेषं गुरुवन्नृप ।
[4]नमस्कारादथ श्राव्यं शिवमस्त्विति चान्ततः ॥
नान्यतो नृपशार्दूल सर्वैर्वर्णैर्महीपते ।
शूद्राणां पुरतो वैश्या वैश्यानां क्षत्रियास्ततः ॥
क्षत्रियाणां तथा विप्रा शृण्वन्त्वेतेऽग्रतः सदा ।
मध्ये स्थितोऽथ सर्वेषां वाचको वाचयेन्नृप ॥
ये वापि संकरा राजन्नरास्ते शूद्रपृष्ठतः[5] ।
ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् ॥
श्रुत्वान्यवर्णजाद्राजन् वाचकान्नरकं व्रजेत् ।
इत्थं हि शृण्वतां तेषां वर्णानामनुपूर्वशः ॥
मासि मासि भवेद्राजन् पारणं कुरुनन्दन ।
श्रेयोऽर्थमात्मनो राजन्-पूजयेद्वाचकं नृप ॥
मासि पूर्णे नृपश्रेष्ठ दातव्यः स्वर्णमाषकः ।
ब्राह्मणेन महाबाहो द्वौ देयौ क्षत्रियेण तु ॥
वाचकस्य नृपश्रेष्ठ वैश्येनापि त्रयस्तथा ।

पुराणानि दशाष्टौ च तदेकं शृण्वतां विभो ।
भारतं राजशार्दूल शृणु तेषां च यत्फलम् ॥

1 वाचकस्येदं—हे. व्र.

2 गृहादेश्च—हे. व्र.

3 तां विधानेन—हे. व्र.

4 नमस्कृत्य यथा श्राव्यं—हे. व्र.

5 दूरात्तच्छूद्रपृष्ठतः—हे. व्र.

शूद्रेणाप्यथ चत्वारो दातव्याः स्वर्णमाषकाः ॥[1]
प्रथमे पारणे राजन् वाचकं पूज्य शक्तितः ।
अग्निष्टोमस्य यज्ञस्य [2]फलमाप्नोति मानवः ॥
कार्तिकादि महाबाहो कार्तिकं यावदेव तु ।
अग्निष्टोमं गोसवं च ज्योतिष्टोमं तथा नृप ॥
सौत्रामणिं[3] वाजपेयं वैष्णवं च तथा [4]विभो ।
माहेश्वरं तथा ब्राह्मं पुण्डरीकं च भूपते ॥
आदित्ययज्ञस्य तथा राजसूयाश्वमेधयोः ।
फलमाप्नोति राजेन्द्र मासैर्द्वादशभिः क्रमात् ॥
इत्थं यज्ञफलं प्राप्य याति [5]लोकांस्तथोत्तमान् ।
समाप्ते पर्वणि तथा स्वशक्त्या [6]तर्पयेन्नृप ॥
वाचकं [7]ब्राह्मणांश्चैव सर्वकामैः प्रपूजयेत् ।
गन्धमाल्यानि दिव्यानि वस्त्राण्याभरणानि च ॥
वाचकाय प्रदद्यात्तु ततो विप्रान् प्रपूजयेत् ।
हिरण्यं रजतं वस्त्रं गावः [8]कांस्योपदोहनाः ॥
दत्वा तु वाचकायेह श्रुतस्य प्राप्नुयात्फलम् ।

1 हे. व्र., adds a line after this:
मासि मासि नृपश्रेष्ठ श्रद्धया वाचकस्य तु ।
2 फलं प्राप्नोति—क, ज, ना, हे. व्र.
3 मैत्रावरुणं—हे. व्र.
4 विभुम्—हे. व्र.
5 लोकाननुत्तमान्—ना ; लोकानथोत्तमान्—हे. व्र.
6 तर्पयन्नृप—हे. व्र.
7 ब्राह्मणश्चैव—हे. व्र.
8 कांस्योपदोहनीः—हे. व्र.

वाचकः पूजितो येन प्रसन्नास्तस्य देवताः ॥
तस्माद्दानं[1] सदा पूर्वं तस्य देयं विदुर्बुधाः ।
श्राद्धे यस्य द्विजो भुङ्क्ते वाचकः श्रद्धयान्वितः ॥
भवन्ति पितरस्तस्य तृप्ता वर्षशतं नृप ।
[2]विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा ॥
कलस्वरसमायुक्तं रसभावसमन्वितम् ।
बुध्यमानः सदात्यर्थं ग्रन्थार्थं कृत्स्नशो नृप ॥
[3]ब्राह्मणादिषु वर्णेषु ग्रन्थार्थं वाचयेन्नृप ।
य एवं वाचयेद्राजन् स विप्रो व्यास उच्यते ॥
अतोऽन्यथा वाचयानो ज्ञेयोऽसौ [4]पितृनामकः ।
इत्थंभूतो वसेद्यस्मिन् वाचको व्याससंमितः ॥
[5]देशेषु पत्तने राजन् स देशः प्रवरः स्मृतः ।
प्रणम्य वाचकं भक्त्या यत्फलं प्राप्यते नरैः ॥
न तत्क्रतुसहस्रेण प्राप्यते कुरुनन्दन ।
यथैकतो ग्रहाः सर्वे एकतस्तु दिवाकरः ॥
तथैकतो द्विजाः सर्वे एकतस्तु स वाचकः ।
दैवे कर्मणि पित्र्ये च पावनं परमं नृप ॥
वाचकश्च यतिश्चैव तथा विप्रः षडङ्गवित् ।
एते सर्वे नृपश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः ॥

1 तस्माद्धनं—हे. ब्र.

2 The following three lines are omitted by हे. ब्र.

3 Line omitted by ज and वी. मि. आ.

4 पितृनामतः—हे. ब्र.

5 देशेऽथ—क, ज, ना, वी. मि. आ.

त्रिविधं वाचकं विद्यात् सदा च गुणभेदतः ।
श्रावकश्च महाबाहो त्रिविधो गुणभेदतः ॥
द्वावेतौ[1] कथ्यमानौ त्वं निबोध गदतो मम ।
अतिद्रुतं[2] तथास्पष्टं विस्वरं रसवर्जितम् ॥
[3]पदच्छेदविहीनं च [4]तथा भावविवर्जितम् ।
अबुध्यमानो ग्रन्थार्थं लोलश्चोत्साहवर्जितः[5] ॥
ईदृशं वाचयेद्यस्तु वाचकस्तु नरेश्वर ।
क्रोधनोऽप्रियवादी चाज्ञानाद्ग्रन्थविदूषकः ॥
न च बुध्यति कष्टानि स ज्ञेयो वाचकाधमः ।
विस्पष्टमद्रुतं[6] शान्तं स्पष्टाक्षरपदं तथा ॥
कलस्वरसमायुक्तं[7] रसभावविमिश्रितम् ।
अबुध्यमानो ग्रन्थार्थं वाचयेद्यस्तु वाचकः ॥
स ज्ञेयो राजसो[8] राजन्निदानीं सात्विकं शृणु ।
ग्रन्थार्थं बुध्यमानस्तु समग्रं कृत्स्नशो नृप ॥
ब्राह्मणादिषु वर्णेषु अर्पयन् विधिवन्नृप ।
य एवं वाचयेद्राजन् स ज्ञेयो सात्विको बुधैः ॥

1 द्वाविमौ—ज, वी. मि. आ.
2 अभिद्रुतं—वी. मि. आ.
3 Line omitted by वी. मि. आ.
4 रसभावविवर्जितम्—क, ज ; तत्तद्भावविवर्जितम्—हे. ब्र.
5 लोभिष्ठोत्साहवर्जितः—उ ; लोभिष्ठो मोहवर्जितम्—वी. मि. आ.
6 विश्रान्तमद्रुतं—वी. मि. आ.
7 तारस्वरसमायुक्तं—हे. ब्र.
8 मध्यमो—क, ज, वी. मि. आ. ; राक्षसो—हे. ब्र.

श्रद्धाभक्तिविहीनोऽसौ लोभिष्ठो दूषकस्तथा[1] ।
हेतुवादपरो राजन् तथासूयासमन्वितः ॥
नित्यां नैमीत्तिकीं काम्यामददद्दक्षिणां नृप ।
वाचकाय महाबाहो श्रृणुयाद्यस्तु मानवः ॥
स ज्ञेयस्तामसो राजन् श्रावको मानवः सदा ।
न तस्य पुरतो वीर वाचयेत् प्राज्ञ एव हि ॥
प्रसंगाच्छ्रृणुयाद्यस्तु [2]श्रद्धाभक्तिविवर्जितः ।
श्रोता कौतुकमात्रस्तु स ज्ञेयो राजसो बुधैः ॥
[3]संत्यज्य सर्वकर्माणि भक्तिश्रद्धासमन्वितः ।
सततं पूजयानस्तु वाचकं श्रद्धया नृप ॥
नित्ये नैमित्तिके काम्ये गुरवे च ददत्तथा ।
य एवं श्रृणुयाद्वीर स ज्ञेयः सात्विको बुधैः ॥
व्यासः पूज्यः श्रावकाणां यथा व्यासवचो नृप ।
तस्मात्पूज्यो नृपश्रेष्ठ प्रथमं वाचको बुधैः ॥
आपत्काले च वृद्धौ च यतश्चासौ गुरुः सदा ।
वैशाख्यां समये वीर तृतीयायां च सुप्रभ ॥
कार्तिक्यामथ माघ्यां च संपूज्यः प्रथमो भवेत् ।
पर्वस्वेतेषु च विभो संपूज्यो धर्मतः स्मृतः ॥
हिरण्यं च सुवर्णं च धनं धान्यं तथैव च ।
अन्नं वापि तथा पक्वं मांसं च कुरुनन्दन ॥

1 दूषकस्तत: ॥ इति भट्टहृदयधरात्मजमहासान्धिविग्र . . . . . . . . . . . . . . भट्टश्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकृत्यकाण्डं समाप्तमिति—
आश्विनस्य . . . शतिदि . . . वास . . . म . . . —क.

2 श्रद्धाभक्तिसमन्वितः—वी. मि. आ.

3 Rest of the verses of *Bhaviṣyapurāṇa* are not found in वी. मि. आ.

दातव्यं प्रथमं तस्मै श्रावकैः सर्वभक्तितः[1]।
दत्वा पुष्पं फलं तोयं पत्रमिन्धनमेव च ॥
सारभूतं[2] च यच्चान्यत्तस्मै देयं समन्ततः ।
अथ सर्वैस्तथा कार्यं श्रावकैः पूजनं नृप ।।
वाचकस्तु यथा नित्यं सुखमास्ते नराधिप ।
न पीड्यते यथा द्वन्द्वैस्तथा कार्यं वरानन ।।
हैमन्ते लोमशं देयं छत्रं प्रावृषि सत्तम।
उपानहौ कालयोगे काले[3] वै कुशलोमशौ ॥
यदा दातुं न शक्नोति माषकं काञ्चनस्य तु।
ततस्तस्य तदा दद्याद्राजतं श्रेयसेऽनघ ॥
तदभावे हिरण्यं तु वित्तशाठ्यं विवर्जयेत्।
मृत्तिकापि हि दातव्या कुर्वता सफलं श्रुतम् ॥
इत्येषा कथिता नित्या मासि मासि भवेत्तदा ।
नैमित्तिकी भवेद्राजन् ग्रहणादिषु पर्वसु ॥
अमले वाससी राजन् गन्धमाल्यविभूषणम् ।
समाप्ते पर्वणि विभो दातव्यं भूतिमिच्छता ॥
ज्ञात्वा पर्वसमाप्तिं तु पूजयेद्वाचकं बुधः ।
आत्मानमपि विक्रीय य इच्छेत्सफलं श्रुतम् ॥
नैमित्तिकीं च नित्यां च दक्षिणां न ददाति यः ।
शृणोति च सदा तात तस्य तन्निष्फलं श्रुतम् ॥
चतुर्गुणा भवेद्राजन् या नित्यं दक्षिणा विभो ।

1 श्रावकैस्तत्र भक्तितः—ज ; श्रावकैरतिभक्तितः—हे. ब्र.
2 सारस्वतं च—हे. ब्र.
3 कालौ—हे. ब्र.

समाप्ते पर्वणि विभो[1] इत्याह भगवान् शिवः ॥
इत्येष कथितो राजन् पुराणश्रवणे विधिः ।

[2]इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण [3]भट्टहृदय-धरात्मजेन श्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्डं समाप्तम् ॥

॥ श्रीशुभमस्तु[4] ॥

1 ऐच्छिकं भोगमाप्नोति—हे. म.

2 इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकृत्यकाण्डं समाप्तम् ॥ ९ ॥ शुभमस्तु सर्वजगताम् ॥

मङ्गलं लेखकानां तु पाठकानां तु मङ्गलम् ।
मङ्गलं सर्वभूतानां भूमौ भूपतिमङ्गलम् ॥
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ।
अकिंचना हि मुनयः श्रद्धावन्तो दिवं गताः ॥

॥ ओं तत् सत् ॥

मङ्गलं भगवान् विष्णुर्मङ्गलं गरुडध्वजः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलायतनो हरिः ॥

शुभं भूयात् ॥ श्रीरघुनाथाभ्यां नमः ॥—ज.

3 भट्टश्रीहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकाण्डं समाप्तमिति—॥ शुभम् । श्रीपरमात्मने नमः ॥ श्रीरामचन्द्राय नमः । संवत् । १७३६ ॥ शिवाय नमः ॥ रामाय नमः । भास्कराय नमः । द्विज्येष्ठ्यां पौर्णमास्यां च तथा वारे बृहस्पतौ । काण्डं नियतकालं च व्यलिखद्गोविन्दः सुधीः ॥ रामाय नमः । शिवाय नमः । चन्द्राय नमः ॥—ना.

4 There is a footnote at the end of the उ MS :

काण्डस्यास्यान्तर्गतानि पद्यानि गद्यविषयश्च मूलप्रत्या संशोध्य कुत्रचित्स्थलेषु पादपूर्तिरपि यावच्छक्यं कृतास्ति । तथापि विलम्बितत्वेन बहुषु स्थलेषु यद्यशुद्धयो भवेयुश्चेत्तान् संशोध्यानुकम्पनीयोऽयं सकलशास्त्रनिष्णातैर्मनीषिभिः । इत्यलम् । लिखी ज्यो. भीमशंकरजी । भवदीयानुग्रहाकाङ्क्षी मु. निवाहेड़ा पं. शोभालाल शर्म्मा ।

## APPENDIX A

*Index of Smṛti-authors and Works cited*


अङ्गिराः, ८०, १००, १५०, २४९, २५५, २५६, २५८, २६९
अत्रिः, ९४
अत्रिस्मृतिः, ९४
आपस्तम्बः, २२, २६, २७, ३७, ८०, १०८, १५२, १५६, १५९, १६६, १६८, १७०, १८०, १८५, १९१, २०२, २०४, २०७, २०८, २१७, २२२, २३६, २३८, २४१, २५१, २५३, २५७, २६५, २६६, २६८, २७३, २८०, २८३, २८४, २८६, २९०, २९६, ३०२, ३०६, ३०८, ३१९, ३३८, ३४३, ३४४, ३५५
आपस्तम्बस्मृतिः, ८०
आयुर्वेदः, २८०
उशना, १२,१३४,२४८,२८०,३३२,३३८
कपर्दिभाष्यम्, २३९
कपर्दी, २३९, ३०६
कात्यायनः, १०, १७, ४६, ७२, १११, १४५, १४९, १५४, १५५, १६२, १६९, २२४, ३५५
गौतमः, २९, १४१, १४९, १५०, १५५, १६०, १६३, १८६, १९२, २०३, २०५, २१०, २१२, २३७, २४८, २५२, २५७, २६४, २७९, २८२, २८९, २९५, ३०१, ३०२, ३०४, ३११, ३१८, ३३२, ३३८, ३४३, ३४५, ३४७, ३५२
चरकः, २४४
छागलेयः, ३०
जमदग्निः, २५२, २७५
जयस्वामी, ९८, २३१, २५२
जाबालिः, ३५, ३६, ५७, १४३, १४७, २१७, ३६२, ३६८
ज्योतिःशास्त्रम्, ३६२
दक्षः, ३, ४, ६, १८, १९, २०, २३, २९, ३३, ४९, ८०, १०१,१४१,१९५, २१०, २१७, २१९, २२४, ३३३, ३३४
देवलः, ३९, १४२, १४५, १९९, २११, २१४, २१९, २४१, २५७, २६३, २६७, २७९, २८०, २८२, २८८, ३००, ३०३, ३१०, ३१४, ३२१, ३३३, ३४०, ३४२, ३४३, ३४५, ३४७, ३५७
नारदः, १०, २४, ३१
नारदशिक्षा, ११
पराशरः, ३७, ८४, १४७, १९४, १९९, २००, २०३, २१८, २५८, ३४५
पैठीनसिः, ४०, ४१, ४२, ७९, १०७, १३३, १८८, २१०, २१५, २५२, २५५, २७१, २८०, ३०४, ३०८, ३०९, ३१७, ३२८, ३३८, ३४२, ३५०, ३५२, ३५३, ३५६
बुधः, २११
बृहस्पतिः, ७९, १९७, २१०, २४८, २८८, २९१, ३१५, ३२६, ३३२, ३४२

बौधायनः, ३७, ४१, ४२, ७०, ८८, ११९, १२३, १२४, १६६, १९१, २०१, २०७, २०८, २१२, २१४, २१६, २२०, २३२, २३७, २७२, २७८, २९६, ३०३, ३०७, ३१०, ३३८, ३४६, ३५०, ३५५
भर्तृयज्ञः, २०३, २५६, ३३८
भाउल्लस्मृतिः, ३६९
मञ्जरीकारः, २६१
मनुः, ४, २५, २७, २९, ३४, ४०, ४३, ५७, ६९, ८५, ९४, ९९, १०३, १३४, १३५, १४३, १४५, १४७, १४८, १५०, १५४, १५७, १५८, १६६, १६९, १७५, १८७, १९४, १९८, २००, २०१, २०३, २०६, २०८, २०९, २११, २१२, २१३, २१४, २२१, २२४, २२५, २४०, २४१, २४७, २४९, २५४, २५६, २५९, २७०, २७१, २७३, २७४, २७५, २८५, २९२, २९४, २९८, ३०६, ३०७, ३०८, ३१०, ३११, ३१६, ३१७, ३१८, ३१९, ३२०, ३२२, ३२६, ३२७, ३२८, ३२९, ३३०, ३३८, ३३९, ३४२, ३४६, ३४९, ३५४, ३५९
मरीचिः, १३२
मस्करी, २०३, २४८, २५७
मेधातिथिः, ३५, २०२
मैत्रायणिः, २२९
यमः, ७, ११, २१, २८, ३०, ९९, १००, १०१, १०३, १०८, १३३, १३४, १४५, १५८, १६७, १६८, १९६, १९८, २००, २०२, २०८, २१२, २१४, २१५, २१७, २२३, २४५, २५२, २५३, २५४, २५८, २६२, २६८, २६९, २७१, २७२, २७३, २७४, २७८, २८२, २८३, २८६, २९१, २९२, ३०२, ३०४, ३०८, ३०९, ३१३, ३१५, ३१७, ३१८, ३२०, ३२१, ३२२, ३२८, ३३०, ३३१, ३४०, ३४५, ३५६, ३९१
याज्ञवल्क्यः, ६, २३, २७, ४२, ५९, ६०, ९८, ११०, १५७, १६७, १९०, २०१, २०४, २०७, २११, २१८, २२६, २४८, २५६, २६२, २७५, २७७, २८१, २८५, २९२, २९९, ३११, ३१४, ३२३, ३२९, ३३४, ३४१
याज्ञवल्क्यसंहिता, ११५
योगियाज्ञवल्क्यः, १८, ३७, ४५, ५२, ५३, ५९, ६०, ८१, ८३, ८६, ८९, १०३, १०८, ११२, ११५, १३४, १३५, १३८, १६९
लक्ष्मीधरः, १, २
लघुहारीतः, १०८
वसिष्ठः, ७४, ९१, १०३, १०८, १५६, १६८, १७५, १८६, १९०, २०९, २१३, २३९, २४९, २५४, २६३, २६४, २६८, २७१, २७३, २७४, २८४, २९०, २९३, ३००, ३०५, ३०९, ३२८, ३४७, ३४९, ३५१
वाक्यकारः, २३१
वाचस्पतिः, ३३३, ३९२
विश्वरूपाचार्यः, २५९, २६१
विश्वामित्रः, २८४, ३१४
विष्णुः, ८, १२, १९, २१, ४०, ४३, ४४, ७९, ८५, ९९, ११०, १३४, १४५, १५५, १६०, १६७, १७५, १८८, १९८, २०१, २०३, २११, २४०, २४५, २४७, २८२, ३१६, ३१९, ३२८, ३३२, ३३६, ३४८, ३५४, ३६९, ३७३, ३८९, ४५७, ४६४

विष्णुस्मृतिः, २२, ९४
वृद्धद्रविडविवरणकारः, २३१
वृद्धबृहस्पतिः, २६१
वृद्धशातातपः, ६, १३४, २२६, ३४४, ३४५, ३५६
व्यासः, १४१
शङ्खः, ४४, ४९, ५७, ८४, ८६, ८७, १०१, १२४, १३४, १६९, २६८, ३०३, ३१०, ३५४, ४७२
शङ्खलिखितौ, ३८, ४२, ४३, ९१, १४२, १५२, १६२, १७६, १७७, १९२, २१५, २२८, २४४, २६६, २६७, २८७, २८९, ३३५, ३३७, ३४८
शब्दार्णवः, ३३, २९२
शातातपः, ३३, ११०, १३८, १४९, १५६, १६७, १६८, १६९, १९३, १९४, २००, २०१, २०३, २१७, २६९, २७४, ३१८, ३६१, ३६६, ३६९
श्वेतकेतुः, २६
संवर्तः, १४२
सुमन्तुः, २६३, २८४
स्मृतिः, ६४
स्मृतिमञ्जरीकारः, २८०
स्मृत्यन्तरम्, ३१६
हारीतः, ७, १३, १५, ३९, ५१, ८४, ९५, ९८, १०३, १३४, १४३, १४६, १४७, १४८, १७८, १८०, २१५, २२१, २२८, २४४, २५१, २५२, २५४, २५८, २७०, २७५, २७९, २८१, २८९, २९५, २९६, ३०७, ३११, ३१६, ३१८, ३२०, ३३०, ३३१, ३३७, ३४१, ३५०, ४६०

## APPENDIX B

### *Index of Purāṇas cited*


आदित्यपुराणम्, २७३, ४६१, ४७२

कालिकापुराणम्, ३६६

देवीपुराणम्, २९३, ३६०, ३६२, ३६४, ३७०, ४६२

नन्दिपुराणम्, ३२३, २५९

नरसिंहपुराणम्, १२, २३, ६६, ७८, ८३, ९१, १०७, १०९, १४०, १७१, ४५१

पद्मपुराणम्, ७६, ११५, ११६, १३९, १७१, १७२, ४२३, ४६१

ब्रह्मपुराणम्, २६, ४९, १७२, १७३, १९०, २२०, २२४, २२५, २२६, २२७, २४०, २४१, २४३, २४९, २५०, २५२, २७७, २८३, २९३, २९४, २९७, ३०५, ३६५, ३६६, ३६७, ३७०, ३७२, ३७७, (३७७-३८९), ३९२, ३९३, (३९३-४०८) ४१०, (४१०-४१३), ४२१, ४२४, ४२७, (४२७-४४७) ४५०, ४५८, ४६०, ४६३, ४६५

भविष्यपुराणम्, ४६, १७४, २१६, २५५, २६९, २७६, २९४, २९७, ३५८, ३७४, ४०८, ४६२, ४७३, (४७३-४८०)

मत्स्यपुराणम्, २२, १७१, ३७४, ४४८, ४५१, ४५२, ४६६ (४६६-४७०)

महाभारतम्, १३, १४, ८५, १७३, २४३, ३०७, ३१३, ३१७, ३२४, ३४२, ४६२

मार्कण्डेयपुराणम्, ५७, १६४, १७३, २१५, २२५, २९३

वराहपुराणम्, २४, ३१, ५६, ३५८, ३५९, ३९२, ४२६, ४५७

वामनपुराणम्, ३२, २२२, ३५८, ४२४

विष्णुपुराणम्, १३, २५, ४३, ५५, ११७, १३९, १६३, १६५, १६६, १७१, १७४, २२३, २२७, २४०, २४३, २५०, २५५, ३३४, ३३६, ३५६, ३५७

स्कन्दपुराणम्, ५४, ४१३, (४१३-४२१), ४६३

## APPENDIX C

### *Index of Vedic works cited*


आपस्तम्बगृह्यम्, ३४२

कठशाखा, ५९

छन्दोगपरिशिष्टम्, १०, १७, ४६, ११०, १११, १४५, १४९, १५४, १५५, १६२, १६९, २२४, ३५५

छन्दोगोपनिषत्, २३१

तैत्तिरीयश्रुतिः, ५९, ३४४, २७८, ३५३

ब्रह्मदत्तभाष्यम्, ८०

ब्राह्मणम्, १६८

मैत्रायणीयम्, ५९

वाजसनेयकम्, २४९

शतपथश्रुतिः, ४८

शाङ्खायनगृह्यम्, ८०

श्रुतिः, १५१

# APPENDIX D

## *Index of Citations in the footnotes*


अग्निपुराणम्, ३८८

अथर्वणवेदः, (अ. वे.) ५८, ६२, ६७, ७३, ७४, ७९, ९०, ९२, ९३, ९७, ९८

अपरार्कः, २५४

आपस्तम्बः, (मु. आप.=मुद्रितापस्तम्बः) १५३, १५९, १८०, १८१, १८२, १८३, २०८, २३६, २५१, २६५, २८३, २८६, ३०८

आपस्तम्बगृह्यसूत्रम्, ३४२

आपस्तम्बधर्मसूत्रम्, २०१, २८४

आपस्तम्बश्रौतसूत्रम्, (आप. श्रौ. सू.) ६०, ६५, ७३, ७६, ८२, १८२

आह्निकतत्त्वम्, १७६

उज्ज्वला, १५३

ऋक्संहिता, (ऋ. सं) ५८, ५९, ६०, ६१, ६२, ६४, ६५, ६६, ६७, ६८, ६९, ७१, ७३, ७४, ७८, ७९, ८७, ८८, ८९, ९०, ९१, ९२, ९३, ९४, ९५, ९६, ९७, ९८, १०९, ११४, ११५, १३३, १३६, १३७, १४०, १५२

ऋग्वेदखिलानि, (ऋ. खिल.) ५८, ६१, ६२, ६३, ६७, ६८, ७३, ९२

ऐतरेयब्राह्मणम्, (ऐ. ब्रा.) १८२

कठसंहिता, (कठ. सं.) ५८, ५९, ९०, ९५, ९६, १३६, १६१

कल्पतरुः, ८०, ८६, १२१, २३३, २६२, २६३, ३०४, ३०६, ३१२, ३१६, ३३६, ४३७

कात्यायनः, ४३

कात्यायनश्रौतसूत्रम्, (का. श्रौ. सू.) ६०, ६५, ७३, ७६, ८२

कुल्लूकः, १५७, १७६, १८७, २०६, २११, २१४, २२५, २५९, २७०, २७४, २९२, २९५, २९८, २९९, ३१०, ३१२, ३१८, ३२७, ३३०, ३४६

कृत्यरत्नाकरः, (कृ. र.) ३६०, ३६१, ३६२, ३६३, ३६४, ३६५, ३६६, ३६८, ३६९, ३७०, ३७१, ३७२, ३७३, ३७४, ३७५, ३७६, ३७७, ३७८, ३७९, ३८०, ३८१, ३८२, ३८३, ३८४, ३८५, ३८६, ३८७, ३८८, ३८९, ३९०, ३९१, ३९२, ३९३, ३९४, ३९५, ३९६, ३९७, ३९८, ३९९, ४००, ४०१, ४०२, ४०३, ४०४, ४०५, ४०६, ४०७, ४०८, ४०९, ४१०, ४११, ४१२, ४१३, ४१४, ४१५, ४१६, ४१७, ४१८, ४२१, ४२३, ४२४, ४२५, ४२६, ४२७, ४२८, ४२९, ४३०, ४३१, ४३२, ४३३, ४३४, ४३५, ४३६, ४३७, ४३८, ४३९, ४४०, ४४१, ४४२, ४४३, ४४४, ४४७, ४४८, ४४९, ४५०, ४५१, ४५२, ४५४, ४५५

कौशिकसूत्रम्, ६०, ६५, ७६, ८२

कौषीतक्युपनिषत्, १५१

गृहस्थरत्नाकरः, (गृ. र.) १४८, १५८, १७३, १७४, १७५, १७६, १७७, १८६, १८८, १९०, १९१, १९२, १९५, १९६, १९७, १९८, १९९, २००, २०१, २०२, २०३, २०४, २०५, २०६, २०७, २०८, २०९, २१०, २११, २१३, २१४, २१५, २१६, २१७, २१८, २१९, २२०, २२१, २२२, २२३, २२४, २२५, २२६, २२७, २२८, २२९, २३०, २३१, २३२, २३३, २३५, २३६, २३७, २३८, २३९, २४०, २४१, २४२, २४३, २४४, २४५, २४६, २४७, २४८, २४९, २५०, २५१, २५२, २५३, २५४, २५५, २५६, २५७, २५८, २५९, २६०, २६२, २६३, २६४, २६५, २६६, २६७, २६८, २६९, २७०, २७१, २७२, २७३, २७४, २७५, २७६, २७७, २७८, २७९, २८०, २८१, २८२, २८३, २८४, २८५, २८६, २८७, २८८, २८९, २९०, २९१, २९२, २९३, २९४, २९५, २९६, २९७, २९८, २९९, ३००, ३०१, ३०२, ३०३, ३०४, ३०५, ३०६, ३०७, ३०८, ३०९, ३१०, ३१३, ३१४, ३१५, ३१६, ३१७, ३१८, ३१९, ३२०, ३२१, ३२२, ३२३, ३२४, ३२५, ३२६, ३२७, ३२८, ३२९, ३३०, ३३१, ३३२, ३३३, ३३४, ३३५, ३३६, ३३७, ३३८, ३३९, ३४०, ३४१, ३४४, ३४५, ३४६, ३४७, ३४८, ३४९, ३५०, ३५१, ३५२, ३५३, ३५४, ३५५, ३५६, ३५७, ३५८, ३५९

गोभिलस्मृतिः, ४३, ४६, १११

गोविन्दराजः, ३१०

गोविन्दस्वामी, १९१, २०७, २१२, २१६, २३२, २३३, २३४, २३५, २३६, २३७, २९६, ३०३, ३०७, ३५५

गौतमः, (मु. गौ.=मुद्रितगौतमः) १५०, २११, २५७, ३०१, ३५२

गौतमधर्मसूत्रम्, २६५

चण्डेश्वरः, २३३, ३६८

चित्रस्वामी, १८२

छन्दोगपरिशिष्टम्, ४३

जयादित्यः, २०६

जोलिः (Jolly) १८७

तारानाथतर्कवाचस्पतिः, ३३३

तैत्तिरीयब्राह्मणम्, (तै. ब्रा.) ५८, ६१, ६२, ६३, ६७, ६८, ७१, ७३, ७४, ७९, ८९, ९२, २२९, २३५

तैत्तिरीयसंहिता, (तै. सं.) ५८, ५९, ६१, ६२, ६३, ६४, ६५, ६६, ६७, ६८, ६९, ७०, ७१, ७३, ७४, ७५, ७८, ७९, ८२, ८७, ८८, ८९, ९०, ९१, ९२, ९३, ९४, ९५, ९६, ९७, ९८, १०९, ११४, ११५, १३३, १३६, १३७, १४०, १५०, १५२, २७८, २९८, ३४३, ३४४

तैत्तिरीयारण्यकम्, (तै. आ.) ६२, ६३, ६७, ६८, ७०, ७१, ७२, ७३, ७५, ७७, ७९, ८७, ८९, ९१, ९२, ९३, ९६, ९७, १०९, २२९

दक्षः, ३५, १९६, २१०

दक्षस्मृतिः, १९५, १९६

देवीपुराणम्, ३८७

नरसिंहपुराणम्, ६६, १७२

पद्मपुराणम्, ११७

पराशरः, २००, ३४५

पराशरस्मृतिः, ८४, १९४

पारस्करगृह्यसूत्रम्, ७२
पैठीनसिः, ३३७
बौधायनः, [मु. बो.=मुद्रितबौधायनः] ११९, १२०, १२१, १२२, १२३, १२४, १९१, २०१, २०८, २१४, २१६, २२०, २३३, २३४, २३६, २३७, ३०३, ३०७, ३४६
ब्रह्मदत्तः, ८०
ब्रह्मपुराणम्, ३८७
भविष्यपुराणम्, ३९८
भीमशंकरः, ४८०
भूपालकृत्यसमुच्चयः (कृत्यसमुच्चयः), ४२६, ४३६
मनुः, १०३, १०६, १३४, १३५, १४५, १५०, १६९, १७५, १७६, १९४, २०१, २०३, २०९, २११, २१४, २२२, २२४, २४७, २७३, ३०८, ३१३, ३१६, ३१९, ३२७, ३२८, ३३०, ३४२
मनुस्मृतिः, १६९, २६०, २७५, ३२२
मस्करी, १८७, १९२, २०३, २११, २३७, २४८, २५२, २९५, ३०१, ३०३, ३०४, ३०५, ३११, ३४५, ३४७
महानारायणोपनिषत्, (महा. ना. उ.), ७०, ७१, ७२, ७५, ७७, ८७, ९३, २२९, २३०
माधवः, ३३३
मानवश्रौतसूत्रम्, (मा. श्रौ. सू.), २३०
मार्कण्डेयपुराणम्, २९४
मिताक्षरा, १५७, ३१४
मित्रमिश्रः, ९१, २३३, ३६८
मुण्डकोपनिषत्, (मु. उप.), ९३
मेधातिथिः, १८७, १८८, २०६, २८५, २९२, २९५, २९८, २९९, ३०८, ३१०, ३११, ३१२, ३१३, ३१८, ३१९, ३२०, ३२३, ३२६, ३२७, ३२८, ३४६, ३४९, ३५९
मैत्रायणीयसंहिता, (मै. सं.), ५८, ५९, ९५, ९६, ९७, २२८, २३१
यमः, ३२२
याज्ञवल्क्यः, २७७, ३०३, ३१४
याज्ञवल्क्यस्मृतिः, ३१६
रघुनन्दनः, ८०
रघुनाथशर्मा, ४४७
लक्ष्मीधरः, २०३
वराहपुराणम्, ५६, ४२६
वसिष्ठः, १०३, २०९, २६३, २७३, २८५, २९०, २९३, ३०१, ३०९, ३४७, ३४९, ३५१
वसिष्ठस्मृतिः (वासिष्ठधर्मशास्त्रम्), ९१, १८६, २०९, २६४, २६६
वाचस्पत्यम्, ३३३
वाजसनेयसंहिता, (वाज. सं.) ४१, ६१, ६२, ६३, ६५, ६७, ६८, ७०, ७३, ७४, ७५, ७९, ८९, ९०, ९१, ९२, ९३, ९५, ९६, ९७, ९८, १०९, ११४, ११५, १३३, १३६, १३७
वार्तिकम्, ५२
विज्ञानेश्वरः, १९०, २०७, २११, २१८, २२६, २५९, २६१, ३००
विश्वरूपः, १९०, २५९, २६१, २८५, २९२, ३००, ३११, ३१४, ३२९, ३३४
विष्णुः, (मु. वि.=मुद्रितविष्णुः), ८५, १७५, १८८, २०१, २०३, २११, २४०, २४५, २४६, ३१६, ३२७, ३२८, ३३२, ३३७, ३४८, ३५४, ३८९
विष्णुपुराणम्, ३३६
विष्णुस्मृतिः, २२, ४०, ९४, १५५, १६१, १७५, १८८, २११, ३२९, ४६४
विष्णुस्मृतिव्याख्या, केशववैजयन्ती, ९२, ९३

वीरमित्रोदये आह्निकप्रकाशः, (वी. मि. आ.), १, ३, ४, ५, ६, ७, ८, १०, १३, १४, १५, १७, १८, १९, २०, २१, २२, २३, २५, २६, २७, २८, २९, ३०, ३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३, ४४, ४५, ४६, ४७, ४८, ४९, ५०, ५१, ५२, ५३, ५४, ५५, ५६, ५७, ५८, ५९, ६३, ६४, ६६, ६९, ७०, ७१, ७२, ७३, ७४, ७५, ७६, ७७, ७८, ७९, ८०, ८१, ८३, ८४, ८५, ८६, ८७, ८८, ८९, ९०, ९१, ९२, ९३, ९४, ९५, ९८, ९९, १००, १०१, १०२, १०३, १०४, १०६, १०७, १०८, १०९, ११०, १११, ११२, ११३, ११५, ११६, ११७, ११८, ११९, १२१, १२२, १२३, १२४, १२५, १२६, १२७, १२८, १२९, १३०, १३१, १३२, १३३, १३४, १३५, १३८, १३९, १४०, १४१, १४२, १४३, १४४, १४५, १४७, १४८, १४९, १५०, १५२, १५३, १५४, १५५, १५६, १५७, १५८, १५९, १६०, १६१, १६२, १६३, १६४, १६५, १६६, १६७, १६८, १६९, १७१, १७२, १७३, १७४, १७५, १७६, १७७, १७८, १७९, १८०, १८१, १८२, १८३, १८४, १८५, १८८, १९०, १९१, १९२, १९३, १९४, १९६, १९८, १९९, २००, २०१, २०२, २०५, २०६, २०९, २१०, २११, २१२, २१३, २१४, २१५, २१७, २१९, २२०, २२१, २२२, २२३, २२४, १२५, २२६, २२७, २२८, २२९, २३०, २३१, २३२, २३३, २३४, २३५, २३६, २३७, २३८, २३९, २४०, २४१, २४२, २४३, २४४, २४६, २४८, २४९, २५०, २५१, २५२, २५३, २५४, २५५, २५६, २५७, २५८, २५९, २६०, २६२, २६३, २६४, २६५, २६६, २६७, २६८, २६९, २७०, २७१, २७२, २७३, २७४, २७५, २७६, २७७, २७८, २७९, २८०, २८१, २८२, २८३, २८४, २८५, २८६, २८७, २८८, २८९, २९०, २९१, २९२, २९३, २९४, २९५, २९६, २९७, २९८, २९९, ३००, ३०१, ३०२, ३०३, ३०४, ३०५, ३०६, ३०७, ३०८, ३०९, ३१०, ३११, ३१२, ३१३, ३१४, ३१५, ३१६, ३१७, ३१८, ३१९, ३२०, ३२१, ३२२, ३२३, ३२४, ३२५, ३२६, ३२७, ३२८, ३२९, ३३०, ३३१, ३३२, ३३३, ३३४, ३३५, ३३६, ३३७, ३३८, ३३९, ३४१, ३४२, ३४३, ३४४, ३४५, ३४६, ३४७, ३४८, ३५०, ४७३, ४७६, ४७७, ४७८

वीरमित्रोदये संस्कारप्रकाशः, (वी. मि. सं.) ३४२

वीरमित्रोदये समयप्रकाशः, (वी. मि. स.), ३५४, ३५५, ३५६, ३५७, ३६०, ३६८

शङ्खः, २६८, ३०३

शङ्खस्मृतिः, ८६, ९१, १२४

शतपथब्राह्मणम्, (श. ब्रा.), ४८, ६२, ६७, ६८, ७३, ८९

शब्दकल्पद्रुमः, ३३३

शुद्धितत्त्वम्, ८०

शोभालालशर्मा, ४८०

समयप्रदीपः, ४२६

सामवेदः, (सा. वे.), ९२, ९३, ९४, ९५
सिद्धान्तकौमुदी, ७२
स्मृतिमुक्ताफलम्, ९३, ९४
स्मृतीनां समुच्चयः, ८६
हरदत्तः, ७२, १५४, १५६, १५९, १८०, १८१, १८२, १८३, १८७, १९१, १९२, २०३, २०४, २१७, २३७, २३८, २३९, २४१, २५३, २५७, २६५, २६९, २७३, २८६, २८७, २९०, २९१, २९६, ३०२, ३०६, ३१९, ३३८, ३४३, ३४४, ३५५
हरदत्तमिताक्षरा, १८६
हेमाद्रिः, ३१६
हेमाद्रिः, कालनिर्णयः, (हे. का.), ३५५, ३५६, ३५७, ३५८, ३५९, ३६०, ३६१, ३६२, ३६३, ३६४, ३६५, ३६६, ३६७, ३६८, ३६९, ३७०, ३७१, ३७२, ३७३, ३७४
हेमाद्रिः, दानखण्डः, (हे. दा.), ४५७, ४५८, ४५९, ४६०, ४६१, ४६२, ४६३
हेमाद्रिः, व्रतखण्डः, (हे. व्र.), ४६४, ४६५, ४६६, ४६७, ४६८, ४६९, ४७०, ४७१, ४७२, ४७३, ४७४, ४७५, ४७६, ४७७, ४७९, ४८०

## APPENDIX E

### *Index of Half Verses*[1]


अ

*अंशभाक् तत्र, पैठी., ४०

अंशान् द्वासप्तति यावद्, ब्रह्मपु., ४५०

*अंशुम्, शङ्खः, १२९

अकार्यमन्यत्कुर्याद्वा, मनुः, हारी., ३३१

अकृतं मण्डलं ये तु, ब्रह्मपु., २२१

*अकृतप्रातराशः, आप., १०८

अकृते वैश्वदेवे तु, नर.पु., १७१

अकृत्वा वैश्वदेवं तु, भवि.पु., २१६

अकृत्वा स्वयमाहारं, महाभा., १७३

अकृत्वेहात्मनः शुद्धिं, यमः, ३२०

अक्षताभिः सपुष्पाभिः, पद्मपु., १३९

अक्षमाला तु कर्तव्या, योगि., १०४

*अक्षरं तर्प, बौधा., १२१

अक्षरं त्वक्षरं ज्ञेयं, मनुः, ९९

अक्षरं त्वक्षरं विद्याद्, यमः, १००

अगम्यागमनात् स्तेयात्, योगि., ८२

अगस्तये नारदाय, ब्रह्मपु., ३८१

*अगस्तिरग्निः, वि.पु., २५१

*अगस्त्यम्, शङ्खः, १२८

अगस्त्याय दद्यात्यर्घ्यं, नर.पु., ४५१

अगस्त्येन पुरा राजन्, महाभा., ३१४

अगस्त्यो दक्षिणामाशाम्, ब्रह्मपु., ४५०

*अग्न आयूंषि, हारी., ९५

*अग्नये जातवेदसे, श.लि., १५२

*अग्नये सोमाय, वि.स्मृ., १५५

अग्नयेऽतिथिमिच्छन्ति, यमः, १९९

*अग्नावग्निर्धन्व, गौत., १५५

*अग्निः प्रजापतिः, बौधा., ११९

अग्निः सन्निहितः कार्यो, ब्रह्मपु., ४१३

*अग्निः समिद, हारी., ९६

*अग्निगुरुशुश्रूषा, हारी., १४४

अग्निचित्कपिला सत्री, छाग., यमः, ३०

*अग्निरस्मि जन्मना, हारी., २२८

अग्निराप्याययतां धातून्, वि.पु., २५०

*अग्निरिव ज्वलन्न, आप., १८०

अग्निवच्च द्विजं प्राहुः, हारी., १८०

अग्निश्च भृगुशापाच्च, ब्रह्मपु., ४२९

*अग्निश्च सर्वदेवानां, वि.स्मृ., २१

अग्निष्टोमं गोसवं च, भवि.पु., ४७५

अग्निष्टोमस्य यज्ञस्य, भवि.पु., ४७५

अग्निष्वात्तांस्तथा सौम्यान्, पद्मपु., ११७

*अग्निष्वात्तान्, शङ्खः, १२६

अग्निष्वात्तान् सोमपांश्च, योगि., ११३

*अग्निसन्ताम्, शङ्खः, १२५

अग्निहोत्रं जरत्कन्या, यमः, १९९

*अग्निहोत्रमति, आप., २६

*अग्नीधम्, शङ्खः, १२५

अग्नीन् हुत्वा विधानेन, मनुः, वि.स्मृ., १७५

*अग्नीषोमीय, आप., २६५

अग्नेः सोमस्य चैवादौ, मनुः. १५४

अग्नौ प्रास्ताहुतिः सम्यग्, मनुः, १४९


[1] A star indicates a prose passage.

अग्न्यादिर्गौतमेनोक्तो, छ.का., १४९
अग्रं चतुर्गुणं प्राहुः, मार्क.पु., १७३
*अग्रं च देयम्, आप., १६६
अग्रमग्रं चरन्तीनां, वसि., ७५
अग्राह्यास्त्वागता ह्यापो, योगि., ८१
अग्रे भोजयेदतिथीन्, बौधा., २१२
अघं स केवलं भुङ्क्ते, मनुः, २१४
,, ,, यमः, २१५
अघमर्षणं देवकृतं, वसि., श.लि., ९२
अघमर्षणसूक्तस्य, शङ्खः, ५९
अघमर्षणसूक्तेन, योगि., ५२, ६५
अङ्गरागैः सुगन्धैश्च, ब्रह्मपु., ३९८
अङ्गरागैश्च विविधैः, ब्रह्मपु., ४०२
अङ्गवङ्गकलिङ्गैश्च, ब्रह्मपु., ४१०
अङ्गानि समतां यान्ति, दक्षः, १८
*अङ्गिरसम्, शङ्खः, १२८
अङ्गुल्या दन्तकाष्ठं च, भवि.पु., २९४
अङ्गुष्ठमात्रं पुरुषं, मत्स्यपु., ४४८
अङ्गुष्ठमात्रः पुरुषो, बौधा., २३४
अचिन्तितमनाहूतं, परा., शाता., २०३
आच्छिन्नपद्मपत्रेण, वरा. पु., ५६
*अजमनम्, शङ्खः, १२९
अजस्य दशवर्षाणि, भवि. पु., ४०९
*अजाम्, शङ्खः, १२७
*अजामहिष्योश्च, गौत., २९५
अजेन धुन्धुना चैव, महाभा., ३२५
*अजेकपादम्, शङ्खः, १२९
अज्ञानादथवा लोभात्, दक्षः, ३
अट्टालकश्मशानेषु, ब्रह्मपु., ४४६
अतः परमृतुस्नाता, ब्रह्मपु., ४४४
अतः शृणुध्वं मांसस्य, याज्ञ., ३११
अत ऊर्ध्वं देवयज्ञः, श.लि., १५२
अत एव मया तेऽद्य, स्कन्दपु., ४१७
अतसीपुष्पवर्णस्तु, मत्स्यपु., ४६९
अतस्तदात्मको लोकः, स्कन्दपु., ४१७
अतिथिं तं विजानीयात्, परा., शाता., २०३
अतिथिं तत्र संप्राप्तं, वि.पु., १७४
*अतिथिं निराकृत्य, आप., १८५
*अतिथिं पूज, बुधः, २११
अतिथिं पूजयेद्यस्तु, यमः, २००
अतिथिः पूजितो यत्तु, यमः, १९६
*अतिथिः श्रोत्रियो, श.लि., १७६
अतिथिग्रहणार्थाय, वि.पु., १७४
*अतिथिपूजने, वि.स्मृ., २६७
अतिथिभ्योऽग्र एवैतान्, मनुविष्णू, २१२
अतिथिर्गृहमभ्येत्य, देव., १९९
अतिथिर्यत्र वै ग्रामे, यमः, १९९
अतिथिर्यस्य भग्नाशो, परा., १९९
,, ,, यमः, १९८
अतिथिर्वैश्वदेवान्ते, परा., १९९
*अतिथिश्च यदा, हारी., १७८
*अतिथीनेवाग्रे, आप., १६६
*अतिदेवा हि ब्राह्मणाः, श.लि, १७७
अतिद्रुतं तथास्पष्टं, भवि.पु., ४७७
*अतिमित्रत्र, शङ्खः, १२८
*अतियुक्तम्, शङ्खः, १२९
अतीतानागतो भोगो, देवीपु., ३६०
अतीत्य सर्वदुःखानि, महाभा., ३२४
अतीर्थगमनात्पुंसः, देव., ३४३
अतुला हर्षसंपत्तिः, स्कन्दपु., ४२०
*अतृप्तिश्चान्नस्य, आप., २३६
*अता न प्राणैः, हारी., १७९
अतोऽन्यथा तु योऽश्नीयाद्, बृह., ३१६
अतोऽन्यथा तु सव्येन, योगि., ११३
अतोऽन्यथा प्रवृत्तिस्तु, मनुः, ३१२
अतोऽन्यथा वाचयानो, भवि.पु., ४७६
अतोऽन्यथा वृथामांसम्, महाभा., ३१७
अतो राजर्षयः सर्वे, महाभा., ३१४
अतोऽर्थं तु महीमानं, ब्रह्मपु., ४३९
अतोऽर्थं पूजनीया सा, ब्रह्मपु., ४०७
अतोऽर्थं महती प्रोक्ता, भवि.पु., ४०९
अतोऽर्थं विधिवत्कार्या, ब्रह्मपु., ४२१

